आत्मतृप्तमुदासीनं मुक्तमाहुर्मनीषिणः । सदैकरूपरूपस्य मात्रा कापि न विद्यते ॥ १२ ॥

ब्रह्मा—

के संसारं प्रपद्यन्ते के च गच्छन्ति निर्वृतिम् । कौतूहलं हि भगवन् ब्रूहि तत्वं यथातथम् ॥ १३ ॥

संसारबन्धमोक्षौ

श्रीभगवान्—

फलकामनया कर्म विहितं वैदिकं भजन् । बध्यते निःस्पृहः कर्म भजमानो न बध्यते ॥ १४ ॥

ज्ञानं वैषयिकं यस्य चक्षुरादिनिबन्धनम् । बध्यते स परे देवे यस्य ज्ञानं स मुच्यते ॥ १५ ॥

ब्रह्मा—

मुक्तात्मनश्च भवतो भेदः कः पुरुषोत्तम । एतदाचक्ष्व भगवन्नातिगुह्यं यदि प्रभो ॥ १६ ॥

मुक्तात्मन. परमपुरुषस्य च भेदः

श्रीभगवान्—

अहमेव भवन्त्येते न भेदस्तत्र कश्चन । यथाहं विहराम्येवं तथा मुक्ताश्च देहिनः ॥ १७ ॥

ब्रह्मा—

बध्नन्ति पुरुषं के ते हेतवः कर्महेतवः । कर्मपाशैर्निगलितान्पुरुषान् भ्रामयन्ति ये ॥ १८ ॥

बन्धहेतवः

श्रीभगवान्—

त्रिभिरेव गुणैर्व्यस्तैः समस्तैः पूर्वमीरितैः । सत्वादिभिः क्रिया चापि त्रिविधा संप्रवर्तते ॥ १९ ॥

तया संसारमृच्छन्ति पुरुषाः पूर्ववृत्तयः । एवमेव सुरश्रेष्ठ यन्मां त्वं परिपृच्छसि ॥ २० ॥

ब्रह्मा—

कथमेभिर्गुणैर्योगः [1]पुरुषस्योपजायते । कर्मपाशैर्विमुच्येत मोक्ष्यमाणश्च पूरुषः ॥ २१ ॥

विषयवशाद् गुणत्रययोगवियोगौ

श्रीभगवान्—

पुरुषस्य गुणा ये ते देहधर्मानुवर्तिनः । विषयस्य वशादेते भवन्ति न भवन्ति च ॥ २२ ॥

विषयस्वरूपप्रश्नः

ब्रह्मा—

कोऽसौ विषय इत्युक्तः पुरुषाणां महेश्वर । यस्य योगाद्भवन्त्येते न भवन्ति च ते गुणाः ॥ २३ ॥

1. श्री. पुरुषो यस्य जायते.

—⊷ विषयनिरूपणम् ⊶—

श्रीभगवान्—

त्रिगुणा प्रकृतिर्ब्रह्मन् विषयो देहिनः स्मृतः। तद्योगाद्बध्यते जन्तु [1]स्तद्योगाद्विमुच्यते ॥ २४ ॥

जानाति पुरुषो नित्यं प्रकृतिं त्रिगुणात्मिकाम्। सा च प्रसूते सततं [2]निद्रालस्यं [3]पृथग्विधम् ॥२५॥

स्वरूपं विस्मरत्येष [4]निद्रया विवशः स्वयम्। स बन्ध इष्यते पुंसां किं भूयः श्रोतुमिच्छसि ॥ २६ ॥

इति श्री पाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे मुमुक्षुसंसारमोचनं नाम
॥ चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः।

ब्रह्मा—

प्रकृत्या तस्य संयोगो जायते केन हेतुना। एतदाचक्ष्व भगवन् रहस्यं दुर्लभं [5]मम ॥ १ ॥

—⊷ प्रकृत्या पुरुषस्य संयोगे हेतुः ⊶—

श्रीभगवान्—

[6]यन्माया कारणं ब्रह्मन्ननादिरविनाशिनी। युनक्ति पुरुषं सैषा प्रकृत्या गुणरूपया ॥ २ ॥

—⊷ भगवतः प्रसादात् प्रकृत्या वियोगः ⊶—

मत्प्रसादं विना तस्य न विरामोऽस्ति कस्यचित्। यावन्नाहं प्रसीदामि तावन्माया दुरत्यया ॥ ३ ॥

—⊷ पूर्णकामस्य भगवतः प्रसादे निबन्धनम् ⊶—

ब्रह्मा—

पूर्णकामस्य देवस्य प्रसादे किं निबन्धनम्। न जाने कारणं तस्य तन्मे ब्रूहि निबन्धनम् ॥ ४ ॥

श्रीभगवान्—

वर्णानामाश्रमाणां च मर्यादा या मया कृता। तां ये समनुवर्तन्ते प्रसादस्तेषु मे महान् ॥ ५ ॥

तस्मात्संसारिणां पुंसां मत्प्रसादं विना क्वचित्। निःश्रेयसकरं नान्यद्बुध्यस्व कमलासन ॥ ६ ॥

ब्रह्मा—

भगवन् देवदेवेश जानामि पुरुषोत्तम। त्वामेव जगतां मन्ये स्रष्टारं कमलेक्षण ॥ ७ ॥

प्रभवन्ति यतो लोकाः प्रलयं यान्ति यत्र च। भगवन् तदशेषेण ज्ञातुमिच्छामि शंस मे ॥ ८ ॥

—⊷ सृष्ट्यादिनिरूपणम् ⊶—

प्रकृतिः पुरुषश्चोभे मम रूपे दुरत्यये। अनुप्रविश्य द्वितयं क्षोभयाम्यहमिच्छया ॥ ९ ॥

---

1. श्री तद्वियोगात्  2. म. निद्रामस्य.  3. म पृथग्विधाम्  4. श्री निद्रयापि वशस्त्वयम्.
5. श्री. मतम्.  6. श्री. मन्माया.

प्रकृतिस्त्रिगुणा ब्रह्मन् अनादिरविनाशिनी । पुरुषाधिष्ठिता सूते स्थावराणि चराणि च ॥ १० ॥
गुणसाम्यात्मनस्तस्मात्पुरुषाधिष्ठितात्पुनः । अजायत महत्तत्वं त्रिविधं त्रिविधैर्गुणैः ॥ ११ ॥
अहङ्कारस्ततो जातस्तस्य तिस्रो विधाः स्मृताः । वैकारिक [1]स्तैजसश्च भूतादिश्चेति तत्त्रिधा ॥१२॥
वैकारिकादहङ्कारात्सात्विकात् पञ्च जज्ञिरे । ज्ञानेन्द्रियाणि पञ्चैव राजसात्तैजसात्पुनः ॥ १३ ॥
कर्मेन्द्रियाणि जातानि भूतादेस्तामसादथ । शब्दतन्मात्रमभवत्तच्चाकाशमजीजनत् ॥ १४ ॥
स्पर्शमात्रं तथाकाशात्तस्माद्वायुरजायत । रूपमात्रं ततो वायोस्तस्मादग्निरजायत ॥ १५ ॥
रसमात्रमजन्यग्नेस्तस्मादापः प्रजज्ञिरे । गन्धतन्मात्रमद्भ्योऽपि गन्धमात्रात्तथा मही ॥ १६ ॥
शब्दैकगुणमाकाशं शब्दस्पर्शगुणोऽनिलः । शब्दस्पर्शौ तथा रूपं तद्वदग्नेरुदाहृताः ॥ १७ ॥
[2]शब्दस्पर्शौ [3]रसो रूपं चातुर्गुण्यमपां स्मृतम् । शब्दस्पर्शौ रूपरसौ गन्धः पञ्चगुणा मही ॥ १८ ॥
नानावीर्याः पृथग्भूतास्ते सृष्टाः संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुं ततस्ते संहताः स्वयम् ॥
महदादिविशेषास्ताः प्रधानपुरुषेरिताः । अण्डं ममांशभूतस्य पद्मनाभस्य पद्मज ॥ २० ॥
[4]नाभेरजायत ततो जगद्योनिरभू[5]द्भवान् । सर्गादौ प्रकृतेरेवमुद्भूतमखिलं जगत् ॥ २१ ॥
लीयते प्रकृतावेव कल्पान्ते कमलासन ॥

ब्रह्मा—
मन्ये त्वया जगत्सृष्टं विधृतं च त्वया विभो । कालरूपस्त्वमेवैकः कल्पान्ते सञ्जहर्थ च ॥ २२ ॥
इदानीं वद मे ज्ञानं ब्रह्मसिद्धिदमच्युत । यज्ज्ञात्वा न पुनर्जन्म [6]मरणं भवबन्धनम् ॥ २३ ॥

## ब्रह्मज्ञानद्वैविध्यम्

श्रीभगवान्— "ज्ञानं द्विविधमाख्यातं सत्वाख्यं च क्रियात्मकम् ।"
सत्वाख्यस्य क्रियाख्येन सिद्धिरव्यभिचारिणी ॥ २४ ॥

ब्रह्मा—
ज्ञानं क्रियात्मकं तावत् वद कीदृग्विधं प्रभो । येनाभ्यस्तेन सत्वाख्यं यास्यामि ब्रह्मसिद्धिदम् ॥२५॥

## सत्वक्रियात्मकज्ञानलक्षणम्

श्रीभगवान्—
यमश्च नियमश्चैव क्रियाख्या [7]द्विविधा स्मृता । ताभ्यां ज्ञानं च सत्वाख्यं प्राप्नोत्येव न संशयः ॥२६॥
ब्रह्मण्यभिन्नं सत्वाख्यं ज्ञानाज्ज्ञेयमवाप्यते । [8]ज्ञानान्मुक्तिः परानन्दे [9]परमात्मनि पद्मज ॥ २७ ॥

1. श्री. तैजसिको भूतादिश्च त्रिधा विधाः. 2. म ग्रन्थे एष अर्धश्लोकः नास्ति. 3. श्री. रूपरसौ. 4. श्री. नाभेरजीजनस्तस्मात्. 5. म. श्री. महान्. 6. म. श्री. कारणं. 7. श्री. विविधा स्मृता. 8. श्री ज्ञेयान्मुक्तिः. 9. म. श्री. परन्धामनि.

ब्रह्मा—

ब्रह्मप्राप्तौ त्वया सम्यगुपायः कथितः [1]पुरा। इदानीं देवदेवेश ब्रूहि मे ब्रह्मलक्षणम्॥ २८॥

—ब्रह्मलक्षणम्—

श्रीभगवान्—

आनन्दलक्षणं ब्रह्म [2]नादरूपमविक्रियम्। क्लेशादिभिरसंस्पृष्टं निष्क्रियं निर्विकल्पकम्॥ २९॥

अद्वन्द्वमनवच्छिन्नं स्वसंवेद्यं निरञ्जनम्। सुसूक्ष्मं स्ववशं स्वैरं स्वयंज्योति [4]रनादिमत्॥ ३०॥

अनन्तमक्षयं शान्तं अदृष्टान्तमवृद्धिमत्। ध्रुवमेकं [5]सदानन्दं चिद्रूपं सर्वगं परम्॥ ३१॥

गतागतविनिर्मुक्तं वासुदेवाह्वयं विभुम्। प्रभवं सर्वभूतानामीश्वरं पुरुषोत्तमम्। ३२॥

स्वभावनिर्मलं नित्यं निस्तरङ्गं निराकुलम्। निर्मर्यादं गुणतीतं सगुणं सर्वकामदम्॥ ३३॥

हीनवर्णैरसंसेव्यं मोक्षमार्गैरतर्कितम्। अध्येयं ध्येयमाश्चर्यमवाङ्मनसगोचरम्॥ ३४॥

षाड्गुण्यविग्रहं सर्वशक्ति स्वाश्रयमाश्रितम्। भूतेशं भूतकृद्भूतं तमसः परतः स्थितम्॥ ३५॥

प्रधानं प्रकृतेरन्यद्भोग्यं भोक्तृनिरङ्कुशम्। प्रमाणप्रत्ययातीतं सर्वतोऽक्षिशिरोमुखम्॥ ३६॥

सर्वतः पाणिचरणं सर्वमावृत्य [6]विष्ठितम्। बहिरन्तःस्थितं व्यापि [7]सर्वतन्त्रातिशासनम्॥ ३७॥

अजमोङ्कारमव्यक्तं मूलमन्त्रात्मकं शिवम्। [8]मायारूपं च मायाभिन्नित्यतृप्तमणोरणुम्॥ ३८॥

महतोऽपि [9]महास्थूलमतुलं मृदु दीप्तिमत्। अमूर्तं मूर्तमोजस्वि चिद्घनं निरुपद्रवम्॥ ३९॥

पश्यन्नित्थं परं ब्रह्म परेण ज्ञानचक्षुषा। योगयुक्तः सदा मर्त्यः प्राप्नोति च परं पदम्॥ ४०॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे ब्रह्मलक्षणं नाम पञ्चमोऽध्यायः॥

## षष्ठोऽध्यायः।

ब्रह्मा—

सर्वतःपाणिपादादि ब्रह्मणो रूपमीरितम्। अरूपस्याऽपि तत्सर्वं कथयस्व यथातथम्॥ १॥

—भगवतः सर्वतःपाणिपादादित्वनिर्वचनम्—

श्रीभगवान्—

चराचरमिदं कृत्स्नमाक्षिप्तं परमात्मना। यतस्तत्सर्वपाणित्वं तस्य लक्षणमुच्यते॥ २॥

---

1. म. श्री. परः. 2. श्री. आदिरूपं. 3. श्री. दोषादिभिः. 4. म. श्री. रनामयम्. 5. श्री. म. चिदानन्तं. 6. श्री. तिष्ठति. 7. श्री. म. सर्वतःश्रुतिशालिनम्. 8. म. मायारूपमनायासं. 9. श्री. म. महस्थूलममृतं.

देशकालविशेषेण संयुक्तं परमेष्ठिना । यौगपद्येन सततं सर्वतः[1]पात् प्रभुः स्मृतः ।। ३ ।।
तिर्यगूर्ध्वमधश्चोच्चैर्गत्वा भासयते जगत् । रविर्यथा तथा कृत्वा विश्वतश्चक्षु[2]रुच्यते ।। ४ ।।
सर्वं पुरःस्थितं तस्य वस्तुजातं यतस्ततः । विश्वतोमुखता तस्य ब्रह्मणः कमलासन ।। ५ ।।
ज्ञानेन्द्रियाणि सर्वाणि श्रयन्ते शिर उत्तमम् । तथा ज्ञानाश्रयत्वेन ज्ञेयः सर्वशिराः प्रभुः ।। ६ ।।
विदूरमविदूरस्थं तथा व्यवहितेतरे । शृणोति शब्दसङ्घातं तेनासौ सर्वतः श्रवाः ।। ७ ।।
भिन्नो वह्निरयःपिण्डादभिन्न इव दृश्यते । तद्वद्व्यक्ता[3]द्बहिर्भूतो व्यक्तमावृत्य तिष्ठति ।। ८ ।।
[4]आदर्शे निर्मले यद्वदन्तस्था प्रतियातना । दृश्यते तत्र तद्वत्स्याद्विभोरव्यक्तरूपता ।। ९ ।।
[5]सेन्द्रियाधीनविज्ञानो रूपादिषु चतुर्मुख । भगवानमुतो हेतोः सर्वज्ञः कथितो बुधैः ।। १० ।।
परमेण महत्वेन संयोगात्परमात्मनः । व्यापित्वमुच्यते विष्णोरीश्वरस्य मनीषिभिः ।। ११ ।।
अनादित्वमजत्वेन तथैवानन्तता विभोः । परोक्षत्वेन सर्वेषामसदित्युच्यते नृभिः ।। १२ ।।
[6]असंविद्विषयो ब्रह्मन् गन्धः पुष्पादिके यथा । त्रिभिर्गुणैरबद्धोऽपि बद्धवत्तेषु तिष्ठति ।। १३ ।।
यथा पुष्करपर्णेषु स्वच्छमम्भः प्रतिष्ठितम् । अन्तर्बहिरभिव्याप्य तिष्ठत्येको [7]महार्णवे ।। १४ ।।
निमग्नस्येव कुम्भस्य बहिरन्तरपां स्थितिः । परक्षेत्रज्ञयोरैक्यमात्मनोः श्रुतिचोदितम् ।। १५ ।।
क्षेत्रज्ञस्यास्य बाहुल्यं देहभेदात्प्रतीयते । एकस्यैव हि बिम्बस्य दर्पणेषु [8]यथा तथा ।। १६ ।।
भूतादिपञ्चसङ्घातं क्षेत्रं तत्र व्यवस्थितः । जीवो यस्तं विदुः प्राज्ञाः क्षेत्रज्ञं परसंज्ञितम् ।। १७ ।।
अबुद्धिबोध्यमस्पष्टं व्यक्तस्योपरि विष्ठितम् । परात्परतरं विष्णुं सूरयो ज्ञानचक्षुषा ।। १८ ।।
विदन्ति [9]न तमज्ञानात् ज्ञानगोचरमक्षरम् । परस्य व्यापिनो देहचलनाद्या न विभ्रमम् ।। १९ ।।
यथा घटस्थमाकाशं नीयमाने घटे [10]मतिः । यातीति वस्तुतो नैव भेदोऽस्ति परजीवयोः ।।२०।।
पद्मपत्रसहस्रेषु सूचि[11]भिन्नेष्वनुक्रमात् । सूक्ष्मत्वात्कालभेदस्तु [12]यथा नैवोपलभ्यते ।। २१ ।।
तथैव परमात्मायं [13]नाज्ञाणुः परिकीर्तितः । दूरस्थमज्ञाः पश्यन्ति हृत्पद्मे विष्ठितं सदा ।। २२ ।।
वितत्य वायुराकाशं यथैकस्तिष्ठति प्रभुः । तथा चराचरं विश्वं व्याप्य तिष्ठत्यजः स्वयम् ।। २३ ।।
स्रष्टुं [14]संहर्तुमीशानो रश्मीनभ्युदितो रविः । यथा तथा जगत्सर्वं स्रष्टुं हर्तुं प्रभुर्हरिः ।। २४ ।।
स्वं परं चापि विषयं प्रकाशयति चिद्घनः । यथा प्रदीपः स्वस्यापि पटादेश्च प्रकाशकृत् ।। २५ ।।

---

1. म. प्राक्. 2 श्री. म. रत्युतः 3. म. पृथक्. 4 श्री. म आदर्शो निर्मलो यद्वत् मलिनेन तिरोहितः 5 श्री. म. नेन्द्रिया 6. श्री. म. स्वसविद्विषय. 7. श्री म. युगार्णवे. 8. श्री. यथा भिदा 9 श्री. म देशिकास्तृप्ता. 10. श्री. म. यथा 11. श्री. म भिन्नेषु च क्रमात्. 12. श्री. त्रिधा. 13. श्री. म. विज्ञानात्. 14. म. विहर्तुं.

वर्णैः सितादिभिर्हीनस्तद्वद्भासयते हरिः। षड्भिर्गुणैरन्वितत्वात् ज्ञानादिभिरनन्यगैः ॥ २६ ॥
भगवान् कथितः सद्भिः परमात्मा जगन्मयः। दध्नि सर्पिस्तिले तैलं माधुर्यं च गुडादिषु ॥ २७ ॥
अभिन्नं तत्वतो द्रव्यादमूर्तं तत्र च स्थितम्। उपलम्भन [1]सामर्थ्याद् दृश्यते न तदीक्ष्यते ॥२८॥
अजोऽप्यमूर्तिः सर्वेषामन्तरात्मा परः पुमान्। ज्ञानिनां भावना योगादुपलब्धिपथं गतः ॥ २९ ॥

ब्रह्मा—

चराचरेषु सर्वेषु यद्वस्तु व्याप्य विष्ठितम्। अमूर्तमपृथग्भूतं स्वसंवेद्यं विदन्ति के? ॥ ३० ॥
विद्यया भगवन् मह्यं तानाचक्ष्व यथातथम्।

—पञ्चरात्रविधिदीक्षितानां विष्णुमायोत्तरणम्—

श्रीभगवान्—

पञ्चरात्रोक्तमार्गेण ये दीक्षां चक्रमण्डले। कृत्वा समर्चनं विष्णोः द्विषट्काक्षरविद्यया ॥ ३१ ॥
आराधयन्ति शास्त्रोक्तविधिना देशिकोत्तमाः। तेषां हृदम्बुजे साक्षादाविरास्ते परः पुमान् ॥३२॥
तरन्ति विष्णुमायां ते न तरन्तीतरे जनाः ॥

ब्रह्मा—

वस्तु साक्षात्कृतं कीदृग् लक्षणं तस्य कीदृशम्। भगवन् कथ्यतां सर्वं मयि चेदस्त्यनुग्रहः ॥ ३३ ॥

—निदिध्यासितवस्तुस्वरूपम्—

श्रीभगवान्—

वालाग्रशतभागस्थं प्रधानपुरुषात्मकम्। गमनागमनैर्हीनमणिष्ठं तदणोरपि ॥ ३४ ॥
महिष्ठं[2]महितो वस्तु परमानन्दविग्रहम्। वृद्धिक्षयविनिर्मुक्तं सर्वगं[3]संविदात्मकम् ॥ ३५ ॥
[4]सद्रूपं प्रणवाद्वेद्यं अप्रतर्क्यं प्रमाणवत्। एवं वस्तु[5]च कांक्षन्ते हृदये योगिनः सदा ॥ ३६ ॥

—तस्य स्थूलादिरूपेण त्रैविध्यम्—

स्थूलं सूक्ष्मं परं तस्य त्रिविधं रूपमीरितम्।

—स्थूलादीनां लक्षणम्—

स्थूलं तत्सकलं ज्ञेयं सूक्ष्मं सकलनिष्कलम् ॥ ३७ ॥
परं निष्कलमेव स्याद्रूपं कमलसम्भव। रूपं सहस्रशीर्षादि सकलं परमात्मनः ॥ ३८ ॥
तेजः पुञ्ज[6]मिवाभाति रूपं सकलनिष्कलम्। सच्चिदानन्दरूपादिरूपं निष्कलसंज्ञितम् ॥ ३९ ॥

1. श्री सान्निध्यात्   2 श्री. महतो   3. श्री. भावनात्मकम्   4. श्री. तद्रूपं.
5. म. चकास्त्यस्य.   6. म. सपादादि.

—◦◇ प्रकृतिविकृतिनिरूपणम् ◇◦—

प्रकृतिर्विकृतिश्चोभे [1]स्वरूपे परमात्मनः। [2]सत्यादिगुणसङ्घातः प्रकृतिर्विकृतिः पुनः ॥ ४० ॥
पुरुषः परमात्माख्यः तेनेयं त्रिगुणात्मिका।

—◦◇ परमात्माधिष्ठितायाः प्रकृतेर्जगत्सर्गादिः ◇◦—

अधिष्ठिता जगत्सर्वं प्रसूते चेतनात्मकम् ॥ ४१ ॥
संहरत्यपि तत्सर्वं नियोगादेव तस्य सा ॥

—◦◇ स परमात्मा नारायणः ◇◦—

एक एव परो देवो नानाशक्तिसमन्वितः ॥ ४२ ॥
करोति सर्गसंहारौ स च नारायणः स्मृतः। [3]नानादिक्कैः पुरद्वारैर्यथा पुरनिवासिनः ॥ ४३ ॥
अन्त[4]र्विशन्ति [5]यद्वच्च पुरुषाः पुरुषं परम्। उपासका विशन्त्यन्तर्विद्यया परया सदा ॥ ४४ ॥

—◦◇ ब्रह्मरन्ध्रादिषु रुक्माभत्वादिगुणविशिष्टब्रह्मस्वरूपध्यातुः दग्धकल्मषस्य ब्रह्मप्राप्तिः ◇◦—

ज्योतिर्मण्डलमध्यस्थं रुक्माभं पुरुषं परम्। हृत्पद्मकर्णिकारूढं शङ्खचक्रगदाधरम् ॥ ४५ ॥
चतुर्भुजं [6]भावयन्ति स्थानेष्वेतेषु योगिनः। ब्रह्मरन्ध्रे भ्रुवोर्मध्ये नाभिचक्रे गलावटे ॥ ४६ ॥
जिह्वाग्रे तालुमध्ये च भावयन्तो यतेन्द्रियाः। पूर्वजन्मकृतं कर्म दग्ध्वा यान्ति सनातनम् ॥४७॥

—◦◇ निष्कामकर्मिणामन्येषामपि ब्रह्मप्राप्तिकथनम् ◇◦—

विष्णोराराधनपराः पञ्चकालपरायणाः। अष्टाङ्गयोगसिद्धाश्च द्वादशाक्षरचिन्तकाः ॥ ४८ ॥
वासुदेवाश्रया मर्त्या वासुदेवपरायणाः। सर्वपाप [7]विशुद्धाश्च यान्ति ब्रह्मसनातनम् ॥ ४९ ॥

—◦◇ मुक्तात्मपरमात्मनोः सदृष्टान्तं भेदगर्भाभेदनिरूपणम् ◇◦—

वर्षधाराः पृथग्भूताः पतन्त्यो [8]दिवि मेघतः। भूमावैक्यं यथा यान्ति तद्वद्ब्रह्मणि योगिनः ॥५०॥
[9]अर्णो नदीनां बहुधा [10]तत्स्वरूपादि [11]भेदवत्। प्रविष्टं वारिधेर्वारि नोदकाद्व्यतिरिच्यते ॥ ५१ ॥
तथैव ब्रह्मणि परे मुक्तात्मानश्चतुर्मुख। एकीभावेन तिष्ठन्ति त[12]त्सालोक्यं यथा भवेत् ॥ ५२ ॥
एतद्रहस्यमुदितं निषत्सूपनिषत्सु च। [13]योगः प्रकाशितस्तुभ्यं मया कमलसम्भव ॥ ५३ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे ब्रह्मप्राप्त्युपायकथनं नाम षष्ठोऽध्यायः ॥

---

1. म. द्वे रूपे 2 म सत्वादि. 3 म नानादिग्भि.. 4 श्री. विशति. 5. म श्री तद्वच्च.
6. म. श्री. भावयन्तः 7 म श्री. विशुद्धात्मा. 8 श्री इछवतोदिवि, म जवतो दिव..
9. श्री अस्त्रो. 10 म. श्री. रस. 11. श्री भेदवित्. 12 म. सालोक्यादि वा 13. श्री. उक्त..

# सप्तमोऽध्यायः ।

—ब्रह्मप्राप्तिसाधनज्ञानोत्पत्तिकारणप्रश्नः—

ब्रह्मा—

ब्रह्मणः प्राप्त्युपायस्य ज्ञानस्योत्पत्तिकारणम् । उच्यतां तदशेषेण प्रसादो मयि चेत्तव ॥ १ ॥

—निष्कामकर्मभिर्निर्मलीकृतचित्तस्य ब्रह्मज्ञानोत्पत्तिनिरूपणम्—

श्रीभगवान्—

बाह्योपरागरहितं निर्मलं तस्य जायते । विज्ञानं यस्य भगवत्समाराधनकर्मभिः ॥ २ ॥

अनाद्यविद्याविलयो योगाङ्गैश्च यमादिभिः । शौचमिज्या तपश्चर्या स्वाध्यायाभ्यसनं तथा ॥ ३ ॥

ब्रह्मचर्यां मिताहारो मौनमिन्द्रियनिग्रहः । अहिंसा चोपवासश्च स्नानं तीर्थनिषेवणम् ॥ ४ ॥

वैराग्यं पुत्रदारेषु दुष्टाहारविवर्जनम् । अ रता वृद्धसेवा क्षमा मैत्र्यनृशंसता ॥ ५ ॥

परदारपरस्वेषु वैमुख्यं शास्त्रसेवनम् । असक्तता [1]भोग्यवस्तुष्वेतैश्चित्तप्रसाधनैः ॥ ६ ॥

ज्ञानं प्रत्यङ्मुखं जातं तेन जानन्ति तत्पदम् । यत्प्राप्य न निवर्तन्ते जन्ममृत्युविवर्जिताः ॥ ७ ॥

पुरुषाः [2]कर्मनिरता ज्ञानविज्ञानजन्मनि ।

—जीवस्य संसारहेतुनिरूपणम्—

संसारहेतुमधुना कथयामि चतुर्मुख ॥ ८ ॥

शुभाशुभात्मकं कर्म कृत्वा मायावशं गताः । भोगायतनमास्थाय तत्तत्कर्म [3]प्रवाहजम् ॥ ९ ॥

—मोक्षसंसारौ प्रति ज्ञानाधिक्यकर्माधिक्ययोर्हेतुता—

दुःखं सुखं वा पुरुषा [4]भुञ्जते नियतेन्द्रियाः । संसृतिः सा चतुर्वक्त्र तस्याः कर्मैव कारणम् ॥ १० ॥

मुक्तिर्ज्ञानाधिके तस्याः संसृतेरात्मनो भवेत् । [5]कर्माधिके पुनः सैव जायते निरवग्रहा ॥ ११ ॥

संसारहेतुभूतं [6]तत् कर्मज्ञानेन नश्यति । क्षीणे कर्मणि संसारहेतौ मुक्तिरनन्तरम् ॥ १२ ॥

कल्पते संसृतिः कर्महेतुरुक्ता विनिश्चिता । करोति कर्मचाविद्याविवशः पुरुषः स्वयम् ॥ १३ ॥

—सत्वरजस्तमसां शुभाशुभकर्महेतुत्वम्—

गुणा एव त्रयो विद्या समासव्यासवृत्तयः । तैरेव कुरुते कर्म शुभं वा यदि वाऽशुभम् ॥ १४ ॥

तैस्त्रिभिर्त्रिविधा निद्रा जायते कर्मकारणम् । [7]सैषाऽविद्या च माया च कथ्यते कोविदोत्तमैः ॥ १५ ॥

---

1. श्री. भोजनादावेतैश्चित्तप्रसादनम्.—म. भोजनादौ एतैः. 2. श्री. म. कथितो हेतुरिति. 3. म. प्रभावजम्. 4. श्री. म. भुञ्जन्ते हेतुयन्त्रिताः. 5. म. कर्माधिक्ये. 6. म. च. 7. म. सैवा.

सत्वात्सुखमयी निद्रा रजसः कर्मसङ्कुला । तमसो मोहिनी नाम ताभिर्निर्गलितः पुमान् ॥ १६ ॥
[1]संसारतोऽवशः कर्म करोति जनिकारणम् ।

## —उक्तार्थप्रपञ्चनम्—

सत्वादिगुणसंयुक्तं मनो भूतेषु पञ्चसु ॥ १७ ॥
[2]प्रयुक्तं पञ्चधा भिन्नं प्रसूते बहुधा क्रियाः । मनः सत्वगुणोपेतं पृथिवीस्थं यदा भवेत् ॥ १८ ॥
तदा करोति पृथिवीखननादिक्रियां नरः । [3]आराधयेत् प्रतीच्छायां पालनाय नृणां तथा ॥ १९ ॥
रजसिस्थे प्राणिहिंसां मृगयाबुद्धिमेव च । तमसिस्थे तु हृदये च्छेदनं भेदनं तथा ॥ २० ॥
अभिचारवशीकारपरस्वहरणादिकम् । सत्वस्थेऽप्सु जलक्रीडा जलपानं चतुर्मुख ॥ २१ ॥
नदीतरणमित्यादि करोति विवशः पुमान् । [4]रजसा च जलद्रोण्यामवगाहो निमज्जनम् ॥ २२ ॥
सेतुबन्धं समुद्रादौ बाहुभ्यां तरणं तथा । [5]तमसिस्थे तु मनसि जलतीरे विमोचनम् ॥ २३ ॥
कूपे वा पतनं श्वभ्रे करोति पुरुषः सदा । [6]मनस्तेजसि सत्वस्थे [7]सूर्यचन्द्रादिदर्शनम् ॥ २४ ॥
पटुत्वमुष्णभावश्च रत्नहेमादिदर्शनम् । करोति [8]रजसि प्राप्ते खड्गहस्तः समुत्थितः ॥ २५ ॥
मृगान् हन्ति तथा मुष्टिदण्डैश्च [9]भृशताडनम् । तमसिस्थे मनस्यग्नौ रक्तपुष्पादिषु स्पृहा ॥ २६ ॥
श्वसनस्थे गुणे सत्वे शीघ्रयानं च नर्तनम् । गानं प्रलापनं कर्म करोति रजसि स्थिते ॥ २७ ॥
चित्ते गजाश्वरोहादि तथोर्ध्वगमनादिकम् । तमोगुणस्थे मनसि प्रासादारोहणादिकम् ॥ २८ ॥
[10]चित्ते व्योमनि [11]सत्वस्थे निराभासं निराश्रयम् । गमनं राजसे चित्ते दृष्टं [12]जागर्ति यत्पुनः ॥ २९ ॥
स्वापे तदीक्षितं सर्वं [13]मानसे तमसि स्थिते । सर्पदष्ट[14]पदात्मायं सुख[15]दुःखं न बुध्यते ॥ ३० ॥
एवं बहुविधं कर्म पुमान् माया[16]वशङ्गतः । करोति त्रिगुणै[17]र्युक्तः कर्मभिस्तैः पुमालयम् ॥ ३१ ॥
संसारे[18]ऽपि गतो जन्मनाशं च प्रतिपद्यते । यदा प्रसादसुमुखः परमात्मा सनातनः ॥ ३२ ॥
तदा माया[19]विमुक्तश्च योगयुक्तो जितेन्द्रियः । विज्ञानेन परं ब्रह्म प्राप्नोति सुखलक्षणम् ॥ ३३ ॥

---

1 म ससरत्यवश.. 2 म प्रवृत्त. 3 म. आराधने प्रतिष्ठाया पालन वा. 4 म. रजसिस्थजलद्रोण्यामवगाहादिमज्जनम् 5. म. तममिस्थे मनस्यप्सु जलतीरे. 6. श्री. म. अग्नौ चेतसि 7 म श्री. चन्द्रसूर्यादि दर्शनम् 8 म रजस·. 9. श्री मृग 10. म. सत्वे. 11. म चित्तस्थे 12 म. जागृति. 13 श्री तामसज्ञानवर्जितम्.—म मनस्तमसि सस्थिते. 14 म पदात्मान. 15 म दु.खे. 16. म वशानुग.. 17. श्री. युक्त 18. म. पतितो. 19. म. विनिर्मुक्तो.

जीवस्य गुणत्रययोगायोगकारणनिरूपणम्

ब्रह्मा—

एभिर्गुणै[1]स्तथा योगो वियोगो वा [2]कथं भवेत् ।

श्रीभगवान्—

पुरुषस्य गुणा एते त्रयोऽपि कमलासन ॥ ३४ ॥

मायायोगवियोगाभ्यां भवन्ति न भवन्ति च । मायानपायिनी नित्या मयि तिष्ठति शाश्वती ॥३५॥

मायावशं गताः सर्वे भ्रमन्त्यज्ञानमोहिताः । ब्रह्मादयोऽपि किमुत देवाद्याः कमलासन ॥ ३६ ॥

भगवत्प्रसादान्मायानिवृत्तिः

[3]मत्प्रसादावसाना या मदधीना विनश्यति । मायायोगेन बध्यन्ते मुच्यते[4]तां जयन्ति ये ॥ ३७ ॥

भगवत्प्रसादकारणनिरूपणम्

ब्रह्मा—

परिपूर्णस्य भगवन् प्रसादस्तव किंकृतः । न वेद्मि कारणं तत्र तन्मे ब्रूहि यथातथम् ॥ ३८ ॥

श्रीभगवान्—

श्रद्धा भक्तिः समाधिश्च मयि सम्यक् समर्पिता । कारणं शास्त्रदृष्टेन विधिना नान्यथा भवेत् ॥३९॥

सर्वेषां मोक्ष्यमाणानां कारणत्रयमीरितम् । तैर्विना संसरन्त्यन्ये मायापरवशा जनाः ॥ ४० ॥

श्रद्धाभक्तिसमाधीनां विषयविशेषनैयत्यम्

ममावताररूपाणि बुध्वा सृष्टानि मन्मुखात् । अधर्मस्योपशान्त्यर्थं धर्मकामप्रवृद्धये ॥ ४१ ॥

बहूनि बोद्धुं योग्यानि त्रयं तत्र समाचरेत् । सर्वाकारविनिर्मुक्तं रूपं यत्परमात्मनः ॥ ४२ ॥

दुर्विज्ञानं तदेतेषां श्रद्धादीनामगोचरम् । मुक्तिकारणमुद्दिष्टं ब्रह्मन् भूयः किमिष्यते ॥ ४३ ॥

चेतनाचेतनयोरभिन्नकारणत्वनिरूपणम्

ब्रह्मा—

अचेतनं चेतनं च रूपं स्रष्टुं समीक्ष्यते । किमेकयोनिः सा सृष्टिर्योनिभेदः किमेतयोः ॥ ४४ ॥

श्रीभगवान्—

अभिन्नमेकमव्यक्तं रूपं तत्परमात्मनः । अविभक्तं विभक्तं च दध्नि सर्पिरिव स्थितम् ॥ ४५ ॥

अव्यक्तं व्यक्तमापन्नं कदाचित्पुरुषेच्छया । महान् जातस्ततोऽव्यक्तादहङ्कारस्ततोऽजनि ॥ ४६ ॥

[5]अहङ्कारान्मनो जातं तन्मात्रापञ्चकं ततः । इन्द्रियाणि दशैकं च समजायत पद्मज ॥ ४७ ॥

---

1. म. कथं. 2. म. भवेत्कथम्. 3. म. प्रसादादेव सा माया. 4. म. मां भजन्ति.

5. तन्मात्रपञ्चकं जातं अहंकारान्मनस्ततः—इति श्रौ. ग्रन्थे दृश्यते.

महाभूतं पृथिव्यादिपञ्चकं तदनन्तरम्। अचेतनाचेतनाच सृष्टिरेवमुदाहृता ॥ ४८ ॥

—गुणत्रयवशादुत्तमाधममध्यमभावोत्पत्तिः—

त्रिभिरेवं गुणैरेतैरुत्तमाधममध्यमाः। जायन्ते कारणवशात् तान् ब्रवीमि क्रमादहम् ॥ ४९ ॥

—तेषां स्वरूपम्—

भावेषु तेषु भूयिष्ठं सत्वं श्रेयाँश्चतुर्मुख। भूयिष्ठराजसो मध्यो जघन्यस्तमसाधिकः ॥ ५० ॥

—उत्तमसत्वभावार्चनायाः भोगमोक्षसाधनत्वम्—

तत्र सत्वाधिकैर्भावैरर्चना मम तोषिणी। भोगो वाप्यपवर्गो वा फलं तेषां यथेप्सितम् ॥ ५१ ॥

—रजस्तमोभावयोः क्षयिफलत्वम्—

रजसाधिकभावेन यजन्ते ये द्विजातयः। तेषां त्रिविष्टपे वासः पुनरावृत्तिलक्षणः ॥ ५२ ॥
संसृतिश्च क्षयेत्तस्य यजन्ते ये तमोधिकाः। तेषां भुवःस्थले वासः क्षये भूलोकसंसृतिः ॥ ५३ ॥
यक्षभूतपिशाचादि [1]यजन्ते तमसाधिकाः। उषित्वा नरके घोरे जन्म स्याज्जङ्गमादिषु ॥ ५४ ॥

—भगवद्याजिनामेवाऽपुनरावृत्तिलक्षणफलावाप्तिः—

गत्वा गत्वा निवर्तन्ते यज्ञ[2]धर्मपरायणाः। अद्यापि न निवर्तन्ते ये ममाराधने स्थिताः ॥ ५५ ॥
आब्रह्मसदनाल्लोकाः जायन्तेऽर्वागवस्थिताः। मल्लोकवासिनो भूयः संसरन्ति न कुत्रचित् ॥ ५६ ॥
तस्माद्भजस्व मां ब्रह्मन् सत्वभावस्थितः सदा।

—आहारत्रैविध्यम्—

सत्वादिगुणयुक्तानामाहारस्त्रिविधः स्मृतः ॥ ५७ ॥
स्निग्धाश्च मधुरा हृद्यास्तिष्ठतः प्रथमे गुणे। कट्वाम्ललवणप्रायाः [3]मध्यमे तिष्ठतः प्रियाः ॥ ५८ ॥
रसहीनं यातयामं पूतिगन्धं चिरोषितम्। उच्छिष्टं प्रीतिजननं जघन्यगुणवर्तिनः ॥ ५९ ॥
सत्वात्सुखमयी निद्रा रजसः कर्मसङ्कुला। निद्रा दिवानिशं तस्य तमो यस्याधिको गुणः ॥६०॥

—सत्वादिनिष्ठानां गतिस्त्रैविध्यम्—

सत्वस्थस्योर्ध्वगमनं स्थितिर्मध्ये रजोधिके। अधोगतिस्तामसानां त्रिविधानां त्रिधा गतिः ॥ ६१ ॥

—सत्वज्ञानादयः सत्वनिष्ठस्य गुणाः—

तत्र सत्वं निर्मलत्वात्प्रकाशकमनावृतम्। सत्यं ज्ञानं तपो मौनं धृतिः शौचं शमः क्षमा ॥ ६२ ॥
इत्यादयः सत्वनिष्ठे गुणाः कल्याण[4]कारिणः।

---

1. म. यजनं तमसाधिकैः. 2. म. कर्म. 3. म. मध्यमेऽपि गुणे स्मृताः. 4. म. कारणम्.

अहङ्कारादयो रजोनिष्ठस्य गुणाः

अहङ्कारस्त्रिधा दर्पः क्रोधो दम्भ इतीरितः ॥ ६३ ॥
गुणा रजोगुणस्यैते तामसस्य तु कथ्यते ।

पैशुन्यादयस्तमोनिष्ठस्य गुणाः

पैशुन्यं परनिन्दा च निद्रालस्यं नृशंसता ॥ ६४ ॥
इत्यादयस्तमोधीना गुणाः प्रोक्ताश्चतुर्मुख ।

रजस्तमसोर्विलये सत्वविवृध्या ज्ञानादिप्राप्तिः

प्रलीनयोरितरयोर्गुणयोश्च जघन्ययोः ॥ ६५ ॥
सत्वे प्रवृद्धे विज्ञानमुत्कृष्टं जायतेऽधिकम् । तेन प्राप्नोति परमं स्थानं प्रकृतिदुर्लभम् ॥ ६६ ॥
यत्प्राप्य न निवर्तन्ते संसारे दुःखसम्भवे । देहं त्यजन्तः सत्वस्थाः लोकान् यान्ति सनातनान् ॥ ६७ ॥
रजस्स्थस्य प्रलीनस्य जन्ममात्रं महाकुले । प्रलये तमसिस्थस्य पुरुषस्य चतुर्मुख ॥ ६८ ॥
मूढयोनिषु जन्म स्यान्निकृष्टासु पुनःपुनः । त्यजतोऽन्ते स्मृतिर्येषु देहसम्बन्धमात्मनः ॥ ६९ ॥
भावेषु तं तमाप्नोति पुरुषो भावनावशात् । पुंसामेवं बहुविधाः गतयः समुदाहृताः ॥ ७० ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे गतिविशेषकथनं नाम सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ।

विज्ञानोपायतपश्चर्यास्वरूपप्रश्नः

ब्रह्मा—

विज्ञानोपायरूपेण तपश्चर्या च कीर्तिता । भगवन् तत्तपः कीदृक् किं वा तत्कथ्यतां मम ॥ १ ॥

वाचिकादि तपस्त्रैविध्यम्

श्रीभगवान्—

वाङ्मनःकायजत्वेन तपस्तत् त्रिविधं मतम् । देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥ २ ॥
अहिंसनं ब्रह्मचर्यं तपः शारीरमीरितम् । अनुग्रहपरं वाक्यं सत्यं भूतोपकारकम् ॥ ३ ॥
स्वाध्यायाभ्यसनं चेति वाचिकं कथिकं तपः । सन्तोषः सततं ब्रह्मचिन्तयाऽत्मविनिग्रहः ॥ ४ ॥
भावशुद्धिः [1]सौम्यता च तपोमानसमीरितम् ।

---

1. श्री सौम्यभावः.

—सात्त्विकादिभेदेन पुनस्त्रैविध्यम् —

श्रद्दधानैः कृतं सम्यक् अफलाकांक्षिभिर्नरैः ॥ ५ ॥

सात्त्विकं तत्तपो ज्ञेयं तद्धि विज्ञानकारकम् । सत्कारमानपूजादिसिध्यर्थं राजसं तपः ॥ ६ ॥

तामसं तु तपस्तत्स्यात् यत्परोत्सादनादिकम् । कर्म तद् द्विविधं नैव विज्ञानोत्पत्तिकारणम् ॥ ७ ॥

— सृष्टिकारणलयाधिष्ठानस्थितिकालानां निरूपणम् —

ब्रह्मा—

कुतः प्रसूतिर्जगतां तेषां नाशः क संमतः । कियन्तं कालमेतेषां स्थितिर्मे भगवन् वद ॥ ८ ॥

श्रीभगवान्—

आपन्ना प्रकृतिर्व्यक्तिं सूते सर्वं चराचरम् । तत्रैव लीयते सर्वं ब्राह्मे आयुषि च स्थितिः ॥ ९ ॥

— चतुर्मुखायुः परिमाणम् —

कालो युगसहस्राख्यः दिवारात्रिश्च तावती । ब्रह्मणस्तेन मानेन शतमायुश्च वत्सराः ॥ १० ॥

— ब्रह्मण एकस्मिन् दिने चतुर्दश मनवः —

भवन्ति मनवस्तस्य दिने तत्र चतुर्दश । एकोनसप्ततिः कालो मनोरेकस्य कीर्तितः ॥ ११ ॥

परस्मिन् ब्रह्मणि ब्रह्मन् अर्वाचीने लयं गते । प्रलयो महदाख्योऽयं चतुरानन कीर्तितः ॥ १२ ॥

— अवान्तरलयो दैनन्दिनः —

अवान्तराश्च प्रलयाः दिनाना[1]मवसानजाः ।

— सृष्टिस्थितिलयानामविश्रान्तिः —

भवन्ति धातृभिस्तैस्तैर्महांश्च प्रलयः पुनः ॥ १३ ॥

चक्रवद्व[2]र्तते कालो न विरामोऽस्ति कर्हिचित् ।

ब्रह्मा—

किंरूपा प्रकृतिर्देव सूते कथमिदं जगत् । ब्रूहि सर्वमशेषेण भगवन् भूतभावन ॥ १४ ॥

— प्रकृतिस्वरूपनिरूपणम् —

श्रीभगवान्—

अन्यूनाधिकरूपाणां सत्वादीनां चतुर्मुख । गुणानां संहतिर्या सा प्रकृतिः सद्भिरुच्यते ॥ १५ ॥

— भगवदधिष्ठितायास्तस्या जगद्योनित्वम् —

अचेतना सा विश्वस्य योनिरव्याकृता स्वयम् । नित्या सूते जगत्सर्वं नियोगात्परमात्मनः ॥ १६ ॥

---

1, म. वेधसो जनाः.  2. म. प्रलयः.

अविभक्ता विभक्ता च दध्नि सर्पिरिव स्थिता। सङ्कर्षणाख्यो भगवान् प्रकृतावेव ताः प्रजाः॥ १७॥
रुद्रः संहरति स्वैरं ब्रह्मणो दिवसक्षये। दिवसादौ जगत्सर्वं पुनरेवासृजत्प्रजाः ॥ १८ ॥
लोककर्ता स्वयं ब्रह्मा यथापूर्वं यथाक्रमम्। इत्येवं सर्गसंहारौ मया सम्यगुदीरितौ ॥ १९ ॥

ब्रह्मा—

ऐश्वर्यमष्टगुणवत् किं तद्यद्भक्तिमान् पुमान्। आप्नोति कीदृक् सायुज्यं युञ्जानस्य सुमेधसः॥२०॥
लब्ध्वा चैश्वर्यमखिलं केन प्रतिनिवर्तते।

अणिमाद्यैश्वर्यनिरूपणम्

श्रीभगवान्—

अणिमा महिमा चापि [1]यावानेवास्य काम्यते। तावन्तीमिष्टमाप्नोति गरिमा लघिमाऽपि वा॥२१॥
इष्यमाणमवाप्नोति लघिम्ना तेन पूरुषः। देशं विदूरमप्येष क्षणमात्रेण गच्छति ॥ २२ ॥
यथा शाल्मलितूलस्य तथा देहस्य लाघवम्। गरिम्णा तेन देहस्य पर्वतस्येव नोद्धृतिः ॥ २३ ॥
आहारेषु विहारेषु यथाकामं प्रवर्तते। सङ्कल्पेनैव भूतानि [2]वश्यानि कमलासन॥ २४ ॥
परकायप्रवेशं च यथेष्टं प्रतिपद्यते। एभिरष्टभिरेवैते विहरन्ति यथेप्सितम्॥ २५ ॥
यदि मां विस्मरेयुस्ते सुखनिद्राविमोहिताः। [3]मद्भक्तिक्षरणादेव प्रतिस्रोतोवहा जनाः ॥ २६ ॥
जायन्ते पुनरुत्कृष्टवंशेषु महतां सताम्। [4]पुनर्भजेयुर्मामेव यजन्ते सिद्धिकाम्यया ॥ २७ ॥
मुच्यन्ते मत्प्रसादेन जन्मनोऽस्माद्विगर्हितात्।

सायुज्यादिभेदेन मुक्तेस्त्रैविध्यम्

भेदेन चाप्यभेदेन मिश्रेण च चतुर्मुख ॥ २८ ॥
त्रिधैव मुक्तिरुदिता भेदे कैङ्कर्यलक्षणा। मुक्तिर्यथेह लोकेषु [5]हरिचर्या परा नराः ॥ २९ ॥
देवस्य तद्वदेवैते वैकुण्ठे परमात्मनः। लोके तस्य समीपस्था मुक्तात्मानः समाहिताः ॥ ३० ॥
वसन्ति किङ्कराः सन्तः तत्प्रसादपराः सदा। अभेदमुक्तिरत्यन्तमैक्य स्यात्परजीवयोः ॥ ३१ ॥
*आत्मनो भावना [6]चैक्ये सोऽहमित्येवमात्मिका। यस्य [7]तस्यैकतापत्तिर्मुक्तिर्जीवपरात्मनोः॥ ३२॥

---

1 श्री यावदेवास्य 2 म पश्यन्ति 3 श्री तद्भक्ताश्च क्षणादेव—म मद्भक्तिस्मरणादेव. 4. श्री पुनर्यजेयु मामेव यदि ते 5 श्री म परिचर्या 6 म द्यैक्ये [*समीहितैव सर्वेषा फलानामुत्तमोत्तमम् एष अर्धश्लोक श्री-ग्रन्थे-31½—32 श्लोकस्य अन्तरे दृश्यते] 7 श्री नात्मैकतापत्ति मुक्ति जीवपरमात्मनो। नास्यैकतापत्ति जीवात्मपरमात्मनो इति पाठान्तरद्वय श्री ग्रन्थे दृश्यते.—म. यस्यैकतापत्ती जीवात्मपरमात्मनौ.

सिद्धान्ते मिश्ररूपे तु भेदे स्थित्वाऽर्चनादिभिः । तोषयित्वा परं देवं ततो युक्तः समाहितः ॥ ३३ ॥
विज्ञानेनैकतानेन परमात्मनि चिद्घने । ऐक्यं प्राप्नोति सा मुक्तिरुक्ता सायुज्यलक्षणा ॥ ३४ ॥
ऐश्वर्यमणिमाद्यष्टगुणावाप्तिः सुदुर्लभा । मुक्तिर्वा परमानन्दप्राप्तिरूपा यदीप्सितम् ॥ ३५ ॥
पुंसां तदुभयं[1] मुक्तिः प्रसूते परमात्मनि ।

—तत्त्वप्रश्नः—

ब्रह्मा—

बहूनि तत्त्वान्युक्तानि शास्त्रैर्बहुभि[2]रच्युत ॥ ३६ ॥
तेषु तत्त्वेषु सर्वेषु भावना विहिता क्रमात् । समाधिरेकतानैव[3]शास्त्रविज्ञानमुत्तमम् ॥ ३७ ॥
प्रसूते येन तद्ब्रह्म तत्तेभ्यः परमं मतम् । प्राप्नुवन्ति नराः सर्वे तत्त्वानि कथयस्व मे ॥ ३८ ॥

—एकपञ्चाशत्तत्त्वानि—

श्रीभगवान्—

चत्वारिंशद्दशैकं च तत्त्वानि परमात्मनः । रूपाण्येव चतुर्वक्त्र संक्षेपात्कथयाम्यहम् ॥ ३९ ॥
भावना तेष्वविकृता सिद्धये कल्पते[4]परा । वक्तव्यानि ततस्तानि हेतोस्तान्यवधारय ॥ ४० ॥
अव्यक्तं बुद्धिरन्वक्च ततः परमहङ्कृतिः । तन्मात्रा[5]पञ्चकान्येकादश चोक्तान्यनुक्रमात् ॥ ४१ ॥
पृथिव्यादीनि भूतानि पञ्चैव कमलासन । माया कालकलारागविद्या[6]दीनि यतः क्रमात् ॥ ४२ ॥
नन्दश्चैव महानन्दो महाविद्या समीरिता । क्षेत्रज्ञश्च शिवो ब्रह्मा पुरुषस्तदनन्तरम् ॥ ४३ ॥
सत्याच्युतौ तथाऽनन्तो विष्णुः[7]सर्वश्च निर्वृतिः । विश्वश्च पुरुषश्च द्वौ परमेष्ठी समीरितः ॥ ४४ ॥
नाम्नाऽनिरुद्धः प्रद्युम्नः सङ्कर्षणसमाह्वयः । वासुदेवश्च[8]चत्वारिंशद्दशचैकं चतुर्मुख ॥ ४५ ॥
*ततः प्रोक्तमिदं सर्वं यत्रोत्पन्नं चराचरम् । तस्य प्रपञ्चो रूपाणि तेषां नामानि कः क्षमः ॥ ४६ ॥
[9]इह सर्वाण्यशेषाणि वक्तुं वाचामपीश्वरः । [10]इत्येषा कथिता तुभ्यं तत्त्वानां नामपद्धतिः ॥४७॥
संज्ञा विकल्पैस्तत्त्वानि भावयन्तः[11]समाधिभिः । युञ्जाना योगिनः शश्वत्प्राप्नुवन्ति परं पदम् ॥४८॥

**इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे तपोविशेषकथनं नाम अष्टमोऽध्यायः ॥**

1. श्री. भक्ति:. 2 श्री म रुच्यते. 3 श्री म सोऽपि 4 श्री पुरा 5 'पञ्चधाह्येवं दश चाम्बोरुहासन' इति क्वचित् पाठ. 6 म नियतय: 7. म सर्वत्र । पुरुष प्रकृति. स्वयम्– इति पाठान्तरं 8 श्री म. चत्वारि दशचैव चतुर्मुख 9 श्री म नेष्टे. 10 श्री म दिगेष.
*ओतप्रोतमिदं सर्व यत्रोत्पत्तिः क्षयस्त्रिधा इति 45½ श्लोकस्थाने क्वचित् श्लोकार्धं दृश्यते.
11. श्री. स्वकर्मभिः.

# नवमोऽध्यायः ।

## भुवनकोशस्वरूपनिरूपणम्

ब्रह्मा—

अज्ञानसागरं तीर्त्वा विद्यापारमुपेयिवान् । उच्यतां सांप्रतं मह्यं भुवनानि चतुर्दश ॥ १ ॥

[1]रूपतो नामतश्चापि जिज्ञासा परमेश्वर ।

श्रीभगवान्—

यत्र प्रतिष्ठितं यच्च मानं रूपं च यादृशम् ॥ २ ॥

भुवनानां तदखिलं चतुर्मुख मुखैः शतैः । वक्तुं निरवशेषेण कः क्षमेत प्रपञ्चतः ॥ ३ ॥

बोद्धुं वा निखिलं शक्तः को वा धारयितुं क्षमः । तद्ब्रवीमि समासेन सर्वं त्वं[2]बुध्यसे यथा ॥ ४ ॥

## पृथिव्याः परिमाणम्

चतुरश्रा भवति भूः पञ्चाशत्कोटियोजनैः । विस्तीर्णा सर्वतो दिक्षु घनं वै कोटियोजनम् ॥ ५ ॥

द्वीपानि सप्तसन्त्यत्र तावन्तस्तोयराशयः । अङ्गुलीयकवत्सर्वे भूमेरुपरिविष्ठिताः ॥ ६ ॥

## सप्तद्वीपाः

[3]द्वीपानि नामभिस्तावत् कथ्यन्ते क्रमशःशृणु । [4]जम्बूप्लक्षकुशक्रौञ्चाः शाकद्वीपस्तथा परः ॥ ७ ॥

शाल्मली पुष्करो नाम सप्तमश्चतुरानन ॥

## सप्तसमुद्राः

आनुपूर्व्यात्समुद्राँश्च कथयामि यथातथम् ॥ ८ ॥

[5]लवणेक्षुरसौ पश्चात् मैरेयस्तदनन्तरम् । सर्पिर्दधि पयस्त्वन्यत्ततः शुद्धोदकं परम् ॥ ९ ॥

## द्वीपसमुद्रपरिमाणम्

भूभागे मध्यमे जम्बूद्वीपमानं च कथ्यते । लक्षयोजनविस्तारं सर्वतस्तदनन्तरम् ॥ १० ॥

विस्तारं वारिधिः क्षारस्तादृग्द्वीपमनन्तरम् । उत्तरोत्तरमेकैकं द्विगुणायामविस्तरम् ॥ ११ ॥

---

1 (*a*) रूपतो नामतो वा तत् विज्ञापय रमेश्वर, (*b*) रूपतो मानतश्चापि विज्ञाने परमेश्वर. इति पाठद्वय मुद्रित-ब-ग्रन्थे दृश्यते 2 श्री बोधसे 3 श्री द्वीपाना नामभिस्तावत् कथ्यमानं क्रम शृणु. 4 म जम्बूप्लक्षकुशक्रौञ्च शाकद्वीप तथापरम् । शाल्मली पुष्कर नाम सप्तम चतुरानन ।।

(*a*) जम्बूप्लक्षकुशश्चैव शाकशाल्मलिकस्तथा । क्रौञ्चपुष्करनामान सप्तद्वीपाः प्रकीर्तिताः ।।

(*b*) जम्बूप्लक्षशाल्मलिश्च कुशक्रौञ्चस्तथापर. । शाकपुष्कर नामा च सप्तम परिकीर्तितः ।।

इति पाठद्वय अन्यत्र दृश्यते. 5 लवणेक्षुसुराक्षीरदधिसर्पि तथोदकम् इति पाठान्तरम्

द्वीपानि षट् समुद्राश्च परिशिष्टाश्चतुर्मुख । द्वीपं जम्बूसमाख्यातं विभजेन्नवधा पुनः ॥ १२ ॥

मेरोः सन्निवेशविशेषः

भागे तु मध्यमे मेरोः उच्छ्रायो लक्षसंमिताः । योजनानां क्षितेरन्तर्मग्नः षोडश संख्यया ॥ १३ ॥
सहस्राणां योजनानां शिष्टोभागः प्रकाशते । क्षितेरूर्ध्व[1]रेमयश्च[2]पर्वतो मूर्ध्नि[3]विस्तृतः ॥ १४ ॥
द्वात्रिंशच्च सहस्राणां योजनाना[4]मयं पुनः । कर्णिकावच्च भूपद्ममध्ये सम्यगवस्थितः ॥ १५ ॥
शृङ्गैः शतसहस्रेण शतयोजनविस्तृतैः । तत्संख्यापरिणाहैश्च तस्य पार्श्वे[5]महीधरान् ॥ १६ ॥
वक्ष्यामि चानुपूर्व्येण यथा तदवधारय ।

मेरोर्दक्षिणतस्त्रयो वर्षाचलाः

हिमवान् हेमकूटश्च निषदश्चास्य दक्षिणे ॥ १७ ॥
एते वर्षाचलाः प्रोक्तास्त्रयः कमलसम्भव ।

त्रीणि वर्षाणि

वर्ष भारतमाख्यातं प्रथमं तदनन्तरम् ॥ १८ ॥
नाम्ना किंपुरुषं[6]तस्मात् हरिवर्षमनन्तरम् ॥

उत्तरतस्त्रयो वर्षाचलाः

उत्तरे मेरुशैलस्य क्रमा[7]द्वर्षमहीधराः । नीलः श्वेताह्वयः शृङ्गी नाम्ना वर्षत्रयं पुनः ॥ १९ ॥

त्रीणि वर्षाणि

रम्यं हिरण्मयं वर्षमुत्तराः कुरवस्तथा । उक्तानि षट् च वर्षाणि प्रत्येकं परिमाणतः ॥ २० ॥
योजनानां सहस्राणि नव वर्ष तु मध्यमम् । इलावृतं समाख्यातं तन्मध्ये मेरुरीरितः ॥ २१ ॥
मेरोश्चतुर्दिशं तत्र विस्तीर्ण योजनानि षट् । त्रीणि चैव सहस्राणि चत्वारस्तत्र पर्वताः ॥ २२ ॥
विष्कम्भरूपैरचिता योजनायुतमुच्छ्रिताः ।

दिशाचलाना नामानि

मन्दरो दिशि पूर्वस्यां याम्यायां गन्धमादनः ।
प्रतीच्यां विपुलो नाम्ना कौबेरीमधितिष्ठति (सुपार्श्वः) ॥ २३ ॥

चतुर्दिक्षु चत्वारो वृक्षाः

दिशासु तासु चत्वारो वृक्षाः केतुवदुन्नताः । कदम्बभूरुहो जम्बूः पिप्पलो विटपी वटः ॥ २४ ॥
शतानि दश चैकं च तेषां प्रत्येकमायतिः ॥ २५ ॥

---

1 श्री सुमेरोश्च. 2 श्री म सर्वत 3 श्री. म विस्तरा 4 श्री. शत 5. म. महीधराः. 6. श्री. म. तस्य. 7. श्री. वर्षेषु भूधराः.

जम्बूवृक्षप्रभावः

जम्ब्वा तया समाख्या स्यात् द्वीपस्य कमलासन। फलानि गजमानानि पतितानि शिलातले ॥२६॥
शीर्यन्ते शतधा तेषां रसवाहा सरिद्वरा। जाम्बूनदीति कथिता तत्तटो[1]र्वीनिवासिनः ॥ २७ ॥
पीत्वा रसं जरामृत्यु वलीपलितवर्जिताः। *जाम्बूनदाख्यां कल्पन्ते सौवर्णा कल्पसंपदः ॥ २८ ॥

भद्रकेतुमालेलावृतवर्षाणा स्थानविशेष.

भद्राश्ववर्षमाख्यातं मेरोः प्राच्यां चतुर्मुख। पश्चिमं केतुमालाख्यं एतयोर्वर्षयोः पुनः ॥ २९ ॥
इलावृतं समाख्यातं मध्यमं तत्पुरोदितम् ॥

चतुर्दिक्षु चत्वार्युद्यानानि

वनं चैत्ररथं पूर्वं दक्षिणं गन्धमादनम् ॥ ३० ॥
[2]वैभ्राजं पश्चिमं मेरोर्वनं नन्दन[3]मुत्तरम् ॥ ३१ ॥

चत्वारि सरांसि

अरुणोदं सरः पूर्वं महाभद्रंततः परम् ॥ ३२ ॥
[4]शीतोदकं प्रतीचीनं उदीचीनं तु मानसम्। देवोपभोगयोग्यानि सरांसि कथितानि ते ॥ ३३ ॥

मेरोश्चतुर्दिक्षु प्रत्येकं पञ्चपञ्चकेसराचलाः

शीतातश्च मुकुन्दश्च कुररी माल्यवानथ। वैकङ्को नाम पञ्चैते [5]पौरस्त्याः केसराचलाः ॥ ३४ ॥
*त्रिकूटोऽङ्गिरसश्चोभौ पन्नगः[6]कूटलाह्वयः। निषधो दक्षिणे तस्य तावन्तः केसराचलाः ॥ ३५ ॥
शिखिवासोऽथ वैदूर्यः कपिलो गन्धमाधनः। [7]जारुधिः पञ्चमो ब्रह्मन् केसराः पश्चभूधराः ॥ ३६ ॥
शङ्खकूटः समाख्यातः सामाख्यातस्तथर्षभ। हंसः समाख्यया नागः तथा कालाञ्जनप्रभः ॥ ३७ ॥
उदीच्यां केसराः पञ्चविंशतिः केसराचलाः।

मेरुशृङ्गमध्ये ब्रह्मपुरीसन्निवेशः

योजनानां सहस्राणां द्वात्रिंशन्मानसंमिते ॥ ३८ ॥
विस्तारो मूर्ध्नि शैलस्य मेरोर्भागेऽथ मध्यमे। चतुर्भिर्दशभिश्चैव सहस्रैर्निर्मिता पुरी ॥ ३९ ॥
योजनैः संमितो धातुः कर्णिकेवाचलाम्बुजे। विदिक्षु दिक्षु चाष्टासु परितो ब्रह्मणः पुरी ॥ ४० ॥

पूर्वादिदिक्षु लोकपालनगर्यः

इन्द्रादिलोकपालानां[8]पुरः पूर्वादिषु स्थिताः। विस्तारायाममानेन शतयोजनसंमिताः ॥ ४१ ॥

---

1 विनिवासिन [*नस्वेदो न च दौर्गन्ध्य नेन्द्रियाणामपि क्षय । भवन्ति तेषां नीरोर्वि मृद्दस्तद्रस रञ्जिताः ।। इत्येक श्लोक –श्री म ग्रन्थे दृश्यने ]    2 ब वैराज    3. ब. उत्तरे.
4. श्री. सहस्रोद    5 म पूर्वस्या    * एषश्लोक 35 म ग्रन्थे लुप्त    6. श्री. कुचलाह्वयः.
7. श्री. जारुथ. पश्चिमा–म. जारुगश्च.    8. श्री पुर्य

पुरी भवति माघोनी नाम्ना चैवामरावती । सहस्रगोपुरद्वारप्राकारपरिघाकुला ॥ ४२ ॥
तेजोवती पुर्याग्नेयी याम्यां संयमनी पुरी । रक्षोवती राक्षसी पूः शुद्धवत्यथ वारुणी ॥ ४३ ॥
वायोर्गन्धवती ख्याता नाम्ना सौम्या महोदया । यशस्विनी भवस्योक्ता केसराचलभूमिषु ॥ ४४ ॥
भगवन्मूर्तिभेदानां पुरः सन्ति परिष्कृताः ।

चतुर्दिक्षु गङ्गाविभागः

भित्वेन्दुमण्डलं गङ्गा भगवत्पादजन्मभूः ॥ ४५ ॥
दिवः पतन्ती प्रत्याश[1]मभ्याशं ब्रह्मणः पुरः । चतुर्दिक्षु[2] वहन्ती सा चतुर्धा भवति स्वयम् ॥४६॥
[3]सिता चालकनन्दा च सुचक्षुर्भद्रया सह । चतस्रो नामभेदाश्च दिग्भेदाश्च चतुर्मुख ॥ ४७ ॥
[4]सीतान्तरिक्षगा पूर्वशैलान्निष्क्रम्य निम्नगा । याति पूर्वेण वर्षेण भद्राश्वेन च संज्ञया ॥ ४८ ॥
प्रविष्टा सागरमुखं दक्षिणेन तथाध्वना । भारतं वर्षमन्येति शैलात्सप्तमुखा तता ॥ ४९ ॥
प्रविष्टाऽलक[5]नन्दा सा नदी त्रैलोक्यपावनी । सुचक्षुः पश्चिमाच्छैलात् केतुमाला[6]त्स्वयं पुनः ॥ ५० ॥
अतीत्य वर्षमम्भोधिमेति योषिद्यथा पतिम् । भद्रा गिरिरुदीचीनां देशानुत्तरतः कुरून् ॥ ५१ ॥
अतीत्य वारिधिं याति निम्नगा सरितां पतिम् ।

लोकपद्मप्रकारकल्पनम्

आनीलनिषधायामौ माल्यवान् गन्धमादनः ॥ ५२ ॥
मध्ये तयोर्मेरुशैलः कर्णिका पङ्कजे यथा । भारतं केतुमालं च भद्राश्वं[7]कुरुसंज्ञकम् ॥ ५३ ॥
पत्राणि लोकपद्मस्य मर्यादा शैलतो बहिः । हेमकूटश्च निषधो दक्षिणोत्तरमायतौ ॥ ५४ ॥
मर्यादापर्वतौ ज्ञेयौ कैलासो गन्धमादनः । अशीतियोजनायामौ पूर्वापरमहोदधी ॥ ५५ ॥
संस्पृशन्तौ[8]पारियात्रनिषधावधि भूभृतौ । मेरोः पश्चिमभूभागे पूर्वोत्तरमथाश्रितौ ॥ ५६ ॥
त्रिशृङ्गो[9]जारुधिर्वर्षपर्वतौ मेरुभूभृतः । उत्तरेण स्थितौ प्राप्य पूर्वापरमहोदधी ॥ ५७ ॥
पर्वतानामवस्थानमानन्त्यान्न प्रपञ्च्यते । शैलानामन्तरद्रोण्यः सेव्यन्ते सिद्धचारणैः ॥ ५८ ॥
अन्यैश्च पुण्यकृद्भिस्ता दैत्यदानवकिन्नरैः । भौमा ह्येते कृताः स्वर्गाः दुर्लभाः[10]पापकर्मभिः ॥ ५९ ॥

लोकरक्षार्थं भद्राश्वादिषु भगवतो वासः

ज्ञानमूर्तिर्हयग्रीवो भद्राश्वे वसति स्वयम् । वर्षेषु मूर्तयो विष्णोः मर्यादा पर्वतेषु च ॥ ७० ॥
वसन्ति लोकरक्षायै नानारूपविशेषिताः ।

1. म. मव्यासं. 2. म. पतन्ती. 3. म. सुता. 4. म. सुता. 5. म. नन्दाम्भोनिधिं. 6. श्री. ह्वयं. 7. म. कुरवस्तथा. 8. म. पारियात्रश्च. 9. म. वारिधी. 10. ब. पापदेहिनाम्.

—किंपुरुषादीनां भोगभूमित्वोपपादनम्—

यानि किंपुरुषादीनि वर्षा[1]ण्येतेषु पद्मज ॥ ६१ ॥

निरातङ्काः प्रजाः शश्वन्न शोको न भयं तथा । नोदन्या न बुभुक्षा च न द्वेषो नायुषः क्षयः॥ ६२॥

सन्ति तेषां सहस्राणि वर्षाणि द्वौ च विंशति । आयुर्न तेषु देशेषु भौममम्भो न वर्षति ॥ ६३ ॥

देवो न च ऋतुभेदोऽस्ति न कालो युगभेदवान् । सदा कृतयुगः कालो वर्तते चतुरानन ॥६४॥

धर्मश्चतुष्पात्सकलो ध्यानमेवार्चनं हरेः । पर्वताः सरितश्चापि यत्र यत्र पुराणि च ॥ ६५ ॥

ग्रामाश्च सन्ति बहवः स्वधर्मनिरताः सदा । ब्राह्मणा भूमिपाश्चापि प्रजापालनतत्पराः ॥ ६६ ॥

स्वे स्वे कर्मण्यभिरताश्चातुर्वर्ण्यमवस्थिताः । चातुराश्रम्यमप्येवं यथोक्तमवतिष्ठते ॥ ६७ ॥

इति पाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे जम्बूद्वीपादिप्रमाणवर्णनं नाम नवमोऽध्यायः ॥

---

# दशमोऽध्यायः ।

(भारतवर्षवर्णनम्)

श्रीभगवान्—

आदाक्षिणात्यादम्भोधेराशैलाच्च हिमालयात् । देशोऽयं भारतं वर्षं भूरेषा कर्मिणां नृणाम् ॥ १ ॥

योजनानि सहस्राणि विस्तार[2]श्चैव कथ्यते । स्वर्गापवर्गफलदं कर्म कार्यं नृणामिह ॥ २ ॥

सह्यो महेन्द्रो मलयः शुक्तिमानृक्षनामवान् । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ ३ ॥

इहैव क्रियमाणस्य कर्मणो नरकं फलम् । वर्षेष्वन्येषु सर्वेषु केवलं[3] भुज्यते फलम् ॥ ४ ।

इहैव चातुराश्रम्यं चातुर्वर्ण्यमवस्थितम् । कृतादियुगभेदानां चतुर्णामिह संभवः ॥ ५ ॥

दानं यज्ञं तपो मर्त्याः परलोकफलार्थिनः । इह कुर्वन्ति यज्ञेशं यजन्ते पुरुषोत्तमम् ॥ ६ ॥

श्रेष्ठं तद्भारतं वर्षं सर्ववर्षेषु सम्मतम् । फलार्थिनः कामयन्ते कर्मभूषु जनिं बुधाः ॥ ७ ॥

सहस्राणि तथैवास्मिन् दिव्यानि पुरुषः परः । आस्ते धामानि नद्यश्च पुण्याः सन्ति सहस्रशः ॥८॥

ग्रामाः पुरः पत्तनानि भवन्ति च परःशतम् । द्वीपेषु[4] षट्सु चान्येषु सन्ति वर्षाणि सप्त वै ॥ ९ ॥

प्रत्येकं सप्त च ब्रह्मन् भवन्ति कुलपर्वताः । वर्णानामाश्रमाणां च भेदास्तत्र व्यवस्थिताः ॥ १० ॥

—पुष्करद्वीपवर्णनम्—

अन्तिमे पुष्करद्वीपे मानसोत्तरपर्वतः । मध्ये वलयवद्भाति तस्योच्छ्रायोऽभिधीयते ॥ ११ ॥

---

1. म. ण्येतानि. 2. म. नव. 3 म भुञ्जते. 4 म पञ्चस्वन्येषु.

योजनानां सहस्राणि पञ्चाशत्तत्समुन्नतिः । [1]तावानेवास्य विस्तारो द्वीपं तद्विभजन्निव ॥ १२ ॥
स्थितः शैलवरो ब्रह्मन् द्वे वर्षे परिमण्डले । शैलस्यान्तर्मानस्य बहिश्च सदृशे उभे ॥ १३ ॥
तन्मूर्ध्नि लोकपालानां इन्द्रादीनां यथा पुनः । पुरः सन्ति पुनस्तासां नामान्यपि यथापुरम् ॥ १४ ॥
देवानामपि चान्येषां तत्र सन्ति पुरः पृथक् । असङ्ख्याता ब्राह्मणश्च पुरी भवति पुष्करे ॥ १५ ॥
स्वादुः स्वच्छोदकैः पूर्णो वारिधिः पुष्कराद्बहिः । तेन तद्वेष्टितं द्वीपं यथान्या[2]न्यर्णवोत्तरैः ॥ १६ ॥

लोकालोकाचलवर्णनम्

स्वादूदकाद्बहिर्भूमिः सर्वा चैव हिरण्मयी । तपनीयमयो ब्रह्मन् लोकालोकाचलो बहिः ॥ १७ ॥
भूलोकस्य समस्तस्य सालवच्चतुरश्रकम् । आवृत्य तिष्ठतस्तस्य योजनायतमुन्नतिः ॥ १८ ॥
विस्तारश्च स एवास्य मूर्ध्नि सर्वत्र च स्वयम् । मूर्तिभेदैरपर्यन्तैः परमः पुरुषः स्थितः ।
कुमुदादिगणाश्चात्र चक्रादीन्यायुधानि च ॥ १९ ॥
देव्यौ महीच लक्ष्मीश्च विष्वक्सेनः पतत्रिराट् । स्थानानि मूर्तिभेदानां विष्णोः परिजनस्य च ॥ २० ॥
सन्ति भूयांसि रम्याणि तत्र तत्र चतुर्मुख । परं पार्श्वं रविस्तस्य न द्योतयति भानुभिः ॥ २१ ॥
आवृत्य तं तमः शैल[3]भागं बाह्यमवस्थितम् । लोकालोकः स च पुनः समन्ताद्वेष्टितो गिरिः ॥ २२ ॥
बहिरण्डकटाहेन महता समनन्तरम् । योजनानामियं पृथ्वी पञ्चाशत्कोटि[4]भिर्मिता ॥ २३ ॥
सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा । अनया ध्रियते सर्वं जगद्धात्री ततः स्मृता ॥ २४ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे भूलोकविस्तारकथनं नाम दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ।

उक्तानुवादपूर्वकमतलादिवर्णनम्

श्रीभगवान्—

एष भूलोकविस्तारः कथितः कमलासन । लोकानधस्तादधुना सप्त वच्मि यथातथम् ॥ १ ॥
अतलं प्रथमो लोको द्वितीयं वितलाह्वयम् । [5]तृतीयं नितलं विद्धि ज्ञेयं तुर्यं गभस्तिमत् ॥ २ ॥
पञ्चमं महदाह्वानं सुतलं षष्ठमीरितम् । पातालं सप्तमं विद्यात्तेचैकैकं समुच्छ्रिताः ॥ ३ ॥
योजनानां सहस्राणि दशैतेष्वतलादिषु । वसन्ति दानवा दैत्याः कालेयाः फणिनस्तथा ॥ ४ ॥

1. म. तावदेवास्य   2 श्री म अर्णवान्तरै   3 म बाह्य   4 म सम्मिता.
5. तृतीय सुतलं ज्ञेयं चतुर्थं नितलाह्वयम् । महत् रसातलं चैव तलातलमिति स्मृतम् ॥ इति अन्यत्र पाठान्तरं दृश्यते.

स्वर्गेऽपि न भवन्त्येव ये भोगास्त्वतलादिषु । भक्ष्यं भोज्यं तथा पेयं स्वादिष्ठं गुणवत्तरम् ॥ ५ ॥
प्रासादभूमयो रम्याः काननानि च निम्नगाः । नागकन्याश्च शतशः सन्ति सर्वाङ्गशोभनाः ॥ ६ ॥
रत्नानां दीप्तजालेन ध्वान्ते ध्वस्ते दिवानिशम् । नार्को न चन्द्रमास्तत्र[1] जनैराकांक्ष्यते क्वचित् ॥ ७ ॥
या प्रीति[2]र्वसतां तत्र न सा मुक्तात्मनामपि । यद्भोक्तुमिष्यन्ते वस्तु दृश्यते तदुपस्थितम् ॥ ८ ॥
न मृग्यते क्वचिद्वापि वस्तु तद्भोगतत्परैः । स्वर्गादष्टगुणं भोगमतलादिषु सप्तसु ॥ ९ ॥
भुञ्जते भोगनिरताः रक्षोदैतेय दानवाः । न दरिद्रा न रोगार्ता न कृशा न च दुःखिताः ॥ १० ॥
बिलानि शतशः सन्ति विपुलानि समन्ततः । सहस्रफणवान् विष्णुः कपिलो नाम सप्तमे ॥ ११ ॥
पातालाख्ये तलादीनामास्ते[3] रक्षैश्च केवलम् । सर्वैः पारिषदैः सार्थं पुरे महति शोभिते ॥ १२ ॥
तामसीं तनुमास्थाय विष्णुरेषामवस्थितः । सप्तानामतलादीनां शेषाख्यो बलवत्तरः ॥ १३ ॥
फणासहस्रसुभगो मणिभिर्दीपयन्[4] दिशः । अनन्त इति च प्राज्ञैः ख्यातो लोके महर्षिभिः ॥ १४ ॥
तस्य मूर्धनि मालेव ध्रियते सकला मही । कुर्वन् सुरादिदैतेयानबलानात्मतेजसा ॥ १५ ॥
किरीटी स्रग्धरः सुभ्रमदघूर्णितलोचनः । नीलवासाः सिततनुः कैलास इव भूधरः ॥ १६ ॥
लाङ्गलं मुसलं बिभ्रदायुधं दैत्यदारणम् । उपास्यमानो वारुण्या शश्व[5]त्यन्निदधानया ॥ १७ ॥
कल्पावसाने वक्त्रेभ्यो यस्य सङ्कर्षणः शिवः । निष्क्रामति जगत् सर्वं संहर्तुं बिषपावकः ॥ १८ ॥
आस्ते संपूजितः सर्वैः पातालतलवासिभिः । नास्य वर्णयितुं शक्ता गुणा वक्त्रशतैरपि ॥ १९ ॥
यदा मदेन मूर्धानं कम्पयन्नवतिष्ठते । तदा महीतलं सर्वं साद्रिवारिधिकाननम् ॥ २० ॥
कम्पते कः क्षमेतास्य बलं वक्तुमशेषतः । अधस्ताच्छेषफणिनः कूर्मः कालानल[6]स्थितिः ॥ २१ ॥
शिखासहस्रजटिलो दुःसहः कमलासन । आधारशक्तिरेतस्यादधस्ताद्वैष्णवी तनुः ॥ २२ ॥
अनन्तरमथैतस्याः भवत्यण्डकटाहकः । कर्मणः पुण्यरूपस्य कथिताः फलभूमयः ॥ २३ ॥
अधुना पापरूपस्य कथ्यन्ते फलभूमयः । भुवो जलस्य चाधस्तान्नरकाख्या भुवः स्मृताः ॥ २४ ॥
रौरवा प्रथमं तच्च महत्पूर्वमनन्तरम् । [7]तप्तपुत्तलिका कुम्भी शूलारोपणमीरितम् ॥ २५ ॥
सूच्यग्रं च क्षुरं चैव खड्ग[8]कृन्तनमन्यतः । सूकरं तैलकुम्भं च महाज्वाला च[9]तापनम् ॥ २६ ॥
असिपत्रं[10]पूतिवहं व्याघ्रसिंह[11]वृकादिकम् । [12]तप्तस्तम्भं शुना भक्ष्यं शाल्मली हेमपुष्पिता ॥ २७ ॥
लालोदकं रक्तसिन्धुः शक्तिभिश्छेदनं तथा । एवमादीनि चान्यानि फलान्याहुर्विकर्मणाम् ॥ २८ ॥

---

1 म जनेनाकाक्ष्यते 2 म सर्वदा 3 म रक्षाय 4 श्री दिशम् 5 म सलिलधारया. 6 म स्थित· 7 ब तप्तलोहमया 8. म कर्तरिमन्यतः. 9 म कम्पिनी. 10 म. पूर्ति. 11. ब. मृगादिकम्. 12. ब. आयस्तम्भं.

नरकाणामसंख्यानामेषा दिक् कथिता मया। पतितास्तेषु पापिष्ठा जन्तवो भुञ्जते फलम् ॥ २९ ॥
न कर्मणां क्षयो ब्रह्मन् विना भोगैः पृथग्विधैः। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते दृढम् ॥ ३० ॥
न स्वर्गो नापि नरको योगविद्यामुपेयुषाम् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे अतलादिलोक[1]परिमाणं नाम एकादशोऽध्यायः

---

## द्वादशोऽध्यायः।

### भुवरादिलोकस्वरूपनिरूपणम्

ब्रह्मा—

विस्तारः कथितो भूमेः लोकाः सप्ततलादिकाः। नरकाणि तथोक्तानि सांप्रतं भगवन्मम ॥ १ ॥
भुवःप्रभृतिलोकानां रूपं मानं च कथ्यताम्।

श्रीभगवान्—

यावत्प्रमाणा पृथिवी विस्तीर्णा परिमण्डला ॥ २ ॥
तावद्भुवःस्थलं ब्रह्मन् विस्तीर्णं परिमण्डलम्।

### भूसूर्ययोरन्तरमानादि

उपरिष्टात् क्षितेर्व्योम्नि लक्षयोजनसंख्यया ॥ ३ ॥
रविस्तिष्ठति [2]तिग्मैः स्वैरंशुभिर्भासयन् जगत्। रथमास्थाय भगवान् बहुयोजनविस्तृतम् ॥ ४ ॥
वामपार्श्वे रथस्यैकं चक्रं दिव्यं प्रतिष्ठितम्। वहन्ति सप्तयः सप्त छन्दांसि स्यन्दनं महत् ॥ ५ ॥
सारथिश्चारुणः सर्वानश्वान्वाहयति स्वयम्। मानसोत्तरशैलस्य मूर्ध्नि स्यन्दनपद्धतिः ॥ ६ ॥
[3]विभागहेतुरुषसामह्नामपि गतिक्रमात्। योगिनां[4] परमः पन्थाः स्मृतः क्लेशपरिक्षये ॥ ७ ॥
मोक्षमाणाः पथानेन यान्ति विष्णोः परं पदम्। उदयास्तमयो नैव[5] भानुः सर्वत्र संमुखः ॥ ८ ॥
दर्शनादर्शने भानोरुदयास्तमयौ मता। यैर्यत्र दृश्यते भानुः स तेषामुदयः[6] स्मृतः ॥ ९ ॥
[7]याति यत्र तिरो[8] भावं तत्रास्तमयधीर्नृणाम्। स्फीता भवन्ति पूर्वाह्णे रश्मयोऽर्कस्य [9]सन्तताः ॥ १० ॥
ह्रस्वी भवन्ति पश्चात्तु यावत्तेषामदर्शनम्। वर्जयित्वा पुरीं धातुः सर्वतो मेरुभूधरे ॥ ११ ॥

---

1. म विस्तारकथनम्. 2. म. मेरुं 3 श्री प्राग्भागे हेतुपुरुषः सामान्यावगतिक्रमात् [इतिः अन्यत्र दृश्यते.] 4 श्री. चरमः. 5. म भानो॰. 6. म. स्मृति॰. 7. म. यदा 8. म. भावः. 9. म. सन्ततम्.

पतन्ति भानवो भानोः तिर्यगूर्ध्वम[1]धस्तथा। सभां तु ब्रह्मणो गत्वा प्रस्थितं [2]पान्ति ये पुनः॥ १२॥
ब्रह्मणस्तेजसा तेन नान्यत्र स्खलनं क्वचित्।

भुवर्लोकः

*भूसूर्ययोरन्तरालं भुवःस्थलमुदाहृतम्। विद्याधराश्च गन्धर्वाः सिद्धाश्च सह दानवैः॥ १३॥
वसन्ति मुदिताः स्वेषु पुरेष्वेव पृथक् पृथक्।

सूर्यध्रुवयोरन्तराले इतरग्रहाणां स्थितिः

लक्षे दिवाकरस्थानाच्छशिनः स्थानमीरितम्॥ १४॥
तस्योपरिष्टात्तिष्ठन्ति नक्षत्राणि यथायथम्। [3]लक्षत्रयमतीत्योर्ध्वं बुधस्य स्थितिरुच्यते॥ १५॥
उशना तु स्थितो लक्षद्वयमुत्तीर्य तिष्ठति। तद्योजनान्यतिक्रम्य भौमस्तिष्ठति सर्वदा॥ १६॥
तावत्प्रमाणेऽवस्थानं गुरोस्तस्योपरि स्थितिः। शनैश्चरस्तत्प्रमाणमतीत्योर्ध्वं रवेः सुतः॥ १७॥
[4]लक्षलक्षक्रमादूर्ध्वं नक्षत्रं मुनयः परे। परः सहस्रमृषयः सन्त्युपर्यूर्ध्व[5]गामिनः॥ १८॥
ततो ध्रुवः स्थितः स्थाने दुरारोहे महर्षिभिः। द्वादशारं महाचक्रं नेमी द्वे तस्य नाभयः॥ १९॥
[6]तिस्रःसन्ति वसन्त्यस्य मासपान्तेष्वरेषु ते। मेषादयोऽप्यरेष्वेवं मीनान्ता द्वादश स्थिताः॥ २०॥
मासा द्वादश चैत्राद्या वसन्तप्रमुखास्तथा। ऋतवः षट्सङ्क्रमाश्च विषुवद्ययनद्वयम्॥ २१॥
सितासितौ च पक्षौ द्वौ युगभेदाश्च वत्सराः। त्रुट्यादयः कालभेदाः चक्रधारास्सुनिष्ठिताः॥ २२॥
ध्रुवः स्थितो नाभिमध्ये प्रादक्षिण्येन राशयः। [7]प्रसव्येन ग्रहाः सर्वे चरन्ति गतिरीदृशी॥ २३॥
कुलालचक्रमध्यस्थमृत्पिण्डसदृशो ध्रुवः। भ्रमन्ति परितः सर्वे ध्रुवं ज्योतिर्गणाः सदा॥ २४॥

सुवर्लोकः

आदित्यध्रुवयोर्मध्ये देशः स्वर्गसमाह्वयः। वसन्ति तस्मिन् गीर्वाणा विमानेषु पृथक् पृथक्॥ २५॥
[8]असंख्याता नित्यतृप्ताः ज्योतिर्मयवपुर्धराः। तेषां गङ्गाजलं सेव्यं पुष्पाणि सुरभूरुहाम्॥ २६॥
[9]धनं च चिन्तामणयः स्त्रियश्चाप्सरसः स्मृताः। सिद्धादयो[10]वसन्ति स्म पुरेषु निरुपद्रवाः॥ २७॥
उपेन्द्रमूर्तिर्भगवानासीनस्तत्र सर्वदा। रक्षति स्वर्गनिलयान् देवादीन् स्वेन तेजसा॥ २८॥
भूर्भुवःस्वस्त्रयो लोकाः लक्षाः पञ्चदश स्मृताः। ततः परं महर्लोकः कोटियोजनमायतः॥ २९॥

---

1. म. अध स्थिता: 2. म यान्ति. * लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथापरे, इति श्री ग्रन्थे दृश्यते. 3. श्री. नक्षत्रमण्डलस्योर्ध्वं बुधस्य स्थानमुच्यते. 4. श्री. लक्षद्वय. 5. ब रेतस:. 6. श्री. म. तिस्र. सन्ति वसन्त्यत्र मासपक्षे विलासिते. 7. म. प्रसिध्येन 8 म. असंख्या. 9. श्री. यानाश्च. 10. म. वसन्त्यस्मिन्.

सनन्दनाद्या मुनयो वसन्ति दशकोटयः ।

—⊷ जनोलोकादिनिरूपणम् ⊶—

ततः परं जनोलोकः कोटिद्वयसमायतः ॥ ३० ॥

अनन्तरं तपोलोकः स्थितः कोटिभिरष्टभिः । *योजनानां सत्यलोकः पुनस्त्रिगुणमायतः ॥ ३१ ॥

कोटित्रयायतं तस्मादूर्ध्वं धातुः पुरं स्थितम् । तद्ब्रह्मलोकं मुनयः गृणन्ति कमलासन ॥ ३२ ॥

लक्षयोजनविस्तारं साल[1]प्रासादगोपुरम् ॥ ३३ ॥

—⊷ प्रकृतिमण्डलस्थविष्णुलोकः ⊶—

उत्तरेण ब्रह्मलोकाद्विष्णुलोकं विदुर्बुधाः । [2]अनन्तरं लोकयोरुक्तं लक्षयोजनसंमितम् ॥ ३४ ॥

—⊷ शिवलोकः ⊶—

तावत्येवान्तरालेऽस्य दक्षिणस्यां दिशि स्थितः । शिवलोकश्चतुर्वक्त्र तस्मिन्नास्ते शिवः स्वयम् ॥ ३५ ॥

—⊷ ऊर्ध्वक्रमेण भगवतः पञ्चलोकाः ⊶—

योजनानां कोटिरूर्ध्वे उल्लङ्घ्य पुरतः स्थिते । सर्वात्मा भगवानूर्ध्वं तस्मात्कोटित्रयायते ॥ ३६ ॥

निवृत्यात्मा निवसति भगवानव्ययः स्वयम् । तावत्येव स्थितो माने विश्वात्मा विश्वकृद्धरिः ॥ ३७ ॥

पुरुषात्मा पुरस्तात्तु चतुष्कोटिप्रमाणके । स्थितः कोटिरतीत्योर्ध्वं [3]पञ्च पश्चादवस्थितः ॥ ३८ ॥

परमेष्ठी स भगवान् पञ्चकं विष्णुविष्टरम् । अध्यास्ते भगवान् नित्यं शङ्खचक्रगदाधरः ॥ ३९ ॥

पञ्चशक्तिमयो विष्णुः कोटियोजनसंमिते । आस्ते श्रीभूमिसहितो वैनतेयेन सेवितः ॥ ४० ॥

—⊷ अण्डभित्तिः ⊶—

अण्डभित्तिरुपर्यस्य स्थितोर्ध्वे कोटियोजने । घनं च तस्याः कोट्या तु संमितं कमलासन ॥ ४१ ॥

शुद्धं हिरण्मयं ज्ञेयं अण्डं तद्विस्मयावहम् ।

—⊷ आवरणसप्तकम् ⊶—

एतेनाण्डकटाहेन लोकाः सर्वे समावृताः ॥ ४२ ॥

उपर्युपर्यमी लोकाः कपित्थफलवत्स्थिताः । तादृशोत्तरसंख्येन वारिणा परिवेष्टितम् ॥ ४३ ॥

आवृत्याण्डं यथा वारिस्थितं तद्वत्तदग्निना । स वायुना तद्वदेव स व्योम्ना च समावृतः ॥ ४४ ॥

सर्वं दशोत्तरं विद्यात् तद्व्योम महतावृतम् । महाँश्च स प्रधानेन प्रधानं तमसावृतम् ॥ ४५ ॥

[4]तदनन्तरपर्यन्तं न संख्या [5]तत्र विद्यते । हेतुभूतमशेषस्य तमसः प्रकृतिः परा ॥ ४६ ॥

---

[* एषः अर्धश्लोकः 32 श्लोकस्य मध्ये दृश्यते. म. ग्रन्थे] 1. म. प्राकारसंकुलम्. 2. म. अन्तरं. 3. म. पुरे पंच पुरे स्थिताः. 4. म. तदनन्तरुपर्यन्तं. 5. म. तस्य.

—अण्डानाम् संख्यातत्वम्—

अण्डानामीदृशं ब्रह्मन् सहस्राण्ययुतानि च। बहुनापि किमुक्तेन संख्या वक्तुं न शक्यते ॥ ४७ ॥

—नारायणेनान्तर्बहिर्व्याप्तिः—

अण्डानि तानि सर्वाणि व्याप्य नारायणः स्थितः। अन्तश्च तेषां भगवान् सर्वव्यापी परः पुमान् ॥४८॥
बहिश्च साक्षिवत्सर्वमीक्षमाणोऽवतिष्ठते।

—चत्वारो व्यूहलोकाः—

महतस्तमसो बाह्ये लोकाः सुबहुयोजनाः ॥ ४९ ॥
चत्वारः क्रमशः सन्ति चतुर्भिः समधिष्ठिताः। व्यूहैः क्रमेण वक्ष्ये ताननिरुद्धः परः स्मृतः ॥ ५० ॥
प्रद्युम्नोऽनन्तरं तेषां सङ्कर्षणसमाह्वयः। वासुदेवस्ततः पश्चाद्व्यूहाख्यः कमलासन ॥ ५१ ॥
विभवाख्यो वासुदेवस्तदनन्तरमीरितः। अनादिर्वासुदेवश्च तयोर्लोकावनुक्रमात् ॥ ५२ ॥
ततो नारायणस्यापि लोकस्तन्निकटे स्थितः। एकैकस्यान्तरं कोटिर्योजनानामुदीरिता ॥ ५३ ॥
तावानेव च विस्तारः तेषामतिमनोहरः।

—वैकुण्ठलोकः—

तेभ्यो बहिःस्थितो लोके यत्रास्ते भगवानजः ॥ ५४ ॥
अनादिर्वासुदेवाख्यः शोभते मणिमण्डपे। शेषभोगासने दिव्ये [1]श्रीभूभ्यां सममास्थितः ॥ ५५ ॥
[2]व्याप्त्यादिभिस्तथाष्टाभिः शक्तिभिः परिवारितः। बालव्यजनहस्ताभिः सेव्यमानाभिरन्तिके ॥५६॥
सेनेशाद्यैः पारिषदैः[3]श्चक्राद्यैरायुधैरपि। प्रणमद्भिः सेव्यमानः सामीप्यादि पदस्थितैः ॥ ५७ ॥
मुक्तैश्च पञ्चकालज्ञैः सिद्धैः किङ्करतां गतैः। उपास्यमानः सततं द्वादशाक्षरचिन्तकैः ॥ ५८ ॥
अष्टाङ्गयोगसंसिद्धैर्बहुभिर्भगवन्मयैः। पञ्चरात्रार्थतत्वज्ञैर्नित्यतृप्तैः समीपगैः ॥ ५९ ॥
यथार्हं भगवच्छेषकर्मनिष्ठैर्महात्मभिः। दिगेषा कथिता ब्रह्मन् धन्यानां तत्र तिष्ठताम् ॥ ६० ॥
अन्तर्गतानां लोकानां अण्डेषु बहिरप्यथ। विस्तारः [4]कथ्यते नैव दुर्ग्रहत्वाद्भवादृशैः ॥ ६१ ॥

—परार्थनिगमनम्—

सारमात्रं समुद्धृत्य सर्वतः समुदाहृतम्।

—ब्रह्मणा कृतज्ञताप्रकाशनम्—

ब्रह्मा—
ज्ञानं भगवतः किञ्चिदज्ञानं येन हन्यते ॥ ६२ ॥

---

1. श्री. श्रीमहीभ्यां सह स्थितः. 2. म. व्याप्तादिभिः. 3. श्री. श्चण्डाद्यैः. 4. म. कथितो.

नष्टमज्ञानतिमिरं ज्ञानं तद्दर्शितं महत् । सर्वे च संशया नष्टाः प्रसादाद्भगवन्मम ॥ ६३ ॥

यथोक्तज्ञानस्य सम्प्रदायशुद्धिः

पद्मः—

इति गुह्यतमं ज्ञानं भगवान् ब्रह्मणे ददौ । ब्रह्माऽपि तद्यथातत्वं कपिलायावतारयत् ॥ ६४ ॥

कपिलोऽपि महर्षिस्तत् ज्ञानं मम यथातथम् । ददौ तुभ्यं तदित्येवं पारम्पर्यक्रमागतम् ॥ ६५ ॥

[1]सिद्धान्तज्ञानमुत्कृष्टं त्वय्यनुग्रहकाम्यया । भगवन्मयमाख्यातं रहस्यतरमद्भुतम् ॥ ६६ ॥

भगवज्ज्ञानस्य अपात्रे अनाख्येयत्वम्

नैतद्गुह्यतरं ज्ञानमाख्येयमतिमानिने । नाभक्ताय न हीनाय न चाशुश्रूषवे पुनः ॥ ६७ ॥

नादीक्षिताय दातव्यं न कृतघ्नाय पापिने । न नास्तिकाय चाख्येयं न च पाषण्डिने तथा ॥ ६८ ॥

न हीनवर्णिने नैव पिशुनाय दुरात्मने । नैव चानुपनीताय न बाह्यागमसङ्गिने ॥ ६९ ॥

न चाभ्यसूयवे चापि त्यक्ताचाराय कर्हिचित् ।

योग्यपात्रनिरूपणम्

वक्तव्यं च विनीताय शुद्धाय ब्रह्मचारिणे ॥ ७० ॥

शुश्रूषवे प्रसन्नाय[2]व्रतिने वशिने तथा । आश्रमस्थाय संसारविमुखाय मुमुक्षवे ॥ ७१ ॥

जिज्ञासमानाय तथा पाञ्चरात्रोदितां क्रियाम् । सुशीलाय कृतज्ञाय ऋजवे ऋजुबुद्धये ॥ ७२ ॥

छन्दांस्यधीतिने साङ्गं कुलीनाय तपस्विने । त्रैवर्णिकाय संवर्तमहर्षे संहितामिमाम् ॥ ७३ ॥

नाध्यापयेन्नोपदिशेन्न[3]विद्यामरये वदेत् ।

उक्तानुवादपूर्वं संहिताध्ययनफलनिरूपणम्

कण्वः—

हे शिष्याः कथितं सर्वं यत्संवर्तमुखाच्छ्रुतम् ॥ ७४ ॥

विज्ञानं तदशेषेण भवद्भ्यः कथितं मया । योगं चाप्युपदेक्ष्यामि शुश्रूषा यदि तत्र वः ॥ ७५ ॥

यः संहितामिमां पाद्मीं अधीते नियमस्थितः । स ब्रह्मलोकमभ्येति नेह भूयोऽपि जायते ॥ ७६ ॥

श्लोकमेकं तदर्धं वा पादमेकं सुयन्त्रितः । प्रत्यहं पठमानस्य फलमिष्टं करे स्थितम् ॥ ७७ ॥

ज्ञानांशो द्वादशाध्यायः तन्त्रे पाद्मे समीरितः । संक्षिप्य सारमुद्धृत्य विस्तीर्णात्तन्त्रसागरात् ॥ ७८ ॥

शुश्रूषवोऽपि हे शिष्याः प्रसन्नेनान्तरात्मना ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां ज्ञानपादे भुवर्लोकादिविस्तारकथनं नाम द्वादशोऽध्यायः ॥

ज्ञानपादः समाप्तः ॥

1. म. संवर्त. 2. म. तथैव. श्री. यतये. 3. श्री. विद्यागर्विणे.

# श्रीपाद्मसंहितायां योगपादः

## प्रथमोऽध्यायः ।

### निःश्रेयससाधनयोगनिरूपणम्

ब्रह्मा—

भगवन् योगयुक्तस्य निःश्रेयसमुदीरितम् । पुरुषस्य दयासिन्धो ज्ञानिनः पुरुषोत्तम ॥ १ ॥

स योगः कथ्यतां भूयः श्रोतव्यं यदि मद्विधैः । यदि वानुग्रहोऽस्मासु भजमानेषु विद्यते ॥ २ ॥

### योगद्वैविध्यम्

श्रीभगवान्—

अव्याकुलस्य चित्तस्य [1]बन्धनं विषये क्वचित् । यत्संयोगश्चतुर्वक्त्र स च द्वैविध्यमश्नुते ॥ ३ ॥

### विभक्तयोः प्रत्येकं लक्षणम्

कर्म कर्तव्यमित्येवं विहितेष्वेव कर्मसु । बन्धनं मनसो नित्यं कर्मयोगः स उच्यते ॥ ४ ॥

यत्तु चित्तस्य सततं अर्थे श्रेयसि बन्धनम् । ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शुभः ॥ ५ ॥

### समुच्चितयोस्तयोर्मोक्षसाधनत्वम्

यस्योक्तलक्षणे योगे द्विविधेऽवस्थितं मनः । स याति परमं श्रेयो मोक्षलक्षणमञ्जसा ॥ ६ ॥

### योगाङ्गनिरूपणम्

यमादिरङ्गं पूर्वस्य वैराग्यादि परस्य तु । अष्टौ यमादयो[2]योगाः यमोऽहिंसादिलक्षणः ॥ ७ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् । क्षमा धृतिर्मिताहारो शौचं चेति यमा दश ॥ ८ ॥

तपःप्रभृति[3]रूपस्तु नियमः कथ्यते पुनः । तपस्स तुष्टिरास्तिक्यं दानमाराधनं हरेः ॥ ९ ॥

सिद्धान्तश्रवणं ह्रीश्च जप इत्यादिलक्षणः । आसनादीनि सर्वाणि स्वस्तिकादीनि संप्रति ॥ १० ॥

वर्ण्यन्ते स्वस्तिकं पादतलयोरुभयोरपि । पूर्वोत्तरे जानुनी द्वे कृत्वासनमुदीरितम् ॥ ११ ॥

सीवन्या दक्षिणे पार्श्वे सव्यं सव्ये तु दक्षिणम् । गुल्फं कृत्वासनं तच्च स्वस्तिकं कथ्यते बुधैः ॥१२॥

आरोप्य चोर्वोश्चरणौ तदङ्गुष्ठद्वयं पुनः । व्युत्क्रमेणैव हस्ताभ्यां गृह्णीयात्तत्तदासनम् ॥ १३ ॥

बद्धपद्मासनं ज्ञेयमासनेषु सुपूजितम् । एकं चरणमन्यस्मिन्नूरावारोप्य निश्चलः ॥ १४ ॥

---

1. सन्धानं. 2. म. अङ्गानि. 3. श्री. रूपर्वं तु.

आस्ते यदिदमेनोघ्नं वीरासनमुदाहृतम् । सीवनीं गुल्फदेशाभ्यां निपीड्य व्युत्क्रमेण तु ॥ १५ ॥
प्रसार्य जानुनोर्हस्तावासनं सिंहपूर्वकम् । गुल्फौ च वृषणस्याधः सीवन्युभयपार्श्वयोः ॥ १६ ॥
निवेश्य पादौ हस्ताभ्यां दृढं बध्वा यदासनम् । भद्रासनं तद्विज्ञेयं सर्वपापप्रणाशनम् ॥ १७ ॥
गुल्फं सव्येतरं सव्ये पृष्ठपार्श्वे [1]निधाय च । गुल्फं तथेतरं पृष्ठपार्श्वेऽन्यस्मिन्निधाय च ॥ १८ ॥
आसनं गोमुखं यद्वत् गोमुखासनमिष्यते । सीवनीपार्श्वमुभयं गुल्फाभ्यां व्युत्क्रमेण तु ॥ १९ ॥
निपीड्यासनमेतच्च मुक्तासनमुदाहृतम् । मेढ्रस्योपरि निक्षिप्य सव्यं गुल्फं तथेतरम् ॥ २० ॥
निवेश्योपरि गुल्फस्य यद्वा मुक्तासनं भवेत् । अवष्टभ्य धरां सम्यक् तलाभ्यां हस्तयोर्द्वयोः ॥ २१ ॥
कूर्परौ नाभिपार्श्वे च स्थापयित्वा मयूरवत् । समुन्नम्य शिरःपादौ मयूरासनमिष्यते ॥ २२ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां योगपादे आसनभेदलक्षणं नाम प्रथमोऽध्यायः ॥

---

# द्वितीयोऽध्यायः ।

## नाडीशुद्धिः

श्रीभगवान्—

यमैश्च नियमैश्चैव योगाङ्गैरासनैरपि । सुसंयतो नाडिशुद्धौ प्राणायामो विधीयते ॥ १ ॥
देहमानं स्वाङ्गुलीभिः षण्णवत्यङ्गुलायतम् । प्राणः शरीरादधिको द्वादशाङ्गुलमानतः ॥ २ ॥
देहस्थमनिलं देहसमुद्भूतेन वह्निना । न्यूनं समं वा योगेन कुर्वन् ब्रह्मविदिष्यते ॥ ३ ॥
देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् । त्रिकोणं द्विपदामन्यच्चतुरश्रं चतुष्पदाम् ॥ ४ ॥
वृत्तं विहङ्गमानां तु षडश्रं जलजन्मनाम् । अष्टाश्रं स्वेदजानां तु तस्मिन् दीपवदुज्ज्वलः ॥ ५ ॥
वैश्वानरोऽग्निः पचति प्राणापानसमायुतः । चतुष्प्रकार[2]मशनं देहमध्येऽभिधीयते ॥ ६ ॥
अपानात् द्व्यङ्गुलादूर्ध्वं अधो मेढ्रस्य वामतः । देहमध्यं मनुष्याणां मेढ्रमध्यं चतुष्पदाम् ॥ ७ ॥
*इतरेषां तुन्दमध्यं सर्वेषामेव पद्मज । कन्दस्थानं मनुष्याणां देहमध्ये नवाङ्गुलम् ॥ ८ ॥
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् । अण्डाकृतिस्तिरश्चां च द्विपदां च चतुष्पदाम् ॥ ९ ॥
तुन्दमध्यं तदिष्टं वै तन्मध्यं नाभिरिष्यते । तत्र चक्रं द्वादशारं आहुर्मासानराणि तु ॥ १० ॥

---

1. म. विधाय. 2 श्री. मशितं [* 'इतरेषा" इति श्लोक "चतुरङ्गलमिति" श्लोकात्-अनन्तरं दृश्यते श्रीग्रन्थे ।

विष्ण्वादिमूर्तयस्तेषु द्वादश द्वादशस्वपि। अहं तत्र स्थितं चक्रं भ्रामयामि स्वमायया ॥ ११ ॥
अरेषु भ्रमते जीवः क्रमेण कमलासन। तन्तुः पञ्जरमध्यस्था यथा भ्रमति लूतिका ॥ १२ ॥
प्राणारूढश्चरति यः जीवस्तेन विना न हि। तस्योर्ध्वे कुण्डलीस्थानं नाभेस्तिर्यगथोर्ध्वतः॥ १३ ॥
अष्टप्रकृतिरूपा सा चाष्टधा कुण्डलीकृता। यथावद्वायुचारं च ज्वलनादि च नित्यशः ॥ १४ ॥
परितः कन्दपार्श्वे तु निरुध्यैव सदा स्थितः। मुखेनैव समा[1]वेक्ष्य ब्रह्मरन्ध्रमुखं तथा ॥ १५ ॥
योगकाले च मरुता साग्निना चोदिता सती। स्फुरिता हृदयाकाशे नागरूपा महोज्वला ॥ १६ ॥
वायुर्वायुमुखेनैव ततो याति सुषुम्नया। कन्दमध्ये स्थिता नाडी सुषुम्ना सुप्रतिष्ठिता ॥ १७ ॥
पद्मसूत्रप्रतीकाशा ऋजुरूर्ध्वप्रवर्तिनी। ब्रह्मणो विवरं यावत् विद्युदाभा सनालिका ॥ १८ ॥
वैष्णवी ब्रह्मनाडीं च निर्वाणप्राप्तिपद्धतिः। इडा च पिङ्गला चैव तस्याः सव्येतरे स्थिते॥ १९॥
इडा समुत्थिता कन्दाद्वामनासापुटावधि। पिङ्गला चोत्थिता तस्मादन्यनासापुटावधि ॥ २० ॥
गान्धारी हस्तिजिह्वा च द्वे चान्ये नाडिके स्थिते। पुरतः पृष्ठतस्तस्या वामेतरदृशौ प्रति ॥ २१ ॥
पूषा यशस्विनी नाड्यौ तस्मादेव समुत्थिते। सव्येतरश्रुत्यवधि पायुमूलात्वलम्बुसा ॥ २२ ॥
अधोमुखा कुहूनाडी मेढ्रान्तावधिरायता। पादाङ्गुष्ठावधिः कन्दाद्यथायाता च[2] केशिनी॥ २३ ॥
दशप्रधानभूतास्ताः कथिताः कन्दसम्भवाः।
तन्मूला बहवो नाड्यः स्थूलाः सूक्ष्मास्तु नाडिकाः ॥ २४ ॥
द्विसप्तति सहस्राणि स्थूलाः सूक्ष्मास्तु पद्मज। संख्यातुं नैव शक्यन्ते स्थूल[3]मूलाः पृथग्विधाः ॥२५॥
यथाश्वत्थदले सूक्ष्माः स्थूलाश्च वितातास्तथा। प्राणोऽपानः समानश्च उदानो व्यान एव च॥ २६॥
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः। चरन्ति दश नाडीषु दशप्रणादिवायवः ॥ २७ ॥
प्राणादिपञ्चकं तेषु प्रधानं तत्र च [4]द्वयम्। प्राण एवाथवा श्रेष्ठो जीवात्मानं बिभर्ति यः॥ २८॥
आस्यनासिकयोर्मध्यं हृदयं नाभिमण्डलम्। पादाङ्गुष्ठमिति प्राणस्थानानि कमलासन ॥ २९ ॥
अपानश्चरति ब्रह्मन् गुदमेढ्रोरुजानुषु। समानः सर्वगात्रेषु सर्वव्यापी व्यवस्थितः ॥ ३० ॥
उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि। व्यानः श्रोत्रोरुकट्यां च गुल्फस्कन्धगलेषु च ॥ ३१ ॥
नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः। तुन्दस्थं जलमन्नं च [5]रसनाग्निसमीकृता॥ ३२॥
तुन्दमध्यगतः प्राणस्तानि कुर्यात्पृथक् पृथक्। इत्यादि चेष्टया प्राणः करोति वपुषि स्थितिम्॥३३॥

1. म. समावेष्टच. 2. श्री. कौशिनी. 3. श्री सूक्ष्मा 4. म. स्वयम्. 5. म. रसानि च समीकृतम्. ब. (*b*) रसनानि समीकृतम्.

अपानवायुर्मूत्रादेः करोति च विसर्जनम् । प्राणापानादि चेष्टादि क्रियते व्यानवायुना ॥ ३४ ॥

[1]उज्जीर्यते शरीरस्थमुदानेन नभस्वता । पोषणादि शरीरस्य समानः कुरुते सदा ॥ ३५ ॥

उद्गारादिक्रिया नागः कूर्मोऽक्ष्यादिनिमीलनम् । कृकरस्तु क्षुतः कर्ता दत्तो निद्रादिकर्मकृत् ॥ ३६ ॥

मृतगात्रस्य शोभादि धनञ्जय उदाहृतः । नाडीभेदं मरुद्भेदं मरुतां स्थानमेव च ॥ ३७ ॥

चेष्टाश्च विविधास्तेषां ज्ञात्वैवं कमलासन । शुद्धौ यतेत नाडीनां वक्ष्यमाणेन वर्त्मना ॥ ३८ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां योगपादे नाडीस्वरूपकथनं नाम द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

### प्राणायामविधिः

श्रीभगवान्—

त्रैवर्णिकः स्ववर्णोक्तैराश्रमानुगुणैस्तथा । आचारैराचरन् युक्तै[2]र्वासुदेवार्चने रतः ॥ १ ॥

विविक्तं देशमासाद्य सर्वसंबाधवर्जितम् । योगाङ्गद्रव्यसंपूर्णं तत्र दारुमये शुभे ॥ २ ॥

आसने कल्पिते दर्भ[3]वासः कृष्णाजिनादिभिः । तालमात्रसमुत्सेधे तालद्वयसमायुते ॥ ३ ॥

उपविश्यासने वश्ये स्वस्तिकादि यथारुचि । बध्वा [4]प्रागासनः सम्यक् ऋजुकायः समाहितः ॥ ४ ॥

नासाग्रन्यस्तनयनो दन्तैर्दन्तानसंस्पृशन् । रसनां तालुनि न्यस्य श्लथबाहुद्वयान्वितः ॥ ५ ॥

आकुञ्चितशिराः किञ्चित् निबध्नन् योगमुद्रया । हस्तौ यथोक्तविधिना प्राणायामं समाचरेत् ॥ ६ ॥

### प्राणायामलक्षणम्

रेचनं पूरणं वायोः रोधनं रेचनं तथा । चतुर्भिः क्लेशनं वायोः प्राणायाम उदीरितः ॥ ७ ॥

हस्तेन दक्षिणेनैव पीडयेन्नासिकापुटम् । *इडया पूरयेदन्तर्वायुमात्मनि कुम्भयेत् ॥ ८ ॥

शनैः शनैरथ बहिः क्षिपेत्पिङ्गलयानिलम् । द्वात्रिंशन्मात्रया कुक्षौ पूरयेदिडयानिलम् ॥ ९ ॥

भूयः षोडशमात्राभिः चतुःषष्ट्या तु मात्रया । संपूर्णकुम्भवद्देहं [5]पूरयेन्मातरिश्वना ॥ १० ॥

[6]पूरणान्नाडयः सर्वाः पूर्यन्ते मातरिश्वना ।

### प्राणायामफलम्

एवं कृते सति ब्रह्मन् चरन्ति दश वायवः । हृदयाम्भोरुहं चापि व्याकोचं भवति स्फुटम् ॥ ११ ॥

---

1. ब. उन्नीयते. 2. श्री. सर्वदेवार्चने 3. श्री. म. कुशः. 4. श्री. प्रागानन. [*अय अर्धश्लोकः. म. ग्रन्थे लुप्तः.] 5. म. कुम्भयेत्. 6. म. पूरयेत्.

पूरणेन तथा कुम्भीकरणादुन्मुखं स्थितम् । गलकूपविरूढं तु तदधोमुखमम्बुजम् ॥ १२ ॥
नालं तालनिभं तस्य दलाष्टकसमन्वितम् । कदलीपुष्पसङ्काशं चन्द्रकान्तसमप्रभम् ॥ १३ ॥
सन्ध्ययोर्मध्यरात्रे च प्राणायामाँस्तु षोडश । एकाहमात्रं कुर्वाणः सर्वपापैः प्रमुच्यते ॥ १४ ॥
किमन्यैर्बहुभिः प्रोक्तैः प्राणायामपरायणाः । निर्धूतसर्वपाप्मानो वत्सरत्रयपूरणे ॥ १५ ॥
पश्यन्ति मामपि ब्रह्मन् हृदयाम्भोरुहे स्थितम् । संवत्सरत्रयादूर्ध्वं प्राणायामपरो नरः ॥ १६ ॥
योगसिद्धो भवेद्योगी वायुजिद्विजितेन्द्रियः । अल्पाशी स्वल्पनिद्रश्च तेजस्वी बलवान् भवेत् ॥ १७ ॥
अपमृत्युमतिक्रम्य दीर्घमायुरवाप्नुयात् । प्रस्वेदजननं यस्य प्राणायामेषु सोऽधमः ॥ १८ ॥
*कम्पनं वपुषो यस्य प्राणायामेषु मध्यमः । उत्थानं वपुषो यस्य स उत्तम उदाहृतः ॥ १९ ॥
अधमे व्याधिपापानां नाशः स्यान्मध्यमे पुनः । पापरोगमहाव्याधिनाशः स्यादुत्तमे पुनः ॥ २० ॥
अल्पमूत्रोऽल्पविष्ठश्च लघुदेहो मिताशनः । वश्येन्द्रियः पटुमतिः कालत्रयविदात्मवान् ॥ २१ ॥
रेचकं पूरकं मुक्त्वा कुम्भीकरणमेव यः । करोति त्रिषु लोकेषु नैव तस्यास्ति दुर्लभम् ॥ २२ ॥
नाभिकन्दे च नासाग्रे पादाङ्गुष्ठे च यत्नवान् । धारयन्मनसा प्राणान् सन्ध्याकालेषु सर्वदा ॥ २३ ॥
सर्वरोग विनिर्मुक्तो [1]भवेद्योगी गतक्लमः । कुक्षिरोगविनाशः स्यात् नाभिकन्देषु धारणात् ॥ २४ ॥
नासाग्रे [2]धारणाद्दीर्घमायुर्वै देहलाघवम् । पादाङ्गुष्ठे भवेद्धृत्या वायोः कमलसंभव ॥ २५ ॥
वायुमाकृष्य जिह्वाग्रे पिबन्नश्रमदाहभाक् । ब्राह्मे मुहूर्ते संप्राप्ते वायुमाकृष्य जिह्वया ॥ २६ ॥
पिबतस्त्रिषु मासेषु वाक्सिद्धिर्महती [3]भवेत् । अभ्यस्यतश्च षण्मासान् महारोगविनाशनम् ॥ २७ ॥
यत्र यत्र धृतो वायुरङ्गे रोगादिदूषिते । धारणादेव मरुतः तत्तदारोग्यमश्नुते ॥ २८ ॥
मनसो धारणादेव श्वसनो धारितो भवेत् ।

### मनसः स्थैर्यनिरूपणम्

मनसः स्थापनाहेतुरुच्यते कमलासन ॥ २९ ॥
करणानि समाहृत्य विषयेभ्यः समाहितः । अपानमूर्ध्वमाकृष्य वस्तेरुपरि धारयेत् ॥ ३० ॥
बध्नन् कराभ्यां श्रोत्रादि करणानि यथातथम् । युञ्जानस्य यथोक्तेन वर्त्मना स्ववशं [4]मनः ॥ ३१ ॥

### वायुजयः

मनः[5]स्पृष्टः स वै वायुः स्ववशे स्थाप्यते सदा । नासिकापुटयोः प्राणः पर्यायेण प्रवर्तते ॥ ३२ ॥

[* एष अर्धश्लोकः म ग्रन्थे नास्ति ] 1. म. जीवेद्योगी. 2. श्री. धारणादि च आयुर्वै. 3. श्री. ध्रुवम्. 4. श्री. गतः. 5. श्री. म. पथश्च.

तिस्रश्च नाडिकाः प्राणस्तावत्यश्च चरत्ययम् । शङ्खिनी विवरे [1]याम्ये प्राणः प्राणभृतां स ताम् ॥ ३३ ॥
तावन्तश्च पुनः कालं सौम्ये चरति सन्ततम् । इत्थं क्रमेण चरता वायुना वायुजिन्नरः ॥ ३४ ॥
अहश्च रात्रिं पक्षं च मासमृत्वयनादिकम् । अन्तर्मुखो विजानीयात्कालभेदं समाहितः ॥ ३५ ॥
अङ्गुष्ठादि स्वावयवस्फुरणादर्शनैरपि । अरिष्टैर्जीवितस्यापि जानीयात्क्षयमात्मनः ॥ ३६ ॥
ज्ञात्वा यतेत कैवल्यप्राप्तये योगवित्तमः ।

इति श्रीपाञ्चरात्रे महोपनिषदि श्री पाद्मसंहितायां योगपादे [2]पञ्चभूतस्थाननिर्णयो नाम तृतीयोऽध्यायः ॥

# चतुर्थोऽध्यायः ।

## अरिष्टनिरूपणम्

ब्रह्मा—

भगवन् कान्यरिष्टानि कथं तैर्जीवितक्षयः । सूच्यते संशयस्यास्य छेदने कारणं भवान् ॥ १ ॥

## अरिष्टप्रकाराः

श्रीभगवान्—

पादाङ्गुष्ठे कराङ्गुष्ठे स्फुरणं यस्य नश्यति । तस्य संवत्सरादूर्ध्वं जीवितस्य क्षयो भवेत् ॥ २ ॥
मणिबन्धे तथा गुल्फे स्फुरणं यस्य नश्यति । षण्मासावधिरेतस्य जीवितस्य स्थितिर्भवेत् ॥ ३ ॥
कूर्परे स्फुरणं यस्य तस्य त्रैमासिकी स्थितिः । कक्षे मेहनपार्श्वे च स्फुरणाद्युपलम्भने ॥ ४ ॥
मासावधिर्जीवितस्य तदर्धं स्वेददर्शने । आश्रुते जाठरे घोषे दिनानि दश जीवितम् ॥ ५ ॥
ज्योतिः खद्योतवद्यस्य तदर्धं तत्र जीवितम् । जिह्वाया दर्शने त्रीणि दिनानि स्थितिरात्मनः ॥ ६ ॥
[3]नासाग्रादर्शने मृत्युः द्विदिने नैव संशयः ।

## अरिष्टज्ञानानन्तरकर्तव्यानि

एवमादीन्यरिष्टानि दृष्ट्वा यः क्षयकारणम् ॥ ७ ॥

निःश्रेयसाय युञ्जीत जपध्यानपरायणः ।

## प्रत्याहारप्रकारद्वयम्

मनसात्मन्यनुष्ठानं यदिदं नित्यकर्मणाम् ॥ ८ ॥
प्रत्याहारः स विज्ञेयः योगाङ्गत्वेन सेवितः । यद्वाष्टादशभेदेषु मर्मस्थानेषु धारणम् ॥ ९ ॥

---

1. ब. बाह्ये. 2. म. प्राणायामलक्षणं नाम. 3 श्री. ज्वालाग्ने.

स्थानात्स्थानं समाकृष्य सा प्रत्याहृतिरिष्यते ।

## अष्टादश मर्मस्थानानि

पादाङ्गुष्ठं तथा गुल्फं जङ्घामध्यं तथैव च ॥ १० ॥
मध्यमूर्वोश्च मूलं च पायुर्हृदयमेव च । मेहनं देहमध्यं च नाभिं च गलकूबरम् ॥ ११ ॥
तालुमूलं च मूलं च घ्राणस्याक्ष्णोश्च मण्डलम् । भ्रुवोर्मध्यं ललाटं च मूर्धा चापि ततः परम् ॥ १२ ॥
मूलं च कर्णयोर्मूलं मर्माण्येतानि पद्मज ।

## धारणालक्षणम्

पञ्चभूतमये देहे भूतेष्वेतेषु पञ्चसु ॥ १३ ॥
मनसो धारणं यत्तद्युक्तस्य च यमादिभिः । धारणा सा च संसारसागरोत्तारकारणम् ॥ १४ ॥

## शरीरे पञ्चभूतस्थानविभागः

आजानुपादपर्यन्तं पृथिवीस्थान मिष्यते । [1]पित्तला चतुरस्रा च वसुधा वज्रलाञ्छिता ॥ १५ ॥
स्मर्तव्या पञ्चघटिकास्तत्रारोप्य प्रभञ्जनम् । तस्योपर्यूरुमूलान्तं वारिस्थानं चतुर्मुख ॥ १६ ॥
अर्धचन्द्रसमाकारं श्वेतमम्बुजलाञ्छितम् । स्मर्तव्यमङ्ग श्वसनमारोप्य दश नाडिकाः ॥ १७ ॥
आनाभिदेहमध्यान्तमग्निस्थानमुदाहृतम् । तत्र सिन्दूरवर्णोऽग्निस्त्र्यश्राङ्को दश पञ्च च ॥ १८ ॥
स्मर्तव्यो नाडिकाः प्राणं कृत्वा कुम्भकधारितम् । नाभेरुपरि नासान्तं वायुस्थानं तु तत्र वै ॥ १९ ॥
वेदिकाकारवद्धूम्रो बलवान् भूतमारुतः । स्मर्तव्यः कुम्भकेनैव प्राणमारोप्य मारुतः ॥ २० ॥
घटिका विंशतिस्तस्माद् प्राणाद्ब्रह्मबिलावधि । व्योमस्थानं नभस्तत्र भिन्नाञ्जनसमप्रभम् ॥ २१ ॥
ध्यायेन्मारुतमारोप्य कुम्भकेनैव यत्नवान् । [2]विश्वम्भरांशे देहस्य चतुर्बाहुमलङ्कृतम् ॥ २२ ॥
अनिरुद्धं हरिं योगी यजेत भवमुक्तये । [3]अबंशे पूरयेद्योगी नारायणमुदग्रधीः ॥ २३ ॥
प्रद्युम्नमग्नौ वाय्वंशे सङ्कर्षणमतःपरम् । व्योमांशे परमात्मानं वासुदेवं समर्चयेत् ॥ २४ ॥
अचिरादेव तत्प्राप्तिर्युञ्जानस्य न संशयः ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां योगपादे पञ्चभूतस्थाननिर्णयो नाम चतुर्थोऽध्यायः ॥

---

1. श्री. पीतला. 2. श्री. विश्वभरांशदेहे तु. 3 श्री. अपांशे पूजये.

# पञ्चमोऽध्यायः ।

## ध्यानलक्षणम्

श्रीभगवान्—

बध्वा योगासनं पूर्वं हृद्देशे रचिताञ्जलिः । नासाग्रन्यस्तनयनो जिह्वां कृत्वा च तालुनी ॥ १ ॥
दन्तैर्दन्तानसंस्पृश्य[1] ऊर्ध्वकायः समाहितः । संहरेदिन्द्रियग्रामं ततो बुध्या विशुद्धया ॥ २ ॥
चिन्तनं वासुदेवस्य परस्य परमात्मनः । सरूपस्याप्यरूपस्य स्वहृदम्बुरुहासने ॥ ३ ॥
यत्तद्ध्यानं प्रशंसन्ति कैवल्यफलदं सदा ॥

## ध्यानफलम्

याममात्रं वासुदेवं चिन्तयेत् कुम्भकेन यः । सप्तजन्मकृतं पापं तस्य नश्यति योगिनः ॥ ४ ॥

## जाग्रदादिवृत्तीनां स्थानानि

नाभिकन्दात्समारभ्य यावद्धृदयगोचरम् ॥ ५ ॥
जाग्रद्वृत्तिं विजानीयात् कण्ठस्थं [2]स्वप्नमुत्तमम् । सुषुप्तं तालुमध्यस्थं तुर्यं भ्रूमध्यसंस्थितम् ॥ ६ ॥
तुर्यातीतं परं ब्रह्म ब्रह्मरन्ध्रे तु लक्षयेत् । जाग्रद्वृत्तेः समारभ्य यावद्ब्रह्मबिलान्तरम् ॥ ७ ॥
[3]तत्रोदयं तुरीयं स्यात् तुर्यान्ते विष्णुरुच्यते ।

## ध्येयशुभाश्रयस्वरूपम्

ध्यायेच्चैवं समायुक्तः व्योम्नि चात्यन्तनिर्मले ॥ ८ ॥
सूर्यकोटिद्युतिधरं नित्योदितमधोक्षजम् । हृदयाम्बुरुहासीनं ध्यायेद्वा विश्वरूपिणम् ॥ ९ ॥
अनेकाकारखचितं अनेक[4]सदनान्वितम् । अनेकभुजसंयुक्तमनेकायुधमण्डितम् ॥ १० ॥
नाना[5]रूपधरं देवं शान्तमुग्रमुदायुधम् । अनेकनयनाकीर्णं सूर्यकोटिसमप्रभम् ॥ ११ ॥
ध्यायतो योगिनः सर्वं [6]यतोऽज्ञानं विनश्यति । हृत्पुण्डरीकमध्यस्थं चैतन्यं ज्योतिरव्ययम् ॥ १२ ॥
कदम्ब[7]मुकुलाकारं तुर्यान्तान्मण्डलात्परम् । अनन्तमानन्दमयं चिन्मयं भास्वरं विभुम् ॥ १३ ॥
निवातदीपसदृशं अकृत्रिममणिप्रभम् । ध्यायतो योगिनस्तस्य मुक्तिः करतले स्थिता ॥ १४ ॥
विश्वरूपस्य देवस्य रूपं यत्किञ्चिदेव हि । स्थवीयः सूक्ष्ममन्यद्वा पश्यन् हृदयपङ्कजे ॥ १५ ॥
ध्यायतो योगिनो वस्तु साक्षादेव प्रकाशते । अणिमादि फलं चैव[8]सकलं का कथाऽपरे ॥ १६ ॥

---

1. श्री. म. ऋजुकायः 2. श्री स्वप्नवर्तनम् 3. श्री म सदोदयं. 4. श्री म वदना.
5. श्री. म. वर्ण. 6. श्री. मनो. 7. श्री. गोलकाकारं. 8. श्री. सुखेनैवोपजायते.

### समाधिः

जीवात्मनः परस्यापि यदैक्यमुभयोरपि । समाधिः सतु विज्ञेयः[1]साध्वर्थानां प्रसाधकः ॥ १७ ॥

### ध्यानप्रकार.

अहमेव परं ब्रह्म [2]तदिति ध्यानमास्थितः । स्थाणुभूतो दृढः शश्वद्विषयान्नावबुध्यते ॥ १८ ॥
यथा बाह्यजलं वारां प्रविष्टं निश्चलं निधिम् । चलस्वभावं त्यजति तथा जीवः प्रलीयते ॥ १९ ॥
परमात्मनि वैकुण्ठे समाधिस्थस्य योगिनः ।

### परतत्वाभिलाषोपायः

अचिरात्परमे तत्वे ह्यभिलाषा प्रवर्तते ॥ २० ॥
तमुपायं प्रवक्ष्यामि श्रूयतां कमलासन । द्वादशाक्षरमध्यस्य परयात्मधिया हरिम् ॥ २१ ॥
[3]असूर्यभूमौ लिखिते चक्रपद्मे सुलक्षणे । तस्योपरि सुविस्तीर्णे समासीनः कुशासने ॥ २२ ॥
बध्वा पद्मासनं योगी सिते पक्षे तथोत्तरे । अयने श्वसनं पूर्वं धारयित्वा यथापुरम् ॥ २३ ॥
देहमध्यस्थितं वह्निं दीपयित्वा समुज्वलम् । हृत्पुण्डरीकमध्यस्थं स्मरन् ब्रह्म सनातनम् ॥ २४ ॥
विद्युत्सहस्रसंकाशं युगान्ता[4]निलसन्निभम् । तन्मयं च स्वचैतन्यं कृत्वा तद्वह्निरश्मिभिः ॥ २५ ॥
भूतदेहं दहेत्कृत्स्नं दग्ध्वा मन्त्रस्वरूपदृक् । मुक्ताण्ड इव पक्षीश आसीनं चिन्तयेच्छनैः ॥ २६ ॥
शनैः परिणतां मन्त्रतनुं तेजोमयीं सदा । चिन्मयीं सर्वगां शब्दस्वरूपां भावयन्नपि ॥ २७ ॥
शनैः शनैरस्थिरां च विनिवार्य ततः स्वयम् ।

### ब्रह्मसपन्नस्य अपुनरावृत्तिः

ब्रह्म संपद्यते योगी न भूयः संसरेदिह ॥ २८ ॥

### उक्तार्थनिगमनं अधिकारिफलादिनिरूपणम्

इत्येवं योगसारोऽयं कथितः कमलासन । नित्यं क्रियातत्पराणां संसार[5]चकितात्मनाम् ॥ २९ ॥
मद्भक्तानां दीक्षितानां वाच्योऽयमुपसीदताम् । इदं भवहरं पुण्यं योगं सर्वार्थसिद्धिदम् ॥ ३० ॥
योऽधीते गुर्वनुज्ञातः स याति परमां गतिम् ॥

**इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां योगपादे योगलक्षणं नाम पञ्चमोऽध्यायः ॥**

---

1. म. साधकाना  2. म तदिद.  3. श्री. अभ्यर्च्य.  4. श्री. अनल.  5. श्री. विमुखात्मनाम्.

# श्रीपाद्मसंहितायां क्रियापादः

## प्रथमोऽध्यायः ।

—ब्रह्मणा भगवन्तं प्रति ज्ञानयोगयोरविदुषां गतिमुद्दिश्य प्रश्नः—

ब्रह्मा—

भगवन् देवदेवेश शङ्खचक्रगदाधर । ज्ञानयोगौ च कात्स्न्र्येन निर्वाणफलदौ श्रुतौ ॥ १ ॥

तयोरविदुषां देव नाधिकारः कदाचन । अज्ञानिनां च भक्तानां गतिं चापीच्छतां नृणाम् ॥ २ ॥

नोपायेन निर्वाणफलं स्वर्गादि चेतरत् । भवत्युपायं तमृजुमुपदेष्टुं त्वमर्हसि ॥ ३ ॥

अन्यच्च वक्तव्यं यदि मय्यस्त्यनुग्रहः । त्वदर्चने कोऽभ्युपायः कथ्यतां मधुसूदन ॥ ४ ॥

—स्थानविशेषेषु भगवदर्चामूर्तियजनस्य सर्वसिद्धिकरत्वम्—

श्रीभगवान्*

कृत्वा प्रतिविधिं सम्यग् दारुलोह शिलादिभिः । तत्स्थापयित्वा [1]मत्स्थाने शास्त्रदृष्टेन वर्त्मना ॥ ५ ॥

यजस्व मां वक्ष्यमाणविधिना कमलासन । कर्षणादि प्रतिष्ठान्तं क्रियाविधिमतः शृणु ॥ ६ ॥

वक्ष्यामि येन विधिना प्रसीदाम्यचिरादहम् । अधीतिनो ये विद्यासु शास्त्राणि श्रुतपूर्विणः ॥ ७ ॥

ते मां भजन्ते पुरुषाः ज्ञानयोगपरायणाः । अन्येषामप्यविदुषां भक्तानां बहुसंपदाम् ॥ ८ ॥

जायते सिद्धिरचिरात् स्थाने स्थापयतां च माम् । ज्ञानं योगश्च यदिदं केवलं मुक्तिकारणम् ॥ ९ ॥

स्थापयित्वा [2]तु मां स्थाने पुरुषः [3]सत्वमश्नुते । यो मां संस्थाप्य सदने [4]समाराधयति स्वयम् ॥१०॥

न तस्य केवलं सिद्धिः स्थाना[5]भ्यर्णजुषामपि । तस्मात्सर्वात्मना ब्रह्मन् स्थाने मां स्थापयेत्पुमान् ॥११॥

—स्थानद्वैविध्यम्—

द्विविधं स्थानमाख्यातं सिद्धासिद्धप्रभेदतः ।

—सिद्धस्थानविवरणम्—

मूले मूर्धनि शैलानां नद्यास्तीरे च सङ्गमे ॥ १२ ॥

समुद्रतीरे पुलिने ह्रदे तीर्थे च कानने । एतेषु निर्मितं स्थानं सिद्धाख्यं विश्वकर्मणा ॥ १३ ॥

---

श्री. *कर्मणा धनवन्मर्त्या ममाराधनतत्पराः ।
मै. ऐ. ओ. आवृत्ति फलमन्यच्च प्राप्नोत्येव न संशयः ॥
[एषः श्लोकभाग. एतेषु ग्रन्थेषु अधिकतया अत्र *दृश्यते.]

1. श्री. मां स्थाने. 2. श्री. अच्युत. 3. स म. सर्व. ब. स्वर्गं. 4. स. म. मामाराधयति. 5. म. अभ्यर्हं.

देवादिभिरहं तत्र स्थापितश्चेद्यथाविधि ।

—◇— असिद्धायतनम् —◇—

मनुष्यैर्निर्मितं [1]स्थानं [2]नगरादि कृतं मम ॥ १४ ॥
असिद्धायतनं विद्धि ग्रामादिस्थितिहेतुकम् ।

—◇— यजमानस्य रूपम् —◇—

श्रद्धावानास्तिको भक्तो [3]धनधान्यसमृद्धिमान् ॥ १५ ॥
महोत्साहः शुचिर्दक्षः कृतज्ञो लोभवर्जितः । ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्यनुलोमजः ॥ १६ ॥
[4]जानीहि यजमानं तं सर्वैः समुदितं गुणैः ।

—◇— वरणीयाचार्यलक्षणम् —◇—

पञ्चरात्रविदं शान्तं सिद्धान्तेषु कृतश्रमम् ॥ १७ ॥
भगवद्वंशजं शुद्धमलोलुपमदाम्भिकम् । अपापमृजुमव्याधिमदुष्ट[5]परमास्तिकम् ॥ १८ ॥
तं भागवतमाचार्यं प्रथमं वरयेत् सुधीः ।

—◇— भूपरीक्षा —◇—

आचार्यो यजमानश्च दैवज्ञेन शुभे दिने ॥ १९ ॥
ग्रामादिस्थापनायादौ निमित्तानि परीक्षयेत् । शुभे निमित्ते ग्रामादीनारभेत विचक्षणः ॥ २० ॥
भूपरीक्षादिकं सर्वं रथकारेण वै सह । आचार्यः पञ्चरात्रज्ञः कुर्या[6]दभ्युदितक्रमात् ॥ २१ ॥

—◇— भूमेः सुपद्मादिप्रभेदः —◇—

सुपद्मा भद्रका पूर्णा धूम्रा चेति चतुर्विधा । [7]भूमिस्तु लक्षणं तासां क्रमेणोपदिशामि ते ॥ २२ ॥

—◇— सुपद्मा भूमिः —◇—

चम्पकागरु[8]कर्पूरकदम्बतिलकार्जुनैः । क्रमुकैर्नालिकेरैश्च कुशकाशैः समावृता ॥ २३ ॥
पद्मोत्पलसमाकीर्णा प्रागुदक्प्रवणा शुभा । या च तोयावृता भूमिः सा सुपद्मेति कीर्तिता ॥ २४ ॥

—◇— भद्रका भूमिः —◇—

नदीसागरपार्श्वस्था [9]तीर्थायतसमाश्रिता । क्षीरवृक्षसमाकीर्णा फलवृक्षसमाकुला ॥ २५ ॥
उद्यानोपवनोपेता लतागुल्मसमावृता । यज्ञवृक्षाः कुशाः काशाः [10]व्रीहिक्षेत्रं तु यत्र वै ॥ २६ ॥

---

1. श्री ग्राम. 2. स म नगरादौ गृह ऐ ओ नगरादौ गृहे 3 श्री. धनधान्यैस्समेधितः. 4 ऐ. ओ. जातिभिर्यजमानस्तु 5 स. म परमान्तिकम् 6. श्री. दभ्युदयोदित . 7. ऐ. ओ. भूमयः 8 स. म. ऐ ओ, खर्जूर. 9 श्री. तीर्थायतनमाश्रिता. 10. श्री. व्रीहिक्षेत्राणि यत्र वै.

अधोजलसमोपेता भद्रका इति सा स्मृता ।

पूर्णा भूमिः

कुलुत्थ[1] निम्बनिष्पापकोद्रवश्यामकान्विता ॥ २७ ॥

गिरिपार्श्वस्थिता चैव गिरेः शिखरमाश्रिता । [2]आप्रभूतोदका भूमिः सा पूर्णेति प्रकीर्तिता ॥२८॥

धूम्रा भूमि.

यववेण्वादिसङ्कीर्णा स्नुहिश्लेष्मातकान्विता । [3]विभीतकार्कसङ्कीर्णा कठिना शर्करान्विता ॥ २९ ॥

वायसश्येनगृध्राढ्या गोमायुवृकसङ्कुला । ऊषराद्यैः समोपेता सा धूम्रेति प्रकीर्तिता ॥ ३० ॥

सुपद्मादिभूमीना फलभेदः

सुपद्मा शान्तिदा भूमिः सुखदा भद्रका भवेत् । सुपूर्णा पुष्टिदा भूमिः क्षयदा धूम्रका भवेत् ॥ ३१ ॥

खातमृत्पूरणपरीक्षा

दण्डमात्रायतां भूमिं तावद्विस्तारसंयुताम् । जानुमात्रं खनेद्भूमिं मृद्भिस्ताभिश्च पूरयेत् ॥ ३२ ॥

अधिके [4]चोत्तमा भूमिः समं चेन्मध्यमा भवेत् । न्यूनेऽधमां विजानीयात् तां भूमिं [5]वर्जयेद्बुधः ॥३३॥

वास्तुभूमौ बीजावापः

शालिमुद्गयवादीनामुप्त्वा बीजानि वै भुवि । परीक्षकः परीक्षेत प्रशस्तामथवेतराम् ॥ ३४ ॥

अङ्कुरो जायते यत्र त्रिरात्राभ्यन्तरे महीम् । तामुत्तमां विजानीयात् [6]पञ्चरात्रिषु मध्यमाम् ॥३५॥

अधमा सप्तरात्रे स्यात् अदृश्ये वा तदङ्कुरे । वर्जयेदधमां भूमिं स्थापयेदन्ययोर्द्वयोः ॥ ३६ ॥

अधमाया अपि भूमेः क्वचित् परिग्राह्यता

कुशपालाशहरिणाः सन्ति यत्र स्वयं भुवि । अधमामपि तां विद्धि प्रशस्तां कमलासन ॥ ३७ ॥

रसवर्णादिभिः भूपरीक्षा

रसेन मधुरेणोर्वीमुत्तमां [7]कटुकात्मिकाम् । मध्यमामधमा[8]मल्पां रसैरन्यैश्च विद्धि ताम् ॥ ३८ ॥

श्वेतवर्णोत्तमा भूमिः मध्यमा पीतलोहिनी । अधमा कृष्णवर्णास्यादित्येतद् भूमिलक्षणम् ॥ ३९ ॥

बलिप्रदानम्

वास्तुविद्यासु कृतिना क्रियासु निपुणेन च । रथकारेण सहितः कुशलः [9]पाञ्चरात्रवित् ॥ ४० ॥

आचार्यः प्रथमं कुर्यात्प्रवेशबलिमुत्तमम् । आचार्यो यजमानेन सहितो वास्तुसीमनि ॥ ४१ ॥

---

1. ऐ. ओ. कङ्कु 2 ऐ. ओ. अप्रभूतोदका 3. ऐ ओ विभीतिकार्ह 4. श्री चोत्तमा विद्यात्. 5. श्री. परिवर्जयेत्. 6. ऐ. ओ. श्री पञ्चषट्सु. 7. स म ऐ ओ श्री कटुकात्मनाम्. 8. स. म. भूमिं. 9. ऐ. ओ. पञ्चकर्मसु.

नृत्तैर्वाद्यैश्च तूर्यैश्च तथा मङ्गलपाठकैः । पूर्णकुम्भैस्तथा दीपैः ध्वजच्छत्रसमन्वितैः ॥ ४२ ॥
ब्राह्मणैर्ज्ञानसम्पन्नैरधीयानैर्बहुश्रुतैः । प्रदक्षिणं परिक्रम्य [1]मन्त्रैः स्वस्त्ययनैरपि ॥ ४३ ॥
विदिक्षु दिक्षु पूर्वादिबलिं कुर्यात्समन्ततः । भूतानां च पिशाचानां रक्षसां दितिजन्मनाम् ॥ ४४ ॥
ग्रहाणामपि नागानां अन्येषां च बलिं क्षिपेत् । [2]ब्रह्मस्थाने प्रयत्नेन पायसेन महीसुरः ॥ ४५ ॥
बलिं प्रक्षिप्य तदनु मन्त्रमेतमुदीरयेत् । [3]भूताः पिशाचा नागाश्च असुरा राक्षसा ग्रहाः ॥ ४६ ॥
सर्वे ते व्यपगच्छन्तु बलितुष्टा यथायथम् । देवानां च द्विजानां च स्थानं सम्यक् करोम्यहम् ॥ ४७ ॥
वासुदेवस्य देवस्य सर्वभूतात्मकस्य च । अस्त्रमन्त्रेण [4]संसिद्धान् सिद्धार्थान् सर्वतः क्षिपेत् ॥ ४८ ॥
कृत्वा बलिं यथाशास्त्रं सूत्राण्यपि च पातयेत् । [5]शिलाः संस्थापयेत्तत्र सूत्र[6]सन्धिषु सर्वतः ॥ ४९ ॥

### वास्तुपुरुषकल्पनम्

अधोमुखं प्राक्छिरसं विन्यसेद्वास्तुपूरुषम् । प्रसार्य पाणिपादौ द्वौ कोणभूषु प्रकल्पितौ ॥ ५० ॥
एवं ध्यात्वा समभ्यर्च्य पुरुषं वास्तुकल्पितम् । तस्य दक्षिणपार्श्वे तु वास्तुहोमं प्रकल्पयेत् ॥ ५१ ॥
स्थण्डिले दीपयित्वाग्निं पञ्चौपनिषदा घृतम् । सहस्रं वा शतं वाऽपि जुहुयाद्वास्तुशान्तये ॥ ५२ ॥
अपामार्गस्य शम्याश्च खदिरस्य यथाक्रमम् । यक्षरक्षःपिशाचानां समिधो जुहुयात् स्वयम् ॥ ५३ ॥
हुत्वा तु मूल[7]मन्त्राभ्यां पृथगष्टोत्तरं शतम् । वास्तुनाथस्य मन्त्रेण चरुणा जुहुयाच्छतम् ॥ ५४ ॥
पूर्णाहुतिं ततो हुत्वा त्विन्द्रादीनां बलिं क्षिपेत् । दिक्ष्वष्टसु यथात्मीयमेवं ग्रामादि कल्पयेत् ॥ ५५ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे [8]ग्रामस्वीकारो नाम प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ।

### [9]ग्रामादीना लक्षणम्

ग्रामादीनां चतुर्वर्गफलदानां यथाक्रमम् । स्वरूपं [10]तत्र भेदं च वक्ष्यामि तव साम्प्रतम् ॥ १ ॥

### ब्राह्मणादिवर्णाना वासस्थानस्य समाख्याभेदः

[11]वसन्ति ब्राह्मणा यत्र स्थाने ग्रामः स उच्यते । अग्रहारश्च तस्यैव [12]नामधेयमिति स्मृतम् ॥ २ ॥
क्षत्रियाणां तथा वासः पुरं नगरमित्यपि । वैश्यानां पत्तनं वासो [13]मलिकाकुलमित्यपि ॥ ३ ॥

---

1 स म तथा. 2. म· ऐ ओ ब्रह्मस्थानान्तमन्त्रेन 3. म यक्षः. 4. मै. ऐ. ओ. सजप्तान्. 5 मै. म. ऐ ओ शङ्कून् 6. मे. सिद्धिषु 7 स. म. मन्त्रेण 8 श्री भूपरीक्षाविधिः. 9. म. ग्रामादिविन्यास स म. ग्रामादिनिर्माणनिर्णयलक्षणम्. ऐ. ओ. मै. ग्रामादिविन्यासः. 10. स. म. म. ऐ ओ तत्प्रभेद. 11. मै. वसन्ति वा द्विजा यत्र ग्रामे स्थान तदुच्यते. 12. श्री. स्व. म. मै. नामधेयान्तरं. 13. श्री. स. म. म. ऐ. ओ. मठिका.

—ग्रामसंस्थानभेदनामानि—

दण्डकं स्वस्तिकं चैव प्रस्तरं च प्रकीर्णकम्। [1]सन्ध्यावर्तं [2]पताकं च पद्मं च श्रीप्रतिष्ठितम् ४॥
ग्रामादि[3]षु प्रभेदोऽसौ शृणु तेषां च लक्षणम्।

—दण्डकग्रामः—

पूर्वाग्रमुत्तराग्रं च यावन्मानं भवेदथ ॥ ५ ॥
दण्डवत्तु भवेद्वीथी तद्दण्डकमुदाहृतम्।

—स्वस्तिकग्रामः—

पूर्वाग्रमुत्तराग्रं च कृत्वा वीथीद्वयं पुनः ॥ ६ ॥
दक्षिणाभिमुखो भूत्वा पूर्ववीथ्यां तु निर्गमः। पश्चिमाभिमुखो भूत्वा दक्षिणेन तु निर्गमः ॥ ७ ॥
[4]उत्तराभिमुखो भूत्वा पश्चिमेन तु निर्गमः। प्राङ्मुखस्तु ततोभूत्वा सौम्यवीथ्या तु निर्गमः ॥ ८ ॥
एवं प्रकल्पितो ग्रामः स्वस्तिकाह्वय इष्यते। [5]एवमेव तु सर्वेषां ग्रामादीनां [6]तु निर्गमः ॥ ९ ॥

—प्रस्तरग्रामः—

[7]द्विचतुःपञ्चषट्सप्तवीथयश्चेदुदङ्मुखाः। प्राङ्मुखैस्तु त्रिभिर्युक्तः [8]प्रस्तरः परिकीर्त्यते ॥ १० ॥

—प्रकीर्णकग्रामः—

पूर्वाग्रमुत्तराग्रं च रथ्याभिस्तिसृभिर्युतम्। प्रकीर्णकमिदं ज्ञेयमभिप्रेतार्थसाधनम् ॥ ११ ॥

—नन्द्यावर्तग्रामः—

पूर्वे तु दक्षिणे चैव पश्चिमे चोत्तरे तथा। ग्रामस्य निर्गमश्चैव चतुर्दिक्षु विधीयते ॥ १२ ॥
त्रयोदशाद्यैर्वीथीभिरेकैकमधिकं भवेत्। नन्द्यावर्तम्भवेत्पञ्च पञ्चभिः प्राङ्मुखैर्युतम् ॥ १३ ॥

—पताकग्रामः—

अष्टादशाद्यैरेकैकं वर्धते पञ्चभिस्तथा। उदङ्मुखैः पताकं स्यात् प्राङ्मुखैः षड्भिरेव च ॥ १४ ॥

—पद्मग्रामः—

त्रयोविंशतिवीथीनां आद्यैः पञ्चाप्युदङ्मुखैः। सप्तभिः प्राङ्मुखैर्युक्तं पद्मग्राममुदाहृतम् ॥ १५ ॥

—श्रीप्रतिष्ठितग्रामः—

अष्टाविंशतिवीथीनां पूर्वाभिश्चाप्युदङ्मुखैः। अष्टभिः प्राङ्मुखैर्युक्तं श्रीप्रतिष्ठितमुच्यते ॥ १६ ॥

1. श्री. स. म. मै. नन्द्यावर्त. 2 म. स म ऐ ओ पराग ब वराक च 3. ऐ ओ. मै. स. म. रष्टभेदोऽसौ. 4. म. अस्मिन् ग्रन्थे एष श्लोकः लुप्तः. 5. स. म. एवमेव तु. 6. स म. चतुर्मुख. 7. ऐ. ओ. स. म. म. त्रि. 8. स. म. प्रस्तर.

—॰ ग्रामादिवास्तुभूमि विभाग· ॰—

एव[1]मष्टौ विधाः प्रोक्ताः ग्रामादीनां[2]समासतः। ग्रामादिं पञ्चधा कृत्वा भागमेकं बहिस्त्यजेत् ॥१७॥

ब्राह्मं दैवं मानुषं च पैशाच[3]मिति तत्पुनः। चतुष्टयीं विजानीयात् भागानां तत्र दैविके ॥१८॥

—॰ दैविकादिभूविभागेषु परिकल्पनं.यधिष्ण्यानि ॰—

मानुषे च द्विजातीनां गृहाणि परिकल्पयेत्। पैशाचे देवधिष्ण्यानि दिक्ष्वष्टासु च मध्यमे ॥१९॥

—॰ ग्रामादिभेदेन गर्भन्यासस्थानभेदः ॰—

ग्रामस्य गर्भविन्यासो द्विजानां स्थापनात्पुरा। मध्ये कुर्यात्पुराणां तु दिश्यैन्द्र्यां पत्तनेषु च॥२०॥

कौबेर्यां दिशि गर्भस्य न्यास एवमुदाहृतः।

—॰ गर्भभाजने स्थापनीयद्रव्याणि ॰—

धातुलोहानि रत्नानि कन्दं बीजं मृदं तथा ॥ २१ ॥

भाजने लोहजे कृत्वा दारवे मृण्मयेऽपि वा। उपोषितः शुचिः स्नात्वा नववस्त्रोत्तरीयकः ॥२२॥

रात्रौ मुहूर्ते संप्राप्ते गर्भाधानं समाचरेत्। आदाय भाजनं पश्चात्स्वमात्मानं हरिं स्मरेत् ॥ २३ ॥

ध्यात्वा तु वसुधां देवीं मन्त्र[4]मेतमुदीरयेत्।

—॰ वसुधाप्रार्थनमन्त्रः ॰—

सर्वभूत[5]धरे कान्ते पर्वतस्तन[6]मण्डिते ॥ २४ ॥

समुद्रपरिधानीये देवि गर्भं समाश्रय।

—॰ न्यस्तगर्भरक्षा ॰—

श्वभ्रं मृद्भिस्ततः सम्यक् पूरयित्वा समन्ततः ॥ २५ ॥

पञ्चरात्रं त्रिरात्रं वा रक्षां कुर्यादतन्द्रितः।

—॰ आचार्यदक्षिणा ॰—

शतनिष्कं तदर्धं वा तदर्धमथवापि वा ॥ २६ ॥

[7]श्रद्धया दक्षिणां दद्यादाचार्यायाग्रहारकृत्। द्विगुणं त्रिगुणं निष्कं पुरादौ दक्षिणा स्मृता ॥ २७ ॥

—॰ गर्भन्यासानन्तरं द्विजाना गृहे सवेशः ॰—

गर्भन्यासे कृते पश्चात् द्विजान् संवेशयेद् गृहे।

1. श्री. मष्टविधं प्रोक्त. 2. श्री. विशेषत.. 3. श्री. मितरत्पुन.. 4. श्री. मेन.
5. स. म. हिते. 6. मै. मुद्रिते. 7. स. म. श्रद्धावान्.

वास्तुदेवस्थानम्

वास्तुदेवान् यथान्यायं क्रमेण स्थापयेत् सुधीः ॥ २८ ॥

पञ्चमूर्तेर्हरेः ग्रामादौ स्थापने पञ्चयज्ञादि साफल्यम्

स्थापयेत् ग्राम[1]मध्ये तु पञ्चमूर्तिमयं हरिम्। विप्राणां पञ्चयज्ञोऽयं एवं[2]साफल्यमश्नुते ॥ २९॥

चातुराश्रम्यसिध्यर्थं चतुर्मूर्तिमथापि वा। सर्वार्थमेकमूर्तिं वा ग्राममध्ये[3]समर्चयेत् ॥ ३० ॥

योगिनं भोगिनं वापि कारयेदच्युतं प्रभुम्। आसीनं वा शयानं वा तिष्ठन्तं वा समर्चयेत् ॥ ३१ ॥

सृष्टिकृद्भोगशयनं देवदेवस्य कीर्त्यते। संहारं[4]भोगशयनं तथा नरहरेर्वपुः ॥ ३२ ॥

जामदग्न्यं नार्चयेत्

विश्वरूपधरं देवं जामदग्न्यं च नार्चयेत्।

आलयद्वाराणां दिग्भेदेन फलभेदः

प्राग्द्वारं [5]सुखदं विद्धि पश्चिमं पुष्टिवर्धनम् ॥ ३३ ॥

धनदं चोत्तरं द्वारं द्वारं याम्यं च मोक्षदम्।

भास्करादीनां स्थानद्वारनिरूपणम्

ऐन्द्रे तु[6]भास्करस्थानं प्रत्यग्द्वारं तु कल्पयेत् ॥ ३४ ॥

पावके [7]मदनस्थानं प्रत्यग्द्वारं प्रकल्पयेत्। सुब्रह्मण्यस्य याम्ये स्यात् पूर्वद्वारनिकेतनम् ॥ ३५ ॥

नैर्ऋते विघ्नराजस्य पूर्वद्वारं [8]प्रकल्पयेत्। वारुण्यां स्थापयेद्विष्णुं श्रीभूमिसहितं स्थितम् ॥ ३६ ॥

आसीनं वा श्रियोपेतं गरुडारूढमेव वा। विश्वरूपधरं भोगशयनं वा प्रकल्पयेत् ॥ ३७ ॥

प्राङ्मुखं तु प्रकुर्वीत पश्चिमे विष्णुमन्दिरम्। पश्चिमे तु श्रियःस्थानं अथवा कल्पयेद्बुधः ॥ ३८ ॥

वायव्यां प्राङ्मुखं स्थानं दुर्गायै परिकल्पयेत्। धनदं चोत्तरे [9]स्थानं जम्भलादिसमन्वितम् ॥ ३९ ॥

ऐशान्या[10]मैश्वरं स्थानं सोमेशानान्तरेऽपि वा। इन्द्रेशानान्तरे वापि नान्यत्र परिकल्पयेत् ॥४०॥

आग्नेय्यां च महामोटीं ग्रामाद्दूरतरे स्थिताम्। नैर्ऋते चैव शास्तारं ग्रामाद्दूरतरे स्थितम् ॥ ४१ ॥

ग्रामस्य चोत्तरे पार्श्वे किञ्चिद्दूरतरे स्थितम्। मातृस्थानं भवेत्तत्र सर्वास्ताश्चोत्तराननाः ॥ ४२ ॥

ऐशान्यां वाथ मातृणां नातिदूरे गृहं भवेत्। आग्नेय्यां वा गुहं दुर्गां वायुसोमान्तरेऽपि वा ॥४३॥

1. म. मुख्ये. 2. स. म. संकल्पं. 3. मै., समर्पयेत्. 4. श्री. स. म. ए. ओ. योगशयनं.
5. स. म. ए. ओ. शुभदं. 6. मै. भास्वर. 7. स. म. मदनद्वारं. 8. श्री. स. म. ए. ओ. भवेत्स्मृतम्.
9. श्री. स. म. मै. स्थाप्यं. 10. श्री. स. म. ए. ओ. ईश्वरं कुर्यात्.

रज्जुपातत्रिशूलसूत्रसन्ध्यादिषु देवस्थानगृहादीनां निषेधः

रज्जुपातेषु[1] सर्वत्र त्रिशूले[2] सूत्रसन्धिषु । देवस्थानं न कर्तव्यं वीथ्यग्रेषु विशेषतः ॥ ४४ ॥
गृहाश्च नैव कर्तव्यास्तत्र वंशर्धिमिच्छता । प्रमादात्तेषु कुर्याच्चेत् ग्रामादीनां क्षयो भवेत् ॥ ४५ ॥

ग्राममध्ये हरेरर्चनं मन्त्रक्रियादि सर्वलोपानां प्रायश्चित्त भवति

[3] मन्त्रहानौ क्रियाहानौ हव्यकव्यादिकर्मसु । प्रायश्चित्तं भवेत्तस्य ग्राममध्यार्चनं हरेः ॥ ४६ ॥

भास्करादिपरिवाराणामर्चने फलविशेषः

आराधने भास्करस्य ग्रामे रोगो न जायते । सौभाग्यसौम्यसौन्दर्यगुणाः कामस्य पूजनात् ॥ ४७ ॥
भूतादयो नृणां [4] नैव भवेयुर्गुहपूजनात् । सर्वे विघ्ना विनश्यन्ति विघ्नराजस्य पूजनात् ॥ ४८ ॥
वारुण्यां पूजयेद्विष्णुं भुक्तिमुक्तिफलप्रदम् । दुर्गां संपूजयेद्देवीं नित्यमायु[5] र्विवृद्धये ॥ ४९ ॥
धनधान्यसमृद्धिः स्यात् कुबेरपरिचर्यया । ज्ञानवन्तो नराः सर्वे भवेयुः शिवपूजनात् ॥ ५० ॥
मोटीपूजनया[6] चैव बालानां न विपद्भवेत् । [7] शास्तुः पूजनया[8] चैव [9] पुष्यन्ति ग्रामवासिनः ॥५१॥
मातृपूजनया नित्यं पिशाचा नैव पीडकाः ।

पुरमलिकयोर्मध्ये हरेः स्थापननिषेधः

पुरे च [10] मलिकायां च मध्ये न [11] स्थापयेद्धरिम् ॥ ५२ ॥

अनुलोमजानां मध्ये हर्यर्चननिषेधः

वासोऽनुलोमजानां च मध्ये न हरिमर्चयेत् ।

शूद्रादीना वास्तुदेवतानिषेधः

शूद्राणां प्रतिलोमानां न वास्तु न च देवता ॥ ५३ ॥
यदि स्यादविवेकेन राजा राष्ट्रं च नश्यति ।

ग्रामादौ देवोत्सवार्थे वास्तुदेवकल्पननिषेधः

देवोत्सवार्थे ग्रामादौ वास्तुदेवान्न कल्पयेत् ॥ ५४ ॥
[12] अङ्गिनो नैव स्वाङ्गानि कल्पयन्ति स्वतन्त्रवत् । कल्पयेयुः[13] प्रजानां च राष्ट्रस्य प्रतिकूलकाः ॥५५॥

---

1. श्री सर्वेषु, स म मध्येषु 2 स म मध्यसन्धिषु,–ऐ ओ मूर्ध्निसन्धिषु 3 ऐ ओ मै. मन्त्रहीन क्रियाहीन हव्यकव्येषु 4 म मै चैव 5 ऐ ओ विवर्धनाम् 6 स म. मै ऐ ओ श्री. नित्य 7 वे वास्तु 8 स म म ऐ ओ श्री नित्य 9 म. रक्षति 10 श्री. मठि. 11. ऐ. ओ. हरिमर्चयेत् 12. श्री. अङ्गानि 13 मै ऐ ओ. प्रजा राज्ञो राष्ट्रस्य प्रतिकूलता.

मूर्तीनां केशवादीनां मत्स्यादीनां तथैव च । अन्तरालेषु सर्वेषु दिक्षु चैव विदिक्षु च ॥ ५६ ॥
सर्वत्र भगवद्गेहं ग्रामादौ कारयेत्सुधीः । ग्रामप्रेक्षं न कुर्वीत उग्रमुग्रायुधोद्यतम् ॥ ५७ ॥
जामदग्न्यं नृसिंहं च संहारशयनं तथा । सर्वत्र भोगशयनं भोग[1]स्थानं तथैव च ॥ ५८ ॥
भोगा[2]सनं च सर्वत्र शयनं सृष्टिसंज्ञिनम् । यानकं च [3]क्रियोपेतं [4]सर्वत्रैव तु कारयेत् ॥ ५९ ॥

ग्रामस्यान्तरा शूलिनो न्यासनिषेधः

ग्रामान्तरे न कुर्वीत स्थानं देवस्य शूलिनः । विनश्यत्यचिराद्ग्रामो राजा राष्ट्रं तथैव च ॥ ६० ॥
तस्माद्दूरतरे कुर्यात् ग्रामादीनामुमापतिम् ।

देवताभेदेन पूजकभेदः

एवं संस्थाप्य दिग्देवान् पूजकः पूजयेत् क्रमात् ॥ ६१ ॥
विष्णोर्भागवतैरेव पञ्चरात्रपरायणैः । पूजा कार्या न सामान्यदेवतामातृपूजकैः ॥ ६२ ॥
शिवस्य शिवशास्त्रज्ञैः पूजनं च शिवद्विजैः । सोमपाभिर्द्विजश्रेष्ठैः कार्यं दिनकरार्चनम् ॥ ६३ ॥
मदनं गणनाथं च सुब्रह्मण्यं शिवद्विजः । पूजयेद्धनदादीनां पूजको विप्र इष्यते ॥ ६४ ॥
दुर्गां संपूजयेद्देवीं सदा भागवतः स्वयम् । मातॄणामर्चनं कार्यं तज्ज्ञैः पारशवैस्तथा ॥ ६५ ॥
शास्तारं च महामोटीं कुलालः पूजयेत्सदा ।

सुवर्णकाराम्बष्ठानां ग्रामस्यान्तः प्रकल्पनम्

[5]स्वर्णाम्बष्ठकलाभिज्ञान् ग्रामस्यान्तः [6]प्रकल्पयेत् ॥ ६६ ॥

प्रतिलोमादीनां स्थानम्

अन्येषां प्रतिलोमानां बहिर्ग्रामात्प्रकल्पयेत् । प्राच्यां दिश्यनुलोमानां स्थापनं [7]कर्मिणां भवेत् ॥६७॥
सर्वेषां प्रतिलोमानां दक्षिणादिषु कल्पनम् । श्रेणीभ्योऽपि बहिर्दूरे चण्डाला नैर्ऋते स्मृताः ॥६८॥

सामान्येन श्मशानस्थानम्

ग्रामस्य चोत्तरे दूरे श्मशानमुदकाशये ।

द्विजाना श्मशाने स्थानविशेषः

याम्ये तटे तटाकस्य श्मशानं स्याद् द्विजन्मनाम् ॥ ६९ ॥
सर्वेषा[8]मनुलोमानां दाहः प्राच्यादिरोधसि । अन्येषां प्रतिलोमानां दिशः प्राच्यादयो विदुः ॥ ७० ॥

---

1. श्री. स्थानकमेव च 2 श्री स्थान 3 ऐ ओ स म म श्रियो 4 ऐ ओ सर्व चैव.
5. ऐ ओ. स म म. सवर्णाम्बष्ठकालज्ञान् 6 श्री. न कल्पयेत् 7. श्री. स. म. मै. कर्मणाम्
8. ऐ. ओ. प्रतिलोमानाम्.

इत्थं प्रकल्पयेद्ग्रामं नगरं कुलमेव वा । मुक्तिमाप्नोति [1]पुरुषः पुनर्नेहोपजायते ॥ ७१ ॥
उपकुर्वन्ति ये मर्त्या द्रव्यैर्वा [2]मानसेन वा । स्वर्गलोके वसन्त्येते कालं कल्पावसानिकम् ॥ ७२ ॥
रक्षन्ति ये यथाक्लृप्तं ग्रामादीन् पृथिवीश्वराः । ते यान्ति कीर्तिमतुलां नाकपृष्ठे वसन्ति च ॥ ७३ ॥
ये चालयन्ति मनुजाः जायन्ते ते श्वयोनिषु ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे ग्रामादिविन्यासो नाम द्वितीयोऽध्यायः ॥

---

# तृतीयोऽध्यायः ।

## मन्दिरनिर्माणविधिः

ब्रह्मन् मन्दिरनिर्माणं तव वक्ष्यामि तच्छृणु ।

## कर्षणार्थ भूसस्कारः

पूर्वोक्तां भूमिमासाद्य प्रवेशबलिपूर्वकम् ॥ १ ॥
भूमिं प्रदक्षिणं कृत्वा मन्त्रमेतमुदीरयेत् । [3]यक्षाः पिशाचा नागाश्च येऽत्र तिष्ठन्ति सर्वदा ॥ २ ॥
सर्वे प्रयान्तु तेऽन्यत्र विष्णोः स्थानं करोम्यहम् ।
ततोऽस्त्रमन्त्रसंसिद्धान् सिद्धार्थान् सर्वतः क्षिपेत् ॥ ३ ॥
पूर्ववद्वास्तु होमं च कुर्याद्वास्तुबलिं तथा ।

## ब्राह्मणादिकर्षकभेदेन अनडुहो वर्णभेदः

ततो भागवताचार्यो हलेन विलिखेद् भुवम् ॥ ४ ॥
ब्राह्मणो यजमानः स्यात् अनड्वान् गौरवर्णकः । क्षत्रियो लोहितो वैश्यः पीतः शूद्रस्तु मेचकः ॥ ५ ॥
यथोक्तवर्णालाभे तु कपिलो गौर एव वा । ऋषभौ रक्तवर्णौ[4] तु महान्तौ सबलौ मतौ ॥ ६ ॥
क्षालयेत् खुरशृङ्गादीन् भूषयेत् कनकादिभिः ।

## कर्षकवर्णानुगुणं हलयुगादिवैविध्यम्

हलं युगं च पालाशं ब्राह्मणस्य विधीयते ॥ ७ ॥
न्यग्रोधं क्षत्रियस्य स्यात् प्लाक्षं विट्शूद्रयोर्भवेत् । न्यग्रोधपिप्पलौ स्यातां सर्वेषां युगलाङ्गलौ ॥ ८ ॥
सर्वेषामेव वर्णानां सौवर्णः कुशिको भवेत् । राजतं ताम्रमथवा योक्त्रं तेषां यथाक्रमम् ॥ ९ ॥

---

1 श्री स पुमान् पुनरेव न जायते. 2 श्री मानसापि वा 3 ऐ ओ स. म. मै. यत्र.
4. म. ऐ. ओ. तौ.

कुशा धनुर्ज्या वीरण्यः काशा रज्जुश्च [1]तन्मयी। [2]हलभूतं च मेधिं च कारयेदेकयोनिकम्॥ १०॥

—— कर्षकस्य अङ्गप्रसाधनम् ——

स्नातो नवाम्बरधरः सोष्णीषः शुचिरात्मवान्। माल्यानुलेपनायुक्तः सोत्तरीयपरिच्छदः॥ ११॥
भूषितः स्वयमाचार्यः पादौ प्रक्षालयेत्ततः। आचम्यायम्य च प्राणान् न्यासं कृत्वा यथाविधि॥१२॥
द्विजेन्द्रैरभ्यनुज्ञातः कर्षणं प्रारभेत्ततः।

—— पुण्याहपूर्वकं मन्त्रेण हलयुगादियोजनम् ——

पुण्याहं वाचयित्वा तु वैष्णवैर्मन्त्रवित्तमैः॥ १३॥
योजयेद् वृषभस्कन्धे युगं वै मूलविद्यया। लाङ्गलं च युगेनैव योजयेद्विद्यया तथा॥ १४॥
सुमुहूर्ते सुलग्ने च कर्षयेत् प्राङ्मुखः स्थितः। भेरीपटहशङ्खादीन् घोषयेत् सर्वदिक्षु च॥ १५॥
सूक्तं शाकुनिकं विप्राः पठेयुः सर्वशान्तिदम्। हृत्सरोजे च मां ध्यायेद्विद्यारूपेण चक्षुषा॥ १६॥
दण्डं [3]प्रवहणं कुर्यात् पालाशादि [4]महीरुहान्।

—— कर्षणविधिः ——

आदाय तोदनं पश्चात्पीडयेत् हुंफडादिना॥ १७॥
प्राङ्मुखः प्रथमं ब्रह्मन् कर्षयेन्मूलविद्यया। सूक्तेन पौरुषेणैव द्वितीयं भूमिकर्षणम्॥ १८॥
तृतीयं विष्णुसूक्तेन तद्गायत्र्या तुरीयकम्। नारायणानुवाकेन कर्षणं पञ्चमं स्मृतम्॥ १९॥
पञ्चोपनिषदैर्मन्त्रैः षष्ठं स्याद् भूमिकर्षणम्। सप्तमं भूमिसूक्तेन कर्षयेद्देशिकोत्तमः॥ २०॥
प्रदक्षिणक्रमेणैव सीता स्यात्कमलासन। दक्षिणोत्तरतस्तद्वत् कर्षयेत्पञ्चरात्रवित्॥ २१॥

—— निमित्तपरीक्षा ——

निमित्तानि परीक्षेत तत्काले देशिकोत्तमः। देशिकस्य मनस्तुष्टिस्तत्काले शर्मणे भवेत्॥ २२॥
विपर्यये क्षयं विद्धि प्रासादयजमानयोः। अनड्वच्छयने चैव योक्त्रादीनां च भेदने॥ २३॥
व्यत्यासे भ्रमणे चैव दुर्निमित्तोदये तथा। अर्थच्छेदो भवेत् सूत्रः स्वामिनो मरणं ध्रुवम्॥ २४॥
तृतीयभागे च्छेदे च राष्ट्रक्षोभो भवेद् ध्रुवम्। विच्छेदेऽपि चतुर्भागे प्रयोक्तृभ्रंश उच्यते॥ २५॥

—— दुर्निमित्ते शान्तिः ——

पञ्चोपनिषदा कुर्याच्छतं वारान् घृताहुतीः। शाम्यन्ति दोषास्ते सर्वे [5]नार्तिमृच्छेत्प्रयोजकः॥ २६॥

---

1. श्री. तन्मय· 2. श्री. म. युगं च हलमेधिं. 3. ब. ऐ. ओ. प्रवयणं. 4. ऐ, ओ. महीरुहाम्. ऐ. ओ. 5. शान्ति.

आचार्यो यजमानस्तु ब्राह्मणान् भोजयेद्धनैः।

भूसमीकरणबीजावापौ

कृष्टां भुवं समीकुर्यात् यत्नेन महता [2]वृतः ॥ २७ ॥

आलवालान् [3]पृथक् कृत्वा जलकुल्यासमन्वितान्। शालिमुद्गयवादीनि तत्र बीजानि वापयेत् ॥ २८ ॥

सिक्तं प्रतिदिनं क्षेत्रं तोयेन महता भवेत्। रक्षां च कुर्या[4]द्यत्नेन परिपाकावसानिकम् ॥ २९ ॥

पक्वं लुनीयात्तत्क्षेत्रमानयेत् गोकुलानि तत्।

फलवृद्धिह्रासयोः फलम्

फले महति तद्ग्राम दीर्घकालं भविष्यति ॥ ३० ॥

अल्पे त्वल्पतरं कालं प्रासादे सन्निधिर्हरेः। फलहीने भवेद्ग्राम प्रक्षीणधनधान्यकम् ॥ ३१ ॥

ब्राह्मणान् भोजयेत्तत्र सहस्रं शतमेव वा। भुक्तवद्भ्यो धनं दद्याद् ब्राह्मणेभ्यो गवादिकम् ॥ ३२ ॥

भूशोधनम्

प्रोक्षयेत् पञ्चगव्येन पञ्चोपनिषदा भुवम्। कुद्दालैर्वा खनित्रैर्वा यावदम्भः खनेत् क्षितिम् ॥ ३३ ॥

प्रथमावरणं यावत् तावद्विस्तार इष्यते। दण्डमात्रायतं [5]खातं खनेद्वा कमलासन ॥ ३४ ॥

क्षेत्रदोषानुरूपेण मन्दिरोच्छ्रायणेऽपि वा।

तुषाङ्गारादिलाभे शान्तिः

भूतले खन्यमाने तु भस्माङ्गारतुषादिकम् ॥ ३५ ॥

दुष्टसत्वोपलम्भे तु कृमिकीटादिदर्शने। जुहुयाच्छान्तये तेषामाचार्यः सर्पिरादिना ॥ ३६ ॥

ब्राह्मणेभ्यो यथाशक्ति दद्याद्धेमादिकं धनम्।

रत्नादिलाभे समृद्धिः

रत्नादिदर्शने धाम समृद्धं [6]सर्वदा भवेत् ॥ ३७ ॥

होमकुम्भस्थापनादिविधिः

[7]खात्वा होमं बहिः [8]खातात् स्थण्डिले चतुरश्रके। स्थापयित्वाग्निमादीप्य कुर्यादाज्येन देशिकः ॥३८॥

मूलमन्त्रेण सूक्तेन पौरुषेण चरुं पुनः। गुग्गुलं तिलनीवारं जुहुयान्मूलविद्यया ॥ ३९ ॥

पुण्याहं वाचयित्वा तु शालिं खाते विनिक्षिपेत्। कुम्भानुपरि शालीनां सूत्रवस्त्रादिवेष्टितान् ॥४०॥

---

1. श्री. तोषये. 2. स. म म. ऐ ओ ततः. 3. ऐ. ओ. म ततः. 4. स. म. म. ऐ. ओ. श्री. सर्वत्र. 5. स म ऐ ओ. गाधं. 6. ब. सर्वकामदम्. 7. ऐ. ओ. खातहोमं. 8. स. म. कृत्वा.

कुम्भा लोहमयाः प्रोक्ताः तदभावे तु मृण्मयाः ।
आधारशक्तिं सौवर्णीं कृत्वा कुम्भे विनिक्षिपेत् ॥ ४१ ॥
मध्यमे तदनु प्राच्यां कुम्भे बीजानि निक्षिपेत् । आग्नेय्यां सर्वलोहानि सर्वधातूनि दक्षिणे ॥ ४२ ॥
पुण्यतीर्थमृदं कुम्भे नैर्ऋते वारुणे पुनः । मधुना पूरयेत् कुम्भं वायवीयं तु सर्पिषा ॥ ४३ ॥
रत्नैर्धानेश्वरे कुम्भे ऐशाने [1]शैलमृत्तिकाम् । निक्षिपेन्मध्यकुम्भे तु शालिक्षेत्रमृदं तथा ॥ ४४ ॥
अशोष्यह्रदसंभूतां वल्मीकभवमृत्तिकाम् । कन्दानि चोत्पलादीनां प्रक्षिपेत् प्राङ्मुखः स्थितः ॥ ४५ ॥
लोहरत्नानि च तथा निदध्या[2]द्दर्भकूर्चकम् । अपि दध्याच्छरावेण क्रमेण परिपूजयेत् ॥ ४६ ॥
कुम्भस्योपरि मध्यस्य कुम्भमन्यं निवेशयेत् । विधाय [3]कूर्मं कालाग्निं सौवर्णं तत्र निक्षिपेत् ॥ ४७ ॥
कुम्भं तृतीयं विन्यस्य तत्रानन्ताकृतिं क्षिपेत् । चतुर्थं वसुधाधारमुपरिष्टात् [4]घटं क्षिपेत् ॥ ४८ ॥
गन्धोदकेन तान् कुम्भान् पूरयित्वा समर्चयेत् । खातमृद्भिश्च पुण्याभिरस्पृष्टाभिश्च दूषणैः ॥ ४९ ॥
पूरयेद्वालुकाभिश्च जलैश्चोपरि पूरयेत् । हस्तिपादैर्दृढं कृत्वा पुनस्तोयैश्च पूरयेत् ॥ ५० ॥

इति पाञ्चरात्रे महोपनिषदि श्रीपाञ्चसंहितायां क्रियापादे कर्षणविधिर्नाम तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः ।

### विघ्ननिवारणोपायप्रश्नः

ब्रह्मा—

आरभ्यमाणे प्रासादे ग्रामादौ च जनार्दन । ये विघ्नकारिणो दैत्ययक्षराक्षसदानवाः ॥ १ ॥
तेषां भवेद्यथा शान्तिः तद्ब्रूहि भगवन्मम ।

### बालालये भगवतोऽर्चनेन विघ्नशान्तिः

श्रीभगवान्—

कृत्वा बालगृहं पूर्वं तत्र मामर्चयेत्सुधीः ॥ २ ॥
प्रत्यूहकारिणः सर्वे तेन शाम्यन्ति ते ध्रुवम् । ग्रामादिश्चाचिरादेव निष्प्रत्यूहं समाप्यते ॥ ३ ॥

### बालगृहनिर्माणदिगादि

इन्द्रेशानान्तरे वापि सोमेशानान्तरेऽपि वा । इन्द्राग्निमध्ये वा [5]मध्ये पावकस्य यमस्य च ॥ ४ ॥
यमस्य निर्ऋतेर्मध्ये निर्ऋतेर्वरुणस्य [6]वा । मध्ये वरुण[7]वायोर्वा वायोः सोमस्य [8]वान्तरे ॥ ५ ॥

---

1. म. लोह. 2. स. म ऐ ओ म ब्रह्म. 3 म कूर्च. 4 श्री. घटे. 5 म ब्रह्मन्. 6. श्री. च. 7. श्री. वायव्ये. 8. श्री. चान्तरे.

यथाभिमतमेतेषां आरम्भायतनं प्रति । स्थाने बालगृहं विद्यात् सप्तपञ्चत्रिहस्तकम् ॥ ६ ॥
धाम्नो मूलस्य बलभिद्दिशि यत्र[1]प्रकल्पितम् । द्वारं बालालयस्यापि तत्रैव परिकल्पयेत् ॥ ७ ॥

बालालये अर्चनीयबिम्बमानम्

बिम्बं बालालये लौहमाश्मनं वाऽथ दारवम् शङ्खचक्रगदापद्मदिव्यायुधचतुर्भुजम् ॥ ८ ॥
उत्सेधस्तस्य बिम्बस्य हासे पञ्चाङ्गुलो भवेत् । त्रयश्च विंशतिश्चैव वृद्धावङ्गुलयः स्मृताः ॥ ९ ॥
मानं सुखावहं यत्स्यात् यजमानस्य तद्भवेत् । मत्स्यादिष्ववतारेषु कल्पेष्वारभ्य मन्दिरे ॥ १० ॥
बालालयेऽपि तद्वत्स्याद्विश्वरूपे [2]चतुर्भुजः । यानके यानकं वापि [3]स्थापनं वापि कल्पयेत् ॥ ११ ॥
जलेऽधिवास्य तद्बिम्बं मण्डपे चाधिवासयेत् ।

वेदिकल्पनम्

बालालयस्य मध्ये वा भागे दिव्येऽपि [4]वांशके ॥ १२ ॥
मेखलात्रयसंयुक्तां वेदिं हस्तसमुच्छ्रिताम् । कृत्वा प्रभाते विमले मुहूर्ते शोभने गुरुः ॥ १३ ॥
मूलमन्त्रेण वेद्यान्तु बालबिम्बं निवेशयेत् । स्थापयित्वा हरिं तत्र मन्त्रं न्यस्येद्यथाविधि ॥ १४ ॥

भगवत्प्रार्थना

प्रार्थयेत हरेस्तत्र सन्निधिं बालमन्दिरे । आमूलधाम निर्वृत्ति[5]समयाद्देशिकोत्तमः ॥ १५ ॥
"पूजां गृहीष्व भगवन् अस्मिँस्त्वं बालसद्मनि । शमयन् मूलधिष्ण्यस्य विघ्नकृद्दैत्यसन्ततिम्" ॥ १६ ॥

परिवारकल्पनम्

इति विज्ञाप्य नत्वा च परिवारान् प्रकल्पयेत् । द्वारे चण्डं प्रचण्डं च क्षेत्रपालं खगेश्वरम् ॥ १७ ॥
इन्द्रादीन् लोकपालाँश्च स्वासु दिक्षु प्रकल्पयेत् । सेनेशमीशकोणे तु गणेशं नैर्ऋते यजेत् ॥ १८ ॥
अशरीरगतान् देवान् स्थण्डिले पूजयेद् बुधः ।

स्थण्डिलमानम्

स्थण्डिलं हस्तमात्रं तु मेखलात्रयसंयुतम् ॥ १९ ॥
वृत्तं वा चतुरश्रं वा कृत्वा तत्र समर्चयेत् । कुमुदादिगणान् सर्वान् महापीठे समर्चयेत् ॥ २० ॥

ध्वजारोहणादि पुष्पयागावसानिकं सर्वं बालालये कुर्यात्

एवं संस्थाप्य मेधावी कुर्यादन्ते महोत्सवम् । ध्वजारोहणपूर्वं स्यात्पुष्पयागाव[6]सानिकम् ॥ २१ ॥
एकाहमथवा कुर्यादुत्सवं बालमन्दिरे । लोहजं बालबिम्बं चेत् तेनैवोत्सवमाचरेत् ॥ २२ ॥

1. श्री प्रकल्पयेत् 2 श्री चतुर्भुजम् 3 ऐ ओ स. म म स्थानकं 4 स म. शाङ्करे.
5. मै. समासात्. 6. श्री. सानकम्

नित्यं नैमित्तिकं काम्यं कर्म बालालये भवेत् ।

उत्सवबिम्बाभावे बालबिम्बेनैवोत्सवं चरेत्

उत्सवार्थं न चेद्बिम्बं बालेनैवोत्सवो भवेत् ॥ २३ ॥

बालबिम्बेनोत्सवे चतुर्थस्नपननिषेधः

न कुर्यात् [1]तत्र विन्यासं [2]चतुर्थस्नपनं तथा ॥ २४ ॥

आलये उत्तमादिभेदः

आरभेत स्थपतिभिः साकं रथकृदालयम् । मुख्यं शिलामयं [3]गेहं मध्यमं [4]चेष्टकादिकम् ॥ २५ ॥
जघन्यं दारुजं विद्यान्मृण्मयं हेयमुच्यते ।

सञ्चितासञ्चिताद्यालयभेदः

मिश्रैः शिलादिभिर्द्रव्यैरेकानेकत्वयोगतः ॥ २६ ॥

सञ्चितासञ्चिते स्यातामुपसञ्चितमेव वा । द्रव्येणैकेन यद्धाम स्थूप्यन्तं परिकल्पितम् ॥ २७ ॥
श्रेष्ठं तत् सञ्चितं विद्याद् द्रव्ययुग्ममसञ्चितम् । सदनं मध्यमं [5]तत्स्यान्मृ[6]द्भिर्दार्वादिभिःकृतम् ॥ २८ ॥
उपसञ्चितमाख्यातं अधमं धाम तद्भवेत् ।

गर्भवच्छिलादारुभिरालयनिर्माणे दोषः

गर्भयुक्तशिलादारु वर्जयेद्देवतालये ॥ २९ ॥

कुर्याच्चे[7]द्दामयी स स्याद्यजमानो न संशयः ।

देवतान्तरसद्मस्थशिलादिग्रहणे दोषाधिक्यम्

देवतान्तरसद्मस्थं न गृह्णीयाच्छिलादिकम् ॥ ३० ॥

तेनैव सदनं कुर्वन्नाशयेद्वंशमात्मनः । पच्यते नरके घोरे जायते च श्वयोनिषु ॥ ३१ ॥
मठकूपतटाकादेरप्यग्राह्यं शिलादिकम् । नरके पच्यते घोरे जायते निर्धनश्च सः ॥ ३२ ॥
वासुदेवालयाद्दारु पाषाणं वा तदिष्टकान् । गृहीत्वा धिष्ण्यनिर्माणे कर्ता दुःखैकभाजनम् ॥ ३३ ॥
पर्यायेण व्रजेद्घोरान् नरकान् भृशदारुणान् । पच्यते तेषु दुःखेषु पर्यायेण सदा नरः ॥ ३४ ॥

न्यायान्यायार्जितद्रव्यैरालयनिर्माणे फलम्

न्यायेन सञ्चितैर्द्रव्यैर्निर्मिते सदने हरेः । फलमक्षयमाप्नोति यजमानो न संशयः ॥ ३५ ॥

---

1. श्री. रत्न. 2. ऐ ओ. चतुर्थी. 3 श्री. धाम 4. श्री चेष्टकामता. 5. श्री. विद्यात्.
6. स. म. ऐ ओ. त्रिभिर्द्रव्यादिभिः कृतम् म. त्रिभिर्द्रव्यैः प्रकल्पयेत्. 7. श्री. दामयं विद्यात्.

अन्यायोपार्जितैर्द्रव्यैरसुरैर्भुज्यते फलम् ।

—⊷ जलेन समतावीक्षणम् ⊶—

जलेन समतां वीक्ष्य विन्यस्य प्रकृतिं क्षितौ ॥ ३६ ॥

तस्मिन्नाधाय फलकां प्रथमां शास्त्रचक्षुषा । सुधया तां दृढीकृत्य जानीयात् समतां जलैः ॥ ३७ ॥

—⊷ उपपीठादिकल्पनम् ⊶—

कृत्वोपपीठमुपरि स्यादधिष्ठानमुत्तमम् । विना वाप्युपपीठेन स्यादधिष्ठानकल्पनम् ॥ ३८ ॥

[1]अथवा कल्पये[2]त्पूर्वमधिष्ठानमुपानहम् । पादं च प्रस्तरं चैव ग्रीवां च शिखरं तथा ॥ ३९ ॥

कुर्याद्यथाक्रमं यावत् [3]तृप्येरन् तलकल्पने ।

—⊷ द्वितलाद्यद्वादशतलावधि कल्पनीयाङ्गानि ⊶—

द्वितले धाम्न्यधिष्ठानं चरणं प्रस्तरं तथा ॥ ४० ॥

कूटं च शालां संस्थानं पञ्जरं प्रस्तरं पुनः । वेदिं ग्रीवां च शिखरं क्रमेण [4]परिकल्पयेत् ॥ ४१ ॥

त्रितलादिविमानानामाद्या दश[5]तलावधि । एवं प्रकल्प्य शास्त्रोक्तमितरेष्वपि कल्पयेत् ॥ ४२ ॥

—⊷ अष्टादशधाम्नोऽङ्गानि ⊶—

उपानं जगतीं चैव कुमुदं पट्टिकां तथा । कण्ठं च पट्टिकां चैव चरणं च तलोत्तरम् ॥ ४३ ॥

*हंसमाला कपोतश्च प्रतिश्च प्रतिवेदिका । [6]कण्ठं च शिखरं चैव क्रमेणाष्टादशाङ्गकम् ॥ ४४ ॥

धाम्नः स्थूप्यन्तमथवा यजमानानुरूपतः । कुर्यात्पटादौ निर्माणं कृत्वा पूर्वं विचक्षणः ॥ ४५ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे शिखरनिर्माणं नाम चतुर्थोऽध्यायः ॥

---

# पञ्चमोऽध्यायः ।

—⊷ दिक्परीक्षा ⊶—

श्रीभगवान्—

प्राचीं परीक्षयेत् पूर्वं दिशं शास्त्रोक्तवर्त्मना । प्राच्यादिदिग्विभागेन द्वारादिविधिरिष्यते ॥ १ ॥

—⊷ शङ्कुस्थापनम् ⊶—

हस्तमानायतं [7]शङ्कुं द्वादशाङ्गुलमेव वा । क्षीरवृक्षजमङ्गुष्ठपरिणाहमृजुं शुभम् ॥ २ ।

---

1. अत्र श्रीग्रन्थे अधोनिर्दिष्टोऽर्धश्लोकः अधिकतया दृश्यते :—
उपानहं कल्पयित्वा स्यादधिष्ठानकल्पनम् । 2. श्री. कूर्च. 3. श्री. स्तूप्येकतल.
4. श्री. स्तूपिकल्पनम्. 5. श्री. तलान्तिमम्

* श्री. ग्रन्थे अत्र एष श्लोकः अधिकतया दृश्यते :—
कर्णं च पट्टिकां चैव महतीं पट्टिकां तथा । वाजनं वेदिका चैव चरणं वोधिकोत्तरम् ॥

6. श्री. कर्ण. 7. श्री. शङ्कुं.

प्रासादस्थानमध्ये तु स्थापयेन्मूलविद्यया । शङ्कोर्द्विगुणमानेन परितो मण्डलं लिखेत् ॥ ३ ॥
मण्डलान्ते लिखेच्छायां शङ्कोः पूर्वापराह्नयोः । न्यस्य बिन्दुद्वयं सूत्रं प्राक्प्रत्यक्संस्थितं लिखेत् ॥४॥
बिन्दुद्वयान्तरं ग्राह्यं कच्छ[1]पानन[2]पुच्छकम् । जातप्राक्सौम्यदिक्सूत्रमेवं सूत्रे [3]समीकृते ॥ ५ ॥
सीमासूत्र[4]मिति भ्रान्त[5]मुत्तराद्यं पदं लिखेत् । अष्टदिक्षु यथान्यायं सीमासूत्र तथा लिखेत् ॥ ६ ॥
त्रिपञ्चसप्तहस्तं वा अधिकं वा यथेच्छया । कुर्यात् तत्सूत्रविन्यासं [6]ग्राम्यास्थानसमृद्धये । ७ ॥
दिक्सूत्रं भ्रमणेनैव चतुरश्रं नयेत्पुनः । अष्टदिक्षु यथान्याय्यं शङ्कुस्थापनमाचरेत् ॥ ८ ॥
शङ्कुसंस्थापनाकाले निमित्तानि च लक्षयेत् । शुभं चेत् सिद्धिमाप्नोति अशुभे शान्तिमाचरेत् ॥९॥

—— प्रासादसस्थाननिर्देशः ——

चतुरश्रं सुवृत्तं च चतुरश्रायतं तु वा । वृत्तायतं वा कुर्वीत प्रासादं तु चतुर्विधम् ॥ १० ॥
स्थित्यासनानि यानानि चतुरश्रे च वृत्तके । वृत्तायते [7]सुवृत्ते वा चतुरश्रायतेऽपि [8]वा ॥ ११ ॥
शयनं [9]तत्र कुर्वीत विश्वरूपं तथैव च । लोककान्तं सुरेशेशं तत्र कुर्याद्विचक्षणः ॥ १२ ॥
एवं [10]बिम्बानुसारेण प्रासादं कारयेद् बुधः ।

—— विष्णवालयस्य अयुग्महस्तेन मानम् ——

[11]आरभ्य चैकहस्तादि [12]दशहस्तान्तमेव हि ॥ १३ ॥
अयुग्मेनैव हस्तेन कुर्यादायतनं हरेः । युग्मं वा मोक्षकामस्य अयुग्मं भुक्ति[13]कांक्षिणः ॥ १४ ॥

—— अन्येषा कामनानुसारेण मानम् ——

आद्वादशतलान्तं वै यथावित्तानुसारतः । [14]मापयित्वा विधानेन विमानं तत्र कारयेत् ॥ १५ ॥
कृत्वैवं वास्तुशास्त्रज्ञो ह्यारभेत्प्रथमेष्टकाम् ।

—— इष्टकाभेदाः ——

इष्टकास्त्रिविधाः प्रोक्ताः शिला[15]काष्ठजमृण्मयाः ॥ १६ ॥

—— विमानानुरोधेन प्रथमेष्टकाभेदः ——

शैलजेषु विमानेषु शिला स्यात् [16]प्रथमेष्टका । [17]काष्ठेन धामनिर्माणे तेनैव प्रथमेष्टका ॥ १७ ॥

1. श्री वे. पासन 2 श्री पुच्छवत् 3 ऐ ओ समीक्ष्यते, स म समीक्षते. 4. श्री. ऐ. ओ स म म मिद 5 ऐ ओ स म म मुत्तराद्यपर 6 श्री ऐ ओ स म म ग्राह्यस्थान 7 श्री ऐ ओ स. म म विमाने च 8 श्री. च 9 ऐ ओ तन्न. 10 श्री बिम्बानुगुण्येन 11 स म आयाम 12. स म शत 13 श्री कामदम् 14. श्री मानयित्वा 15 म श्री मृत्काष्ठजा तथा 16 म म प्रथमा शिला 17 स म ग्रन्थे. एष अर्धश्लोकः न दृश्यते.

सुपक्वेष्टकया कुर्यात् विमाने त्विष्टकामये । आमेष्टकाचिते धिष्ण्ये तथैव प्रथमेष्टका ॥ १८ ॥

शैलेष्टकाभ्यां रचिते शिला स्यात् प्रथमेष्टका । *इष्टका काष्ठयुक्ते तु इष्टका प्रथमेष्टका ॥ १९ ॥

शिलायाः पुँल्लिङ्गादिभेद. तद्विनियोगश्च

शिलासङ्ग्रहणे देशे साधिवासपुरःसरम् । सङ्गृह्य तु शिलां तत्र पुँल्लिङ्गादि परीक्षयेत् ॥ २० ॥

[1]उपानदादिस्तूप्यन्तं पुँलिङ्गशिलया भवेत् । †नपुंसकेन शिलया कुर्यान्मूर्ध्निशिलां तथा ॥ २१ ॥

सदोषप्रतिमाया ग्रहणे हानिः

प्रतिमा दारुवद् ग्राह्या निर्दोषा गुणवत्तरा । [2]अयथाविहितैर्लिङ्गैर्लोभादज्ञानतोऽपि वा ॥ २२ ॥

कर्तुः कारयितुर्नाशो राज्ञो राष्ट्रस्य निश्चितः ।

मृण्मयेष्टकाविधिः

इदानीं संप्रवक्ष्यामि मृण्मये त्विष्टकाविधिम् ॥ २३ ॥

रथकारेण निर्दिष्टं देशमासाद्य देशिकः ॥ २४ ॥

तत्रापि ज्वलिते वह्नौ सर्पिषा जुहुयाच्छतम् । अष्टौ च मूलमन्त्रेण नृसूक्तेन चरुं पुनः ॥ २५ ॥

मूलमन्त्रेण समिधो [3]युञ्जको जुहुया[4]त्तथा । कुर्याच्च चरुणा भूयो विष्णुपारिषदाहुतीः ॥ २६ ॥

[5]क्षेत्रपालस्य भूतानां वास्तुनाथस्य च स्वयम् । देवतानामृषीणां च तथा देवगणस्य च ॥ २७ ॥

यथालिङ्गेन मन्त्रेण स्वाहान्तेन विचक्षणः । भूरादिभिर्व्याहृतिभिः हुत्वा पूर्णाहुतिं [6]चरुम् ॥ २८ ॥

चतुर्दिक्षु च पूर्वाद्यं चरुणा बलिकर्म च । कुर्यादनेन मन्त्रेण नमोऽन्तेन यथाक्रमम् ॥ २९ ॥

विष्णुपारिषदेभ्यश्च सर्वभूतेभ्य एव च । वास्तुनाथाय च तथा क्षेत्रपालाय चोपरि ॥ ३० ॥

कृत्वाग्निमुत्सृजेदेवं [7]अग्रे होमादिके कृते ।

इष्टकानिर्माणनियमः

कुलालः प्राङ्मुखः कुर्यात् तत्र [8]भूमृत्तिकेष्टिकाम् ॥ ३१ ॥

इष्टकानां पुँल्लिङ्गादिस्वरूपं तद्विनियोगश्च

पुँल्लिङ्गादि विभागेन त[9]द्विभागो विधीयते । रेखा ऋजुरयुग्मा वा यत्र [10]स्त्री पौंस्त्री तदिष्टका ॥

---

* श्री शिलाकाष्ठमवाधिष्ण्ये शिला स्यात्प्रथमेष्टका † श्री स्त्रीलिङ्गशिलयाचैव कारये त्प्रथमा शिलाम एतौ अर्धश्लोकौ अधिकतया दृश्येते. 1 ऐ ओ उपानहादिर् आस्तूप्यं. 2 ऐ ओ स म श्री अन्यथा. 3 श्री याज्ञिको 4 म ऐ ओ शतम् 5 म जुहुयात् क्षेत्र-पालस्य वास्तुनाथस्य च द्वयम 6 ऐ. ओ म चरेत् 7 ऐ ओ. म अग्ने.. 8. म. भूमौ नवेष्टिकाम् 9. ऐ ओ म त्रिभागः. 10 श्री ऐ. ओ. म. पुलिङ्गकेष्टका..

तिरश्चीनाथवा युग्मा रेखा [1]स्त्रैणी तदिष्टका। नपुंसकश्च निर्लेखा रेखा वाग्रेऽथ कर्णयोः ॥ ३३॥
[2]न पुँल्लिङ्गेष्टका तावत् गर्भाधाने विधीयते। स्त्रीलिङ्गेष्टकया कुर्यात् गर्भाधानादि पीठिकाम् ॥३४॥
पुँल्लिङ्गेष्टकया कुर्यात् प्रासादं तद्विचक्षणः।

इष्टकायाममानम्

चतुर्विंशाङ्गुलायामा श्रेष्ठा स्यान्मध्यमा पुनः ॥ ३५ ॥
अष्टादशाङ्गुलायामा कनिष्ठा षोडशाङ्गुला। अर्धायामं तु विस्तारं तदर्धं घनमिष्यते ॥ ३६ ॥
आयामसमविस्तारा स्यादाच्छादनेष्टिका। एवमादीष्टकामानं कुर्याद्भूमिवशाद्[3]भुवः ॥ ३७॥

इष्टकायाम मानान्तरम्

महीमानमिदं विद्यादल्पमानमुदीर्यते। प्रासादपादविस्तारतुल्यो विस्तार इष्यते ॥ ३८ ॥
विस्तारद्विगुणायामाः कल्पयेदिष्टका बुधः। एवं शिलानां दारूणां मानं दारुशिलामये ॥ ३९ ॥

इष्टकागुणाः

सुपक्का सुस्वरा पक्वबिम्बाभा सुदृढा समा। एकवर्णा प्रशस्ता स्यादिष्टका प्रथमा हिता ॥ ४० ॥

वर्जनीयेष्टका

कालमण्डलसंयुक्तां छिन्नां भिन्नामथानृजुम्। स्फुटितां वर्जयेद्ब्रह्मन् प्रासादारम्भणेष्टकाम् ॥ ४१ ॥

देवालये मानुषालये च प्रथमेष्टकानां संख्या

चतस्रः प्रथमाः कुर्यादिष्टका देवतालये। आवासे पञ्च [4]मर्त्यानां कल्पयेत्प्रथमेष्टकाः ॥ ४२ ॥
पक्केष्टकाचिते धाम्नि पक्वा स्यात्प्रथमेष्टका। [5]आद्येष्टका चितेऽगारे प्रथमा नान्यथा भवेत् ॥ ४३ ॥

इष्टकाधिवासार्थमङ्कुरार्पणे कलशन्यासादिः

अङ्कुरानर्पयेत्पूर्वमधिवासनकर्मणि। दिशां चतसृणां धाम्नः [6]पूर्वायां दिशि च क्वचित् ॥ ४४ ॥
प्रपां दर्भस्रजं कुर्यात् षोडशस्तम्भसंयुताम्। सप्ततालायतां तत्र वेदिं हस्तसमुन्नताम् ॥ ४५ ॥
मध्ये कृत्वा ततः पीठं शालिभारैस्त्रिभिः कृतम्। वृत्तं वा चतुरश्रं वा कुर्या[7]च्चेष्टं चतुर्मुख ॥ ४६ ॥
द्वाभ्यां मध्यममेकेन जघन्यं परिकल्पितम्। सूत्रादिवेष्टितं कुम्भं धान्यपीठे निधापयेत् ॥ ४७ ॥
परितः कलशस्याष्टौ चाष्टदिक्षु विनिक्षिपेत्। कुम्भस्योत्तरतस्तस्य वारिपूर्णस्य देशिकः ॥ ४८ ॥
तावत्प्रमाणं कुर्वीत धान्यपीठं तथाविधम्। तदर्धं तण्डुलयुतं तदर्धं तिलसंयुतम् ॥ ४९ ॥

---

1. ऐ. ओ श्री. स्त्री च. 2. ऐ ओ म नपुसकेष्टका तद्वत् 3 म द्विज· श्री बुधः. 4. श्री. ऐ. ओ. मूर्त्तीना. 5. स. म. ऐ ओ म. आमेष्टका. 6. श्री पूर्वादीना दिशि क्वचित्. 7. म. स्र. म. श्रेष्ठं.

आस्तीर्णदर्भसंबाधं नववस्त्रपरिष्कृतम् । तदिष्टकाधिवासार्थं कृत्वैवं देशिकोत्तमः ॥ ५० ॥
स्नापयेदिष्टकाः पूर्वं स्थापयेत् कलशा[1]न्नव । व्रीहिपीठे सुविहिते मध्ये चैवाष्टदिक्षु च ॥ ५१ ॥
मध्यमे कलशे सर्पिः प्राच्ये क्षीरं विनिक्षिपेत् । आग्नेये दधि याम्ये तु गुडं नैर्ऋतदिश्यपि ॥ ५२ ॥
पञ्चगव्यं फलरसं वारुणे मातरिश्वनि । गन्धवारि तथा सौम्ये लोहतोयं शिवे मधु ॥ ५३ ॥
विन्यस्य नववस्त्रेण वेष्टयित्वा समर्चयेत् ।

## इष्टकास्नपनम्

स्थापयित्वेष्टकाः पीठे स्नापयेत् कलशैः क्रमात् ॥ ५४ ॥
[2]पयोघृतेन साम्नाग्रे स्नापयेत् पयसा ततः । स्नापयेदिक्षुतोयेन मधुवातेति मन्त्रतः ॥ ५५ ॥
फलिनीत्यनुवाकेन स्नापयेत् फलवारिणा । हिरण्यगर्भमन्त्रेण स्नापयेल्लोहवारिणा ॥ ५६ ॥
दधिक्राव्णेति यजुषा दध्ना सुस्नापयेत्ततः । स्नापयेत् पञ्चगव्येन पञ्चवारुणिकेत्यतः ॥ ५७ ॥
गन्धद्वारेति मन्त्रेण स्नापयेद्गन्धवारिणा । मधुवातेति मन्त्रेण मधुस्नानं समाचरेत् ॥ ५८ ॥
घृतसाम्नेति साम्ना वै घृतेन स्नापयेत्ततः । एकैकं नववस्त्रेण दर्भयुक्तेन वेष्टयेत् ॥ ५९ ॥
परिगृह्येष्टकाः सर्वाः शयनोपरि निक्षिपेत् ।

## अधिवासार्थहोमः

तोरणं द्वारकुम्भाँश्च ध्वजाँश्च परिपूरयेत् ॥ ६० ॥
[3]एष्टव्यो मध्यमे कुम्भे परमात्मा चतुर्मुख । [4]अष्टान्यन्येषु कुम्भेषु विष्ण्वादीनष्ट पूजयेत् ॥ ६१ ॥
निवेदयेन्महाकुम्भे पायसं वा गुलोदनम् । पूर्वस्यामुत्तरस्यां वा दिशि कुण्डान् प्रकल्पयेत् ॥ ६२ ॥
स्थण्डिले वाग्निमानीय जुहुयात् समिदादिभिः । समिदाज्यतिलं पुष्पं पृथगष्टोत्तरं शतम् ॥ ६३ ॥
जुहुयान्मूलमन्त्रेण सूक्तेन च चरुं पुनः । स्पर्शयेदिष्टकाः सर्वाः संपाताज्येन देशिकः ॥ ६४ ॥
[5]होमसूत्रैः प्रतिसरैरस्त्रमन्त्रेण बन्धयेत् । विभवानुगुणैर्वान्यैः कार्पासरजतादिभिः ॥ ६५ ॥
स्वप्नाधिपतिमन्त्रेण जुहुयात् सर्पिषा शतम् ।

## स्वप्नपरीक्षा

स्वप्नार्थं गुरुणा सार्धं यजमानस्तु [6]संविशेत् ॥ ६६ ॥
[7]दुःस्वप्नदर्शने जह्यान्निर्माणं तस्य सद्मनः । स्वप्ने शुभे तु [8]सदनं प्रारभेताऽविलम्बितम् ॥ ६७ ॥
[9]श्वोभूते शोभने लग्ने स्थापयित्वेष्टका गुरुः । प्रावेशयेच्च प्रासादमिष्टकास्ताः सुपूजिताः ॥ ६८ ॥

1. म. स. म. नवान्. 2. ऐ. ओ. पयोव्रतेन साम्नाग्ने.. 3. म. स. म. ऐ. ओ. यष्टव्यः. 4. श्री. अष्टेष्वन्येषु. 5. हेम. 6. ऐ. ओ. सदिशेत्. 7. स. म. अस्वप्न. 8. मै. सततं प्राविशेत. 9. म. मुहूर्त्ते.

इष्टकाना सभारस्थानम्

कलशस्य द्वारदेशस्य दक्षिणे देशिकोत्तमः। पादमूलादधस्तात्ताः क्षिपेत्तूर्यादि घोषयेत् ॥ ६९ ॥
स्वस्तिकं वाचयित्वा तु ब्राह्मणान् धनतोषितान्।

देवमनुष्यालययोरिष्टकान्यासे विशेषः

प्रादक्षिण्येऽपि चेन्द्रादिसोमान्तं देवसद्मनि ॥ ७० ॥
मनुष्याणां तु मध्यान्तं मूलमन्त्रेण दैवते। निदध्यादिष्टका धाम्नि मानुषाणां निकेतने ॥ ७१ ॥
श्रीसूक्तेनेष्टकाधानं देवीनामधिदेवता। इष्टकानां चतुर्मूर्तिः पञ्चमूर्तिस्तु मानुषे ॥ ७२ ॥
याम्यवारुणयोर्मूलमग्रमिन्द्रधनेशयोः।

उपानद्वैषम्ये हानिः

इष्टकानां भवेन्न्यासे उपानद्विषमं भवेत् ॥ ७३ ॥
कृते चेन्मोहतोऽज्ञानाद्वैषम्यभयकारणम्। तस्मादुपानत्सदृशीरिष्टकाः प्रथमं क्षिपेत् ॥ ७४ ॥

श्वभ्रपूरितजलावर्तपरीक्षा

[1]आदिदैवं समभ्यर्च्य श्वभ्रं तोयेन पूरयेत्। रत्नैर्धान्यैश्च लोहैश्च कुसुमैश्च पृथग्विधैः ॥ ७५ ॥
पूरिते [2]सुभृशं श्वभ्रे जलावर्तं परीक्षयेत्। शुभं प्रदक्षिणावर्तं सव्यावर्तमथाशुभम् ॥ ७६ ॥

श्वभ्रजलशोषे धामयजमानादीना हानिः

श्वभ्रे विनिहितं तोयं सद्यः शोषं व्रजेद्यदि ॥ ७७ ॥
आरब्धमपि तद्धाम न समाप्तिं समृच्छति। म्रियते यजमानो वा भवेद्वा राष्ट्रविप्लवः ॥ ७८ ॥
निमित्तेष्वशुभेष्वेवं शुभेषु तु शुभं भवेत्।

मनस्तुष्टेः कार्यकरत्वम्

देशिकस्य मनस्तुष्टिः सर्वसंपत्करी सदा ॥ ७९ ॥
विपत्करी वितुष्टिः स्यात् रथकारस्य [3]त्रै तथा।

दुर्निमित्तेषु शान्तिहोमादिः

दुर्निमित्तेषु सर्वेषु शान्त्यर्थं जुहुयाद् गुरुः ॥ ८० ॥
ब्राह्मणान् भोजये[4]द्दद्यात् सुवर्णं शक्त्यपेक्षया। उत्पलस्यारविन्दस्य कन्दं गर्ते विनिक्षिपेत् ॥ ८१ ॥
पुण्यतीर्थस्य [5]शालेयकेदारस्य च मृत्स्नया। मूलमन्त्रेण तद्गर्तं पूरयेच्छादयेच्च तत् ॥ ८२ ॥

1. श्री. अधिदैव. 2. स. म. सुशुभ. 3. मै. देवता. 4. स. म. पश्चात्.
5. स. म. शैलस्य.

—॰ आचार्यादीना दक्षिणा ॰—

आचार्यदक्षिणां दद्याच्छतनिष्का[1]न्वितां नृपः । अन्येषामपि सर्वेषां दशनिष्का[2]वरा भवेत् ॥ ८३ ॥
आरम्भणेष्टका ह्येवं ताःसंस्थाप्य यथापुरम् । शान्त्यर्थं जुहुयाद्ब्रह्मन् विमानं कारयेद्[3]बुधः ॥ ८४ ॥

—॰ देवागारनिर्माणे फलम् ॰—

देवागारं करोमीति सङ्कल्पादेव केवलात् । सद्यः कायगतं पापं नश्येज्जन्मशतार्जितम् ॥ ८५ ॥
आरभ्य मन्दिरं मर्त्यो न समाप्य मृतो यदि । समाप्तस्यापि गेहस्य फलं पूर्णं समश्नुते ॥ ८६ ॥
तस्माद्वित्तानुसारेण कुर्याद्विष्ण्वालयं [4]प्रभुः । यावदिष्टकया धाम तावतो वत्सरान् बहून् ॥ ८७ ॥
कर्ता वसति भूयोऽपि नाकपृष्ठे सुसत्कृतः ।

—॰ देवालयापवारिणा दण्डः ॰—

अपहारेऽपि नरके पच्यते सार्वकालिकम् ॥ ८८ ॥
लीलया लिखितं भूमौ प्रासादं मण्डपं तथा । मार्जयेन्मूढधीर्घोरं नरकं यात्यसंशयः ॥ ८९ ॥
तस्मान्न चालयेत् धामकल्पितं कमलासन ।

—॰ देवालयार्थमुपकुर्वता परमपदावाप्तिः ॰—

उपकुर्वन्ति ये मर्त्या मनोवाक्कायकर्मभिः । तेऽपि यान्ति पदं विष्णोः पुनरावृत्तिवर्जितम् ॥ ९० ॥

**इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे प्रथमेष्टकाविधिर्नाम पञ्चमोऽध्यायः ॥**

---

# षष्ठोऽध्यायः ।

—॰ गर्भन्यासविधिः ॰—

श्रीभगवान्—

गर्भन्यासविधिं ब्रह्मन् वक्ष्यामि श्रूयतामसौ । गृह्णीयान्मृत्तिकां पूर्वं स्थानेषु दशसु क्रमात् ॥ १ ॥
शैले ह्रदे पुण्यतीर्थे वल्मीके कर्कटा[5]शये । नद्यां वृषविषाणाग्रे दन्तिदन्ते पयोनिधौ ॥ २ ॥
हले चैतेषु संभूता प्रशस्ता मृत्तिका ततः । कुमुदस्यारविन्दस्य कशेरूत्पलयोस्तथा ॥ ३ ॥
नीलोत्पलस्य पञ्चैतान् कन्दानपि समाहरेत् । मनःशिला हरीतालमञ्जनश्यामसीसकम् ॥ ४ ॥
सौराष्ट्रं रोचनां चैव गैरिकं पारदं तथा । आदाय धातून् रत्नानि वज्रवैडूर्यमौक्तिकम् ॥ ५ ॥
स्फटिकं पुष्यकं शङ्खं पद्मरागं तथा परम् । चन्द्रकान्तं [6]महानीलं नवैतानि समाहरेत् ॥ ६ ॥
शालिनीवारकङ्गूंश्च प्रियङ्गुतिलमाषकान् । मुद्गांश्च यववेणूंश्च गृह्णीयान्नवधान्यकम् ॥ ७ ॥

---

1. ब. न्नराय च. 2. स. म. वर. 3 ऐ. ओ. स. म. पुनः. 4 स. म. म. बुध..
5. श्री. लये. 6. ऐ. ओ. मै. तथा नील.

हिरण्यं रजतं ताम्रमायसं त्रपु [1]सीसकम्। सौवर्णं कूर्मरूपं च सौवर्णं शङ्खचक्रकम् ॥ ८ ॥
एतान् सर्वान् समानीय निक्षिपेद्गर्भभाजने। भाजनं धान्यराशौ तु न्यस्य वस्त्रेण वेष्टयेत् ॥ ९ ॥
गन्धादिभिः समभ्यर्च्य विष्णुगायत्रिया ततः। कुण्डे वा स्थण्डिले वाग्निं समानीय समिध्य च ॥ १० ॥
सर्पिषा च समिद्भिश्च [2]विष्णुदैवत्यया तथा। अष्टोत्तरशतं हुत्वा [3]संपूताज्यं तु सङ्ग्रहेत् ॥ ११ ॥
चरुणा नरसूक्तेन जुहुयात् षोडशाहुतीः। इन्द्रादिलोकपालेभ्यो भुवनेभ्यस्तथैव च ॥ १२ ॥
पर्वतेभ्यः समुद्रेभ्यः आदित्येभ्यस्तथैव च। वसुभ्यश्च मरुद्भ्यश्च ऋषिभ्यस्तदनन्तरम् ॥ १३ ॥
वेदेभ्यः सर्वशास्त्रेभ्यः पुराणेभ्यस्तथैव च। पातालेभ्यश्च दिग्भ्यश्च नागेभ्यस्तदनन्तरम् ॥ १४ ॥
गणेभ्यः सर्वभूतेभ्यो [4]नरेन्द्रेभ्यस्तथैव च। ग्रहेभ्यश्चैव सर्वेभ्यः स्वाहान्तं जुहुयात्पृथक् ॥ १५ ॥
तिलाज्यमिश्रचरुणा जुहुयात्तेभ्य एव च। संपाताज्यं समानीय निषिञ्चेद्गर्भभाजने ॥ १६ ॥

## निशायामेव गर्भन्यासः

निशायामेव कुर्वीत गर्भस्य न्यसनं गुरुः। सुमुहूर्ते सुनक्षत्रे [5]सुपक्षकरणैर्युते ॥ १७ ॥
शङ्खभेर्यादिघोषैश्च सहमङ्गलपाठकैः। द्विजेन्द्रवेदघोषैश्च आस्फोटक्ष्वेलितैरपि ॥ १८ ॥
आदाय भाजनं पश्चात् देवागारं प्रदक्षिणम्। गत्वा गर्भगृहं सम्यक् ब्राह्मणैः सह संविशेत् ॥ १९ ॥
द्वारस्य दक्षिणे पार्श्वे प्रारभ्यं पादपार्श्वतः।

## देवादिभेदेन गर्भन्यासस्थाननिर्देशः

देवानां पट्टिकायां तु गर्भन्यासः प्रशस्यते ॥ २० ॥
विप्राणां पट्टिका [6]दन्तान्नृपाणां कुमुदोपरि। वैश्यानां कुमुदे चैव शूद्राणां जगतोपरि ॥ २१ ॥

## नीचोच्चादिव्यत्यासे अनिष्टफलम्

नीचे दुःखं भवेन्नित्यमुच्छ्रिते द्रव्यनाशनम्। स्थानभ्रंशकरं द्वारे भवत्येव न संशयः ॥ २२ ॥
तस्माद्यत्नेन कर्तव्यं सुगुप्तं भित्तिमध्यतः ॥ २३ ॥

## गर्भन्यासमञ्जूषाविधिः

मञ्जूषां मुख्यलोहेन कृत्वा तालप्रमाणतः। नवगर्तसमायुक्तं [7]विधानेन समन्वितम् ॥ २४ ॥
दारुजं तदभावे स्याद्गर्तावरणसंयुतम्। पुण्याहं वाचयित्वा तु पञ्चगव्येन शोधयेत् ॥ २५ ॥

## ध्यानप्रकारः

ध्यायन् भूमण्डलं सर्वं साद्रिद्वीपसमुद्रकम्। [8]दिग्गजोत्तम्भितं शेषफणीन्द्रशिखरस्थितम् ॥ २६ ॥

---

1. ऐ. ओ. स. म. म. कांसकम्. 2. ऐ. ओ. विष्णुगायत्रिया ततः. 3. श्री. सम्पाताज्यं. 4. श्री. ऐ. ओ. स. म. नक्षत्रेभ्यः. म. भुवनेभ्यः. 5. श्री. सुपक्षे करणे गते. 6. श्री. धस्तात्. 7. म. पिधानेन च संयुतम्. 8. स. म. म. दिग्गजैरष्टभिर्युक्तं फणीन्द्रशिरसि स्थितम्.

मनस्यावेश्य वसुधां द्विहस्तां श्यामलां शुभाम्। आकल्पितामृतुस्नातामादध्याद्गर्भसंपदम् ॥ २७ ॥

मृद्धात्वादीनां न्यासस्थानम्

आत्मानं केशवं ध्यात्वा सर्वाभरणभूषितम् । मृदं गृहीत्वा सामुद्रीं परिकुर्यात् प्रदक्षिणम्॥ २८ ॥

पार्वतीं पूर्वतो न्यस्येत्तीर्थजां दक्षिणे [1]तथा। नदीजां पश्चिमे भागे ह्रदजामुत्तरे तथा ॥ २९ ॥

[2]कुलीरमृदमाग्नेय्यां नैर्ऋते वाल्मिकीं [3]मृदम्। हलजां दिशि मारुत्यामैशान्यां हस्तिदन्तजाम्॥३०॥

वृषभस्य विषाणस्थां ब्रह्मस्थाने निवेशयेत् । कन्दमौत्पलमैन्द्रे स्याद्यमदिश्यथ कौमुदम् ॥ ३१ ॥

नीलोत्पलं प्रतीचीने काशेरत्रमुदग्दिशि । ब्रह्मस्थाने भवेत्पाद्मं ततो धातून् विनिक्षिपेत्॥ ३२ ॥

पूर्वे मनःशिलां याम्ये हरितालं च वारुणे । अञ्जनं धनदाशायामाग्नेय्यां दिशि सीसकम्॥ ३३ ॥

सौराष्ट्रं नैर्ऋते भागे वायवीये तु रोचनाम् । ईशाने गैरिकं मध्ये पारदं ब्रह्मणः पदे ॥ ३४ ॥

वज्रं पूर्वे भवेद्याम्ये वैडूर्यं पश्चिमे[4]मणिः । कौबेरे पुष्पकं भागे स्फटिकं ज्वलने भवेत् ॥ ३५ ॥

नैर्ऋते मौक्तिकं वायौ चन्द्रकान्तशिला तथा । माहेश्वरे महानीलं पद्मरागं तु मध्यमे ॥ ३६ ॥

शालिबीजं भवेत्प्राच्यां नीवारं दक्षिणे तथा । कङ्गुं प्रतीच्यां धनदे प्रियङ्गुं ज्वलने तथा ॥३७॥

माषो नैर्ऋतभागे स्यात्तिलो मुद्गस्तु मारुते । [5]ऐशाने वेणुधान्यं स्याद्यवः स्याद्ब्रह्मणः पदे ॥३८॥

हिरण्यं पूर्वदिग्भागे दक्षिणे रजतं भवेत् । पश्चिमे ताम्रमाधाय निक्षिपेदुद[6]गायनम् ॥ ३९ ॥

आग्नेये त्रपु राक्षस्यां [7]कांस्यं मारुतदिश्यपि । सौवर्णं कूर्ममैशान्यां दरदं हेमनिर्मितम् ॥ ४० ॥

[8]चक्रं जाम्बूनदं मध्ये विन्यसेन्मूलविद्यया ।

भूदेवताध्यानमन्त्र

महीं देवीं ततो ध्यात्वा मन्त्रमेतमुदीरयेत् ॥ ४१ ॥

सर्वभूतधरे कान्ते पर्वतस्तनमण्डिते । समुद्रपरिधानीये देवि गर्भं समाश्रय ॥ ४२ ॥

श्वभ्रपूरणविधि

एवमुक्त्वा ततः श्वभ्रं गोमूत्रेण परिप्लुतम् । आच्छादयेद्विधानेन सुधया दार्ढ्यमाचरेत् ॥४३॥

गुरुदक्षिणा

गुरवे दक्षिणां दद्यात्पूर्वोक्तद्रव्यसंख्यया ।

---

1 न्यसेत् 2 स म. पुलीन. 3 स. म. तथा 4 य. म दिशि. 5 स म श्री. ईशाने. 6. श्री. गायसम्. 7. श्री. सीस. 8. श्री. शख चक्रञ्च सौवर्णं मध्यमे मूलविद्यया.

गर्भरक्षा

रक्षां समन्ततः कुर्याद्गर्भस्य स्खलनं यदि ॥ ४४ ॥
प्रायश्चित्तं ततः कुर्यात् दुर्निमित्ते च पूर्ववत् ।

गर्भन्यासं विना ग्रामप्रासादादिकरणे दोषः

अकृत्वा गर्भविन्यासं ग्रामं प्रासादमेव वा ॥ ४५ ॥
यदि कुर्यात् क्षयं यायात् अचिराद्वास्तु धाम वा । तद्ग्रामवास्तुनो [1] हेम्ना गर्भमादौ समाचरेत् ॥ ४६ ॥

धाम्नः आयामविस्तारविधिः

धामैकहस्तमपरं शतहस्तं परं स्मृतम् । एकभूम्यपरं धाम परं द्वादशभूमिकम् ॥ ४७ ॥
विस्ताराद्द्विगुणोत्सेधमुत्सेधानुगुणं तलम् । [2]वित्तानुरोधं चोच्छ्रायः कर्तव्यः कमलासन ॥ ४८ ॥

एकादिद्वादशतलेषु देवस्य शयनादिविधिः

स्रष्टुर्देवस्य शयनमादिभूमौ विधीयते । [3]आसनं श्रीधरायुक्तं द्वितीये तु तले भवेत् ॥ ४९ ॥
स्थानं तथा तृतीये स्याच्चतुर्थे यानमिष्यते । पञ्चमे योगशयनं षष्ठे भोगासनं भवेत् ॥ ५० ॥
[4]योगस्थितिः सप्तमे स्यादष्टमे तार्क्ष्यवाहनम् । नवमे भोगशयनं भोगास्स्युर्दशमे भवेत् ॥ ५१ ॥
स्थितिरेकादशे [5]भोक्तुं द्वादशे विश्वरूपवान् ।

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे गर्भन्यासविधानं नाम षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः ।

### —* अधिष्ठानविधिः *—

उपपीठम्

श्रीभगवान्—
अधस्तादुपपीठं स्यादधिष्ठा[6]नस्य धारकम् । [7]शोभार्थं रक्षणार्थं च समुच्छ्रायार्थमेव वा ॥ १ ॥
अधिष्ठानसमोत्सेध[8]मर्धं वा स्यात् त्रिपादकम् । [9]पादांशं वा त्रिभागं वा सार्धांशं वा सपादकम् ॥ २ ॥
द्विगुणं त्रिगुणं वापि कर्तव्यमुपपीठकम् । उत्सेधं दशधा कृत्वा भागेनैकेन वर्धनात् ॥ ३ ॥

---

1. स. म. ऐ. ओ. म. स्थेम्ने. 2. मै. चित्तानुकूलं चोत्सेधः. 3. ऐ. ओ. म. आसीनं च श्रिया युक्तं. 4. ऐ. ओ. म. योगस्थितः. 5. ऐ. ओ. म. भोक्तुः. 6. स. म. ष्ठानं च. 7. स. म. भोगार्थं. 8. स. म. अधमं. 9. स. म. पञ्चांशं.

[1]पञ्चमांशमधिष्ठानं [2]धाम्नो बाह्ये तु निर्गमः। दण्डं वा [3]सार्धदण्डं वा द्विदण्डं वा त्रिदण्डकम् ॥ ४॥
अधिष्ठानं जगत्या वा समन्ता[4]त्पादबाह्यकम्।

वेदिभद्रादिभेदः

वेदिभद्रं प्रतीभद्रं सुभद्रं च त्रिधा मतम् ॥ ५ ॥

वेदिभद्रम्

उच्छ्राये भानुभागे तु [5]द्व्यंशे सोपान मीरितम्। पञ्चमंशं तदूर्ध्वेऽर्ध क्षेपणं पाश्चभागिकम् ॥ ६॥
ग्रीव[6]मर्धेन कम्प स्याद्भागैकेनाम्बुजं भवेत्। शेषांशं वाजनं कम्पमष्टांशमुपपीठकम् ॥ ७ ॥
षडङ्गं वा विधातव्यमूर्ध्वाधस्ताद् [7]भुजान्वितम्। वेदिभद्रं [8]द्विधाप्रोक्तं सर्वहर्म्येषु योग्यकम् ॥ ८॥

प्रतीभद्रम्

[9]अनीदृक् च शिवांशैस्तु भानुभागांशकांशकैः। त्र्यंशैकांशैकभागे तु द्वाभ्यामंशेन योजयेत् ॥ ९॥
[10]जगतो वाजनान्तं तु तुङ्गे त्रिनवभागके। पादुकं पङ्कजं कम्पं [11]पीठमुत्तरमम्बुजम् ॥ १० ॥
कपोत[12]पालिकान्तादि प्रतिवाजनमुच्यते। प्रतिभद्रमिदं नाम्ना सर्वालङ्कारसंयुतम् ॥ ११ ॥
युग्मे[13]चाक्षांशकांशैस्तु द्वे काष्ठांशांशकांशकैः। [14]त्र्यंशकेनांशकैर्द्वाभ्यामेकेनैवात्र योजयेत् ॥ १२ ॥
पादुकां पङ्कजं चैव[15]मालिङ्गान्तरितंतथा। प्रत्यूर्ध्वे वाजनं कण्ठ [16]मुत्तरान्तं कपोतकम् ॥ १३ ॥
आलिङ्गान्तरितं चोर्ध्वे प्रतिश्चैवोर्ध्ववाजनम्। द्विविधं प्रतिभद्रं स्यादेकभागाधिकं ततः ॥ १४ ॥

सुभद्रम्

त्रिसप्तांशे तदुत्सेधे द्वाभ्यां जन्म तथाम्बुजम्। अर्धेन ठ[17]मर्धेन पद्मं द्व्यंशेन वाजनम् ॥१५॥
अर्धे[18]नार्ध तथा कम्पं कण्ठमष्टाङ्गमीरितम्। अंशेनोत्तर[19]मर्धेन पद्मं [20]चोपानहं त्रिभिः ॥ १६॥
भागार्धमूर्ध्वकम्पं स्यादेतन्नाम्ना सुभद्रकम्। जन्मद्व्यंशं त्रियंशेन पद्ममंशेन कन्धरम् ॥ १७ ॥
द्वाभ्यां वाजन[21]मेकेन कम्पमष्टांशकैर्गलम्। अंशेन कम्पकं द्वाभ्यां वाजनं कम्पमंशकम् ॥ १८॥

---

1 स म. श्री पञ्चाशान्त 2 स म पश्चात् 3 स म साग्र 4 स म. दुपबाह्यकम्. 5. म स. म द्वयशोनोपानमीरितम् 6 स ।म मध्येन 7 ऐ ओ म विनाम्बुजम्. 8 ऐ ओ त्रिधा 9 ऐ ओ स म म अश्विनीदृक् 10. मै ऐ ओ स म. म. जन्मन.. 11 ऐ ओ स म म कण्ठ श्री कर्ण 12. ऐ ओ स. म म मालिका 13 स म अयुग्मेनाष्टकां. 14. स म अशकेनाशके 15 श्री मालिख्या 16 ऐ ओ स म म. मै श्री उत्तराब्जं. 17 स म मध्येन 18 मै. स म. नाब्जं 19. ए. ओ. कम्पेन. 20. स. म. मै म. गोपानक. 21 स. म. एकैक.

सुभद्रं द्विविधं प्रोक्तं सर्वालङ्कारसंयुतम् । [1]सिंहेभमकरैर्व्यालैर्भूताद्यैरप्यलङ्कृतम् ॥ १९ ॥
प्रतिवक्त्रं झषास्यं स्या[2]द्वालेनारूढमस्तकम् । [3]अर्हितानर्हिते हर्म्ये सर्वत्र परिकल्पयेत् ॥ २० ॥
अङ्गमङ्गं प्रति प्राज्ञैर्वृद्धिहीनं तथोच्यते । [4]तद्धाम सूकरं नाम युञ्जीयादुपपीठके ॥ २१ ॥

उपपीठविधिशेषः

[5]मूर्ताधिष्ठानतुङ्गाच्च द्विगुणं वा समं भवेत् । सार्धं वार्धं त्रिभागं च कुर्यादत्रोपपीठकम् ॥ २२ ॥
सप्रत्यङ्गं समं चार्धं वाजनं तदिदं भवेत् । उपपीठमिदं प्रोक्तं समासात् कमलासन ॥ २३ ॥

अधिष्ठानम्

अधिष्ठानमथो वक्ष्ये देवागारस्य सिद्धये । स्तम्भायामत्रिभागैकमधिष्ठानं प्रमाणतः ॥ २४ ॥
*स्तम्भायामाष्टभागैकं प्रभाधि[6]ष्ठानकम्पकम् । पदायामं तलोत्सेधं समधिष्ठानकोत्तमम् ॥ २५ ॥
वितस्तिन्यूनक वापि [7]अथवापि षडङ्गुलम् । एवं त्रिधा विभज्यन्ते [8]प्रभाधिष्ठानकम्पकम् ॥ २६ ॥
तदूर्ध्वे [9]वाष्टभागैकं [10]रागाधिष्ठानकम्पकम् । उपानवर्गाधिष्ठान [11]मुपानमिह पठ्यते ॥ २७ ॥

द्वादशाङ्गानि

उपानं जगतीपद्मं [12]कण्ठं कम्पं च पट्टिका । [13]निद्रिका पद्मकोचेतं स्कन्धमन्तरितं भवेत् ॥ २८ ॥
इत्येवं द्वादशाङ्गानि अधिष्ठानानि कल्पयेत् ।

पादबन्धप्रतीबन्धे

[14]पादबन्धं प्रतीबन्धं द्विविधं योनि[15]मूलकम् ॥ २९ ॥
पादानां बन्धनत्वाच्च पादबन्धनमियते । [16]वृतेन प्रतिबध्नीयात् प्रतिबन्धनमिष्यते ॥ ३० ॥
छेद्यं तत्पादबन्धं स्यादच्छेद्यं प्रतिबन्धनम् । तदङ्गं परितश्छेद्यमर्धच्छेद्यं न कारयेत् ॥ ३१ ॥
अङ्गच्छेद्यं शुभं प्रोक्तं [17]अर्धच्छेद्यं यशस्करम् । [18]होमस्तत्पादबन्धं स्यात्प्रतेस्तम्भं प्रतिक्रिया ॥ ३२ ॥
प्रतिबन्धमधिष्ठानं छेद्यमानं न कारयेत् । यदि कुर्याद्धिभेदोषानेकवृद्धिकुलक्षयम् ॥ ३३ ॥
प्राकार गोपुरद्वारं [19]स्यादधिष्ठानछेदनम् । एवं मार्गविधिं [20]शस्तं कारयेद्वास्तु शास्त्रतः ॥ ३४ ॥

---

1 श्री. ऐ ओ सिहेन 2 मै श्री ऐ ओ द्यानारूढ समस्तक 3 श्री अर्पितानर्पिते रम्ये
4 श्री. म तथा मसूरकाणान्तु 5 ऐ ओ स म म आत्ताधिष्टान. ब. आत्तानुष्ठान *श्री मसूरकमधिष्ठान वस्त्वाधार धरातल । कुलं कुट्टिममाद्यङ्गं पर्यायवचनास्त्विमे ॥ 6 स म म. ष्ठानक परम्
7. स. म. हीन वापि 8 ऐ ओ. प्रपाधिष्टानकं परम् 9 श्री. च 10 श्री प्रपा.
11. स. म. मै. उच्छ्राय 12. ऐ. ओ. कर्ण 13 ऐ. ओ. मै. म निम्नका. 14. ऐ ओ. पादकन्ध.
15. श्री. मूलतः. 16. श्री. प्रतेस्तत् प्रतिबन्धत्वात्. 17. मै मध्य. 18. श्री होमश्च.
19. श्री. तस्या. 20. ऐ. ओ. शास्त्र.

—॰⊱ उपानविस्तारः ⊰॰—

[1]उपानविस्तृतं तच्च चतुर्दण्डं त्रिदण्डकम् । द्विदण्डं चैकदण्डं च [2]सार्धार्धं पादबाह्यतः ॥ ३५ ॥
एवं पञ्चविधाकारं उपानं होम[3]निर्गमम् । [4]दण्डंचैव द्विदण्डं च अर्धार्धं च त्रिपादकम् ॥ ३६ ॥
तच्चार्धं दण्डमानं वा होमायां [5]चैव मानतः । प्रकृतेरुपरिस्थं यद्धोमायामं च मानतः ॥ ३७ ॥
विमानाधारहोमायां बहुलस्तम्भमुच्छ्रयम् । तावन्मानावगाढं च योजयेत्तत्र पद्मज ॥ ३८ ॥
जन्मभूम्यास्त्वधिष्ठानं तत्रादौ कारयेद्बुधः । देवानां चाप्यधिष्ठानं चत्वारिंशत्तु तद्भवेत् ॥ ३९ ॥
अधिष्ठानं तु कर्तव्यं वस्तुभिश्च शिलादिभिः ।

—॰⊱ पद्मबन्धाद्याधिष्ठानम् ⊰॰—

पद्मबन्धाद्यधिष्ठानं वक्ष्येऽलङ्कारपूर्वकम् ॥ ४० ॥
तत्पद्मपत्रचित्रैर्वा सभाधिष्ठा[6]नकोत्तमम् । वितस्तिन्यूनकं वापि हीनं वापि षडङ्गुलम् ॥ ४१ ॥
एवं त्रिधा विभज्यन्ते सभाधिष्ठानकम्पकम् । तदूर्ध्वे चाष्टभागैकप्रभाधिष्ठानकम्पकम् ॥ ४२ ॥
नवाधिष्ठानमुच्छ्रायमधिष्ठानादि कल्पयेत् । [7]पादस्यार्धमथोत्सेधमधिष्ठानं तु षोडश ॥ ४३ ॥
उपानस्यार्धमुत्सेधं पद्माच्च चतुरश्रकम् । आधारं पट्टिकस्यांशं शेषं पद्मकमुच्छ्रियम् ॥ ४४ ॥
द्व्यर्धांशं [8]मध्यकुम्भं स्या[9]देकार्धं चोर्ध्वपद्मकम् । स्कन्धान्तरं द्विभागे तु प्रथमात् द्व्यंशभिन्नकम् ॥ ४५ ॥
प्रतिवाजनमेकांशं पद्मबन्धमिति स्मृतम् । यस्याधिष्ठानमुत्सेधं पञ्चादशविभागिकम् ॥ ४६ ॥
प्रथम[10]श्चैकभागस्तु पञ्चांशं जगती भवेत् । कुमुदं तच्चतुर्थांशं स्कन्धं तद्व्यंशमंशकम् ॥ ४७ ॥
[11]द्व्यंशं च प्रतिरुत्सेधं वाजनं चैकभागिकम् । प्रतिबन्धमिदं नाम्ना कीर्तितं कमलोद्भव ॥ ४८ ॥
[12]यस्याधिष्ठानमुत्सेधं त्रयोविंशतिभागिकम् । द्व्यर्धं तदुपधानोच्चं पञ्चार्धं जगती भवेत् ॥ ४९ ॥
पञ्चांशं कुमुदोत्सेधं एकांशोपरिपट्टिका । [13]त्र्यंशकं ग्रीवमुत्सेधं कम्पं निद्रा द्वियंशकम् ॥ ५० ॥
कपोतसदनं नाम्ना सदनेषु सुपूजितम् । उपानं तु भागेन जगती सप्तभागिकम् ॥ ५१ ॥
[14]वप्रकं तु षडंशं स्यात् वेत्रं पादाधिकांशकम् । तथैवान्तरितोत्सेधं द्व्यंशार्धं प्रतिरुच्छ्रयः ॥ ५२ ॥
प्रतिवाजनमेकांशं भागैर्विंशतिभिर्युतम् । प्रतीमुखं [15]कारिभूतं नागवक्त्र[16]समायतम् ॥ ५३ ॥

---

1. ऐ. ओ. मै. श्री. उपानह तत्प्रवृत्ति 2 ऐ. ओ मै. स म साध्यार्ध 3. श्री. ऐ ओ. स. म. मै. निष्क्रिया 4 मै. श्री स. म द्विदण्डार्ध 5. वे श्री. बहुल स्मृतम्. 6. श्री. नादि कल्पयेत्. 7. मै म. पादस्यार्धमधिष्ठान विभज्य सत्सु 8. ऐ. ओ. अर्धं. 9. श्री. देकाश ऊर्ध्वपङ्कजम्. 10 श्री. चैव 11 मै. ऐ ओ श्री. त्र्यश. 12. श्री यद्य. 13 स. म. अशग्रीवसमुत्सेध. 14. मै. म. वप्र त्रिषडश. 15. स. म. मै. श्री. कर्करी. 16. श्री. समन्वितम्.

प्रतिबन्धमिदं नाम्ना [1]सर्वभूतेषु योग्यकम् । द्विभागाभ्यामुपोपानं सप्तांशैर्जगती भवेत् ॥५४॥
[2]षडंशैः कुमुदोत्सेधं धारावप्रं सुवृत्तकम् । आलिङ्गान्तरितं द्वाभ्यां तदर्धं चाधिकं भवेत् ॥५५॥
तद्वयार्धं प्रतिमुखं सर्वावयवशोभितम् । सिंहैश्च मकरैर्व्यालैर्वल्लीपत्रैरलङ्कृतम् ॥ ५६ ॥
[3]प्रमुखं मकरास्यं स्यान्मकरध्वजसंयुतम् । मकरास्येभनिष्क्रान्तं व्यालविद्याधरीगणाः ॥ ५७ ॥
शेषांशं वाजनोपेतं [4]केसराग्रसमन्वितम् । एकविंशतिभागैकयुक्तं नानाप्रति[5]क्रमम् ॥ ५८ ॥
अथोत्सेधमधिष्ठानं पञ्चादशविभागिकम् । जन्मस्यार्धविभागेन जगतीश्चतुरंशकम् ॥ ५९ ॥
स्रक्पद्मवेदिबन्धेन युक्तं कुम्भं त्रियंशकम् । पद्मबन्धेन तस्योर्ध्वे त्रिपादेनोर्ध्वपट्टिका ॥ ६० ॥
तथैव पट्टिकोत्सेधं द्व्यंशाभ्यां प्रतिरुच्छ्रयः । अर्धेन वाजनं कुर्यादर्धपट्टार्धभागिकम् ॥ ६१ ॥
पद्मबन्धमिदं नाम्ना देवाना[6]मभयं परम् । यदधिष्ठानमानं हि भवेद् [7]द्वाविंशतिक्रमात् ॥ ६२ ॥
अंशेन पट्टिकां कुर्यात् द्व्यंशेनैवाम्बुजं भवेत् । [8]तदंशेनोर्ध्वपट्टं स्यात्षडंशैर्जगती भवेत् ॥ ६३ ॥
[9]चतुर्थं कुमुदोत्सेधं तस्योर्ध्वैकांशपट्टिका । कण्ठं स्यात् त्रिभिरंशेन अर्धेनोपरिपट्टिका ॥ ६४ ॥
अर्धेनो[10]र्ध्वाम्बुजं कुर्यान्महापट्टं त्रियंशकम् । [11]अर्धेनोपरि पद्मं स्यात् कम्पमर्धेन कारयेत् ॥६५॥
[12]प्रतिबन्धमिदं नाम्ना सर्वधामसु योजयेत् । होमस्तम्भं प्रतिस्तम्भं द्विविधं पाददैर्घिकम् ॥ ६६ ॥
प्रकृतेस्तु [13]तलादूर्ध्वे होमस्तम्भं प्रकल्पयेत् । प्रतिस्तम्भं प्रतेरूर्ध्वमुत्तरान्तः प्रपादकम् ॥ ६७ ॥
[14]पादायामार्धमुत्सेधं अधिष्ठानप्रमाणतः । वैशेषिकप्रमाणं स्याद्विशेषोत्पत्तिभाषितम् ॥ ६८॥
अधिष्ठानोत्सेधमानं षडष्टनवभिः क्रमात् । रुद्रांशैः सूर्यभागं स्याद्दशबन्धांशमानतः ॥ ६९ ॥
[15]एकांशेनाङ्कसूत्रं स्यात्सप्तमानप्रमाणतः । शेषांशं पाददैर्घ्यं स्याद्ग्रीवां वा सप्तमानतः ॥ ७० ॥
देवहर्म्याद्यधिष्ठाने सभायां मण्डपेऽपि वा । पञ्चवर्गाग्रहर्म्यं स्याच्चतुवर्गाग्रहर्म्यकम् ॥ ७१ ॥
ततस्तद्धर्म्यमानं स्यादधिष्ठानप्रमाणतः । देवालये सभास्थाने आधारस्य प्रमाणतः ॥ ७२ ॥
[16]नरावासे न कर्तव्यं कर्तृभर्तृविनाशनम् । पादबन्धं प्रतीबन्धं द्विविधं बन्धमुच्यते ॥ ७३ ॥
एतद्देवालये कृत्यमकृत्यं मनुजालये । उपाननिष्क्रमं प्रोक्तं चतुर्दण्डं त्रिदण्डकम् ॥ ७४ ॥
त्रिदण्डार्धं [17]द्विदण्डं च द्व्यर्धं चैकमुच्यते । इत्येवं होमनिष्क्रान्तं दिक्संख्या पादबाह्यतः ॥ ७५ ॥

---

1. ऐ॰ ओ. स. म मै. म श्री सर्वदेवेषु 2 स म मै म श्री. षोडशै 3 ऐ ओ स म. श्री. प्रतिमुखे मकरास्य 4 ऐ ओ श्री केसरा भूः 5 ऐ ओ क्रियम् 6 ऐ ओ मै स म अर्हण 7. ऐ ओ ब मै स म म वा 8 ऐ ओ तदर्धेनार्धपट्ट 9 ऐ ओ तदूर्द्ध 10 ऐ. ओ र्ध्वभुज 11. ऐ ओ अशेनैवोर्ध्वपट्ट 12 ऐ ओ. वप्र 13 ऐ ओ जगत्यूर्ध्वे 14 मै. ऐ. ओ. आयामार्ध तदुत्सेधम् 15 ऐ ओ. एकाशे नाग. 16. श्री नरावासो न कर्तव्य 17. ऐ. ओ. मै. श्री. द्विदण्डार्ध.

मूलपादस्तु विस्तारः अग्रपादस्तु विस्तृतः । तत्तत्पादप्रमाणं स्यात्तत्तद्वैपुल्यमानतः ॥ ७६ ॥
[1]यदुपानस्य निष्क्रान्तं त्रियंशेन तु भाजयेत् । [2]त्यक्त्वैकांशं बहिस्तत्र वप्रकां कारयेद्बुधः ॥ ७७ ॥
तद्वत्कुमुदपट्टं च तद्वद् ग्रीवस्य [3]वेशनम् । द्विदण्डं च त्रिदण्डं च [4]पादोनं सार्धदण्डकम् ॥ ७८ ॥
[5]सपादाधिकदण्डं च दण्डदण्डार्धबाहुलम् । इत्येवं बहुधा प्रोक्तमधिष्ठानस्य लक्षणम् ॥ ७९ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे अधिष्ठानविधिर्नाम सप्तमोऽध्यायः ॥

---

# अष्टमोऽध्यायः ।

## विमानविधि

श्रीभगवान्—

प्रभेदमधुना वक्ष्ये विमानानां सलक्षणम् । आनन्त्यात् तत्प्रभेदानां किञ्चिदेव प्रदर्श्यते ॥ १ ॥
विमानानि च[6] भिद्यन्ते तलाधिष्ठानभेदतः ।

### वैजयन्तकविमानम्

ग्रीवा च मस्तकं [7]च द्वे वृत्तं चेद्वैजयन्तकम् ॥ २ ॥

### श्रीविशालम्

मूले मूले यदि स्थूलमग्रेऽग्रे सूक्ष्ममद्भुतम् । पुरोभागे [8]महाघोणं त्रिदिक्षु स्वल्पनासिकम् ॥ ३ ॥
स्तूपीचतुष्कं नासायां विमाने चोभयोरपि । वृत्तायतविमानं [9]तद्दृढधामाभिपूजितम् ॥ ४ ॥
सकर्णकूटं [10]श्रीभोगं मध्ये भद्रं तथाविधम् ।

### पुष्पकम्

श्रीविशालमिति प्रोक्तं वस्वस्रं स्वस्तिबन्धनम् ॥ ५ ॥
श्रीकरं चतुरश्रं तु [11]षोडशाश्रयुतं पुनः । विमानं पुष्पकमिदं विमानेषु सुपूजितम् ॥ ६ ॥

### केसरम्

भद्रेण सहितं मध्ये मस्तके [12]कर्णकन्धरम् । कोष्ठकं [13]भद्रनासयुङ्गं सुवृत्तं गलमस्तकम् ॥ ७ ॥
विमानं केसरमिदं सर्वालङ्कारशोभितम् ।

---

1. ऐ ओ सदु 2 स म क्त 3 स म शासनम् 4 मै ऐ ओ पदोनार्ध सदण्डकम्. 5. श्री. ऐ ओ सप्तादधिक 6 ऐ ओ विद्यन्ते 7 श्री चैव चक्र. 8. श्री. महद्घोण. 9. श्री तु तुरङ्गधामा ऐ ओ ब तु तुङ्गयामा 10 ऐ ओ ब शृङ्गाभ 11 स म षोडशाग्रमिदं. 12. मै. कण्ठ. 13. ऐ. ओ. भद्रकास्यङ्ग.

सुदर्शनम्

मुखे मुखे समावृत्तं शिरस्तु द्वित्रिनेत्रवत् ॥ ८ ॥

सौमुख्यं कर्करीभूतं वृत्तगर्भगृहान्वितम् । मुखे तस्य महाघोणं [1]विमानं चोभयोरपि ॥ ९ ॥

स्तूपीयुग्ममयुग्मं वा नासिकल्पं त्रिदिक्षु च । वृत्तायतं सुवृत्तं वा नाम्नैतत्स्यात् सुदर्शनम् ॥ १० ॥

स्वस्तिकम्

चतुरश्रमधिष्ठानं तद्व[2]त्कण्ठं च मस्तकम् । चतुष्कूटसमायुक्तं चतुष्कोष्ठसमन्वितम् ॥ ११ ॥

शिखरं च महादिक्षु महानासाभिरन्वितम् । तोरणैर्वेदिभद्राद्यैर्नानाचित्रैर्विचित्रितम् ॥ १२ ॥

नाम्नैतत्स्वस्तिकं प्रोक्तं विमानेषु सुपूजितम् ।

विपुलसुन्दरम्

तदेव सौष्ठिकं निम्नमुन्नतं कोष्ठकं यदि ॥ १३ ॥

अन्तःप्रस्तरसंयुक्तमेतद्विपुलसुन्दरम् ।

पर्वतम्

अंशमंश[3]द्वयं सत्रिपादांशं [4]स्वांघ्रिभागिकम् ॥ १४ ॥

भागद्वयं विभक्तांघ्रिप्रस्तरग्रीव[5]मस्तकम् । पादोदये नवांशे तु द्वितलादिविमानके ॥ १५ ॥

अन्तरप्रस्तरोपेतं कूटशालाभिरन्वितम् । नानालङ्कारसंयुक्तं नानापादैरलङ्कृतम् ॥ १६ ॥

विमानं पर्वतं प्रोक्तं विमानेषु सुपूजितम् ।

मन्दरम्

तदेव वर्तुलं वेदिकन्धरं शिखरं घटम् ॥ १७ ॥

अष्टकूटं चतुःशालायुक्तं सप्ताष्टनासिकम् । कोष्ठकं निर्गमं मध्ये द्वित्रिदण्डेन [6]सोष्टकम् ॥ १८ ॥

समग्रीवशिरोपेतं कूटकोष्ठसमन्वितम् । ननाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम् ॥ ९१ ॥

चतुरश्रं सुवृत्तं वा [7]नाभिभिर्बहुभिर्युतम् । नाम्नैतन्मन्दरं प्रोक्तं विमानं कमलासन ॥ २० ॥

स्वस्तिबन्धम्

तदेव शिखरे सार्धकोष्ठकं तु चतुष्टयम् । चतुरश्रशिरोयुक्तं चतुष्कूटसमन्वितम् ॥ २१ ॥

नानाधिष्ठानसंयुक्तमनेकतलसंयुतम् । नासीभिश्च सहस्रैस्तु तदर्धं पादमेव वा ॥ २२ ॥

नाम्नैतत्स्वस्तिबन्धं स्यान्नानावयवशोभितम् ।

---

1. ऐ ओ. विमाने. 2. श्री स म म. कर्ण च 3. स. म त्रयं. 4. मै. स. म. म. साघ्रि. 5. म. मध्यगम्. 6. श्री. ऐ. ओ. स. म. मै. सौष्टिकान्. 7. श्री. ऐ. ओ. नासोभिः.

—कल्याणम्—

तदेव सौष्टिकं कोष्ठमन्तरप्रस्तरैर्युतम् ॥ २३ ॥

[1]हाराल्पं कन्धरं निम्नं नवाष्टैर्वाल्पनासिकम् । नानालङ्कारसंयुक्तमेतत्कल्याणमिष्यते ॥ २४ ॥

—पाञ्चालम्—

तदेव शिखरे सार्धकोष्ठकं रहितं तु चेत् । चतुर्नासीसमायुक्तमेतत्पाञ्चालमिष्यते ॥ २५ ॥

—विष्णुकान्तम्—

तदेवाष्टाश्रकं वेदिं [2]कण्ठं च शिखरं [3]घटम् । शिखरेऽष्टमहानासि नाम्नैतद्विष्णुकान्तकम् ॥ २६ ॥

—सुमङ्गलम्—

तदेव कूटशालानामन्तरप्रस्तरैर्विना । तच्चतुर्भागमधिकमायतं चतुरश्रकम् ॥ २७ ॥

आयताश्रं तथा वेदिं [4]कर्णं च शिखरं घटम् । स्तूपीत्रयसमायुक्तमेतन्नाम्ना सुमङ्गलम् ॥ २८ ॥

—कान्तारम्—

तदेवायतवृत्तं चेद्वेदिका [5]जठरं शिरः । सर्वावयवसंयुक्तमेतत[6]कान्तारमिष्यते ॥ २९ ॥

—पुष्करम्—

तारादर्धांशमधिकमायतं चतुरश्रकम् । द्व्यश्रयुक्तं शिरोयुक्तं नेत्रशाला[7]मुखान्वितम् ॥ ३० ॥

विमानं पुष्करं प्रोक्तं सर्वहर्म्येषु पूजितम् ।

—मनोहरम्—

चतुरश्रमधिष्ठानवृत्तगर्भगृहान्वितम् ॥ ३१ ॥

[8]सर्वालङ्कारसंयुक्तमेतन्नाम्ना मनोहरम् ।

—कौबेरम्—

तदेव चतुरश्रं स्याद् गर्भगेह[9]मस्तकरम् ॥ ३२ ॥

वर्तुलं जन्मतस्तूपी कान्तं चेद्वृत्तहर्म्यकम् । आयताश्रमधिष्ठानं षडश्रं कन्धरं शिरः ॥ ३३ ॥

[10]सर्वालङ्कारसंयुक्तं नाम्ना कौबेरकान्तकम् ।

—भद्रकोष्टम्—

नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम् ॥ ३४ ॥

---

1 श्री. ऐ ओ स. म हाराल्पपञ्चरै. 2. श्री स म. कर्ण. 3 ऐ ओ कृतम् 4. ऐ ओ. कण्ठ. 5. श्री ऐ. ओ. स म. कन्दर. 6 ऐ. ओ गान्धार 7. ऐ. ओ सुखा 8. स. म सर्वावयव. 9. श्री. समन्वितम्. 10. श्री. नाना.

पादोपरि [1]समासीनस्वस्तिकाबन्धशोभितम् । अनेकतलसंयुक्तं नानालङ्कारसंयुतम् ॥ ३५ ॥
नासीभिर्बहुभिर्युक्तं स्तूपीभिर्बहुभिर्युतम् । भद्रकोष्ठमिदं नाम्ना आयतं चतुरश्रकम् ॥ ३६ ॥

वृत्तकूटम्

तदेव वर्तुलं कर्णकूट[2]कर्णशिरस्तथा । चतुर्नासीसमायुक्तं वृत्तकूटमिदं भवेत् ॥ ३७ ॥

कोष्ठभद्रम्

तदेवाष्टांशमाधिक्यमायतं चतुरश्रकम् । कर्णकूटं [3]तथा कर्णमायतं वृत्तमस्तकम् ॥ ३८ ॥
कोष्ठभद्रमिदं विद्यात्सर्वहर्म्येषु पूजितम् ।

श्रीभोगम्

तदेव वर्तुलं [4]वेदिकर्ण च शिखरं घटम् ॥ ३९ ॥
शेषं पूर्ववदुद्दिष्टं नाम्ना [5]श्रीभोगमिष्यते ।

पुष्करम्

वृत्ते वृत्तायते चैव नासीभिर्बहुभिर्युतम् ॥ ४० ॥
अनेकतलसंयुक्तं नानालङ्कारसंयुतम् । विमाना[6]धारकैर्युक्तमेतत्पुष्करमिष्यते ॥ ४१ ॥

लम्बपञ्जरम्

जलस्थलं विहायोर्ध्वे आयतं चतुरश्रकम् । कर्ण च शिखरं [7]तद्व[8]चतुर्नासीसमन्वितम् ॥ ४२ ॥
विमानाधारकैर्युक्तं बहुस्तूपीसमन्वितम् । नानानङ्कारसंयुक्तं लम्बपञ्जरमीरितम् ॥ ४३ ॥

जयावहम्

नानामसूरकस्तम्भवेदिकाजालतोरणम् । नानालङ्कारसंयुक्तं नानाचित्रैर्विचित्रितम् ॥ ४४ ॥
सोपपीठमधिष्ठानं केवलाङ्गमसूरकम् । स्वस्तिकाकारसंयुक्तं नासिकाभिरलङ्कृतम् ॥ ४५ ॥
आयतं चतुरश्रं च अनेकतलसंयुतम् । नानानाटकसंयुक्तमेतन्नाम्ना जयावहम् ॥ ४६ ॥

वन्दिकम्

तदेवान्यैरलङ्कारै[9]र्वेदाश्रिं कन्धरं शिरः । नानामसूरकस्तम्भवेदिकाद्यैरलङ्कृतम् ॥ ४७ ॥
नाम्ना वन्दिकमित्युक्तं विष्णोर्मन्दिरमुत्तमम् ।

सौभद्रम्

आयताश्रं सभाकारं शिरः सर्वायताश्रकम् ॥ ४८ ॥

---

1 श्री ऐ ओ स. म मै भवेन्नासि 2 ऐ ओ स. म कण्ठ 3 श्री अधः 4. ऐ. ओ वेदि कण्ठ 5. ऐ. ओ श्री श्रीयोग 6 श्री पादुकै:. 7 श्री चैव. 8 ऐ. ओ श्री. चतुर्नासिक-मङ्गलम्. 9. श्री. मै. वेदाश्रं कन्दर

अनेकतलसंयुक्तं स्तूपीत्रयसमन्वितम् । स्तूपीचतुष्कयुक्तं वा चतुर्नासीसमन्वितम् ॥ ४९ ॥
[1]सौभद्रमिति ज्ञेयं वर्षस्थलविवर्जितम् ।

कमलमण्डलम्

चतुरश्रमधिष्ठानं चतुरश्रगलं तथा । कुम्भाकारं [2]गलादूर्ध्वमनेकतलसंयुतम् ॥ ५० ॥
विमानमेतद्देवस्य [3]ज्ञेयं कमलमण्डलम् ॥ ५१ ॥

इन्दुभद्रम्

महापट्टत्रिभागेन मुखे [4]भवति नासिका । शतदृक् स्पृष्टपार्श्वे तु आश्रेयं त्रितलच्छदम् ॥ ५२ ॥
इन्दुभद्रमिदं नाम्ना भवनेषु सुपूजितम् ।

धवलिकान्तम्

पट्टिकाम्बुजस्रग्वेत्रवेत्र[5]दृक्पट्टिकान्वितम् ॥ ५३ ॥
प्राङ्गणं तु चतुर्भेदं शुकनासासमन्वितम् । चतुरश्रं चन्द्रशाला मुखे महति नासिका ॥ ५४ ॥
[6]एकपश्चार्धपश्चार्धचतुर्भागैरधःक्रमात् । नाम्ना [7]धवलिकान्तं स्यात्पद्माधिष्ठानसंयुतम् ॥ ५५ ॥

सौम्यम्

चतुरश्रादिभूपेतमुपर्यष्टाश्रसंयुतम् । तदूर्ध्वं [8]समवृत्तं तु प्रागुक्तान्य[9]क्रमान्वितम् ॥ ५६ ॥
सौम्यं नाम्ना च साधारं शिखरं [10]कण्ठकूटधृक् ।

ललितभद्रकम्

कर्णकूटं सुवृत्ताभं ग्रीवाकारं सकुण्डलम् ॥ ५७ ॥
शिखरेण समायुक्तं नाम्ना [11]ललितभद्रकम् ।

व्यासाख्यम्

आयताश्र[12]मधश्छन्दं व्यासाख्यं शक्तिबन्धनम् ॥ ५८ ॥

शैलच्छन्दम्

दीर्घं [13]कमलबन्धं तु वृत्तग्रीवा तथा शिरः । *पञ्चकोष्ठकपादाद्यग्रहपिण्डिमपिण्डितम् ॥ ५९ ॥

---

1. श्री. सौभद्रकमिद प्रोक्त. 2 म तला. 3. श्री व्येय 4. स. म. म. महति.
5. ऐ. ओ. स. म. श्री धृक् 6. स. म. एकत्रिपार्श्व. 7 म. ललितकान्त 8. ऐ. ओ श्री. अग.
9. श्री. क्रिया. 10. श्री.स. म. म. कर्ण. 11. ऐ ओ श्री. धवल. 12. श्री. मिति.
13. ऐ. ओ. स. म मण्डल * ऐ ओ पञ्चकोष्ठपादाद्यग्रहपिण्डविमण्डलम् ।
श्री. पञ्चकोष्ठकमित्युक्तं ग्रहाणामपि मण्डलम् ।

अर्पितानर्पिताङ्गं च शैलच्छन्धसमाह्वयम् ।

मध्येभद्रम्

विशालं च शिरोयुक्तमेतदेव जयावहम् ।। ६० ।।

निम्नशालोच्चकूटं तु चतुरष्टाश्रवृत्तवत् । नासिकाबहुसंयुक्तं मूलमध्याग्रकूटकम् ।। ६१ ।।

वृत्तगर्भगृहं नाम्ना मध्येभद्रमिति स्मृतम् ।

श्रीमच्छन्दम्

एतन्नाम्ना श्रियश्छन्दं चतुरश्रा[1]न्तरालयम् ।। ६२ ।।

योगानन्दनम्

एतदेव त्रिरश्रं चेत् [2]शाखाकारं शिरोगलम् । मुखान्तमुन्नतमुखं [3]शेषं तद्वृत्तकर्णकम् ।। ६३ ।।

पृष्ठतश्चा[4]श्रयुक्तं तत् श्रान्तकेशप्रकोष्ठकम् । समवृत्तशिरोयुक्तं योगा[5]नन्दनमुच्यते ।। ६४ ।।

हंसतारकम्

आयताष्टा[6]ष्टशिखरग्रीवमष्टाष्टनासिकम् । सौकर्यं सौकुमार्यं च षडष्टशिखरान्वितम् ।। ४५ ।।

घटाकृति समाकारं कर्णकूटोल्लसद्गलम् । षडश्रशिखरं ग्रीवं नाम्ना तद्धंसतारकम् ।। ६६ ।।

माहेन्द्रकम्

आय[7]ताग्राकृतिः शाला शिरःशाला मुखे मुखे । [8]द्विचन्द्रशालकं पृष्ठमेतन्नाम्ना महेन्द्रकम् ।। ६७ ।।

सूर्यकान्तम्

चतुरश्राङ्गसंयुक्तं चतुरश्रमसूरकम् । नव त्रयोदशं दीर्घं ह्रस्वाकारं च मण्डलम् ।। ६८ ।।

[9]शालामुखे मुखे पृष्ठे तत्पार्श्वेष्वष्टनासिकम् । ग्रीवापिण्डं चतुर्विंशन्नासिकाभिरलङ्कृतम् ।। ६९ ।।

नाम्नैतत्सूर्यकान्तं स्याद् वृत्तायतशिरोगलम् ।

मङ्गलास्पदम्

सौरभ्यं पार्श्व[10]पादान्तं मध्यमं सोर्ध्वपञ्जरम् ।। ७० ।।

मङ्गलास्पदमित्युक्तं नाम्ना शेषं पुरोक्तवत् ।

उदारसारम्

दशभागं चतुर्भागं व्यासवृत्तान्तमायतम् । चतुरश्रं बहुच्छन्दं [11]शालायां च मुखे मुखे ।। ७१ ।।

---

1. श्री अन्तरालकम्. 2. ऐ ओ. म. स म. शाला. 3 म षष्ठान्त तद्वृत्तकण्ठकम्. 4. ऐ ओ. श्चाग्रयुग्म तु क्रमुके वप्रकोष्टकम्. 5. ऐ. ओ नन्दद. 6. स म. ऐ ओ. ष्टाश्र 7. स म. ऐ. ओ. ताश्रा. 8. स. म. अर्धचन्द्रालक. 9. ऐ. ओ. शाखा. 10. ऐ. ओ. स. म. भागान्तं. 11. ऐ ओ. शाखायां.

महानासीद्वयोपेतं [1]मुखे च [2]चतुरष्टकम् । शिरः पद्मासने [3]पन्थाः पद्मकुण्डलसन्निभम् ॥ ७२ ॥
विंशति द्वारिकानासी निद्रानिद्रसमन्वितम् । द्विभागं च चतुर्भागं वृद्ध्या दीर्घाश्रमूलकम् ॥ ७३ ॥
प्रागुक्तं चतुरश्रं तु शालापञ्जरसंयुतम् । शतनासीसमायुक्तं तथा चैव तु विंशतिः ॥ ७४ ॥
प्राङ्मुखो मध्यमारभ्य कूटमन्यत् पुरोक्तवत् । उदारसारमेतत्तु दीर्घं [4]वृत्तं तु सारवत् ॥ ७५ ॥

विजयम्

अर्धान्यष्टाश्रसंयुक्त[5]मधस्ताच्चतुरायतम् । [6]उज्वलं प्रज्वलं भूमिचतुरश्राष्टमण्डलम् ॥ ७६ ॥
अर्धारं च तथा ग्रीवं शिखरं युगनासिकम् । विजयं नाम षट्सप्तभागार्धार्धसमन्वितम् ॥ ७७ ॥

अमलाङ्गम्

[7]चतुरर्धं चतुष्कोष्ठवृत्ताष्टाश्रशिरोगलम् । अमलाङ्गमिदं नाम्ना नवसप्तपदे स्थितम् ॥ ७८ ॥

विमलाकृतिः

युक्तं द्वादशभिः कोष्ठैः अष्टाभिश्च प्रकोष्ठकैः । [8]अष्टोर्ध्वपञ्जरैरष्टनासिकाशिखरान्वितम् ॥ ७९ ॥
अनेकतलसंपन्नं नाम्नैतद्विमलाकृति । महापीठं तु गर्भे स्यात् अर्धारों चोर्ध्वपट्टिका ॥ ८० ॥
मण्डूकै[9]र्धारिकाभासादासने परिकल्प्य च । कोष्ठैर्द्वादशभिर्युक्तं सौष्ठिकाभिरथाष्टकैः ॥ ८१ ॥
व्यक्तैः पञ्जरशालाभिर्द्वाराग्रशिखरैर्गलम् । [10]अष्टोर्ध्वं पञ्जरं त्रिंशच्छतैस्तु [11]विमलेदहम् ॥ ८२ ॥
सुवृत्तं शिखरग्रीवं कपोतेनाष्टनासिकम् । अर्धाधिके चतुष्कोणे मङ्गलाकारकुट्टिमम् ॥ ८३ ॥
एतद्धि विमलं धाम त्रिधेयं विमलाकृतिः ।

श्रीधरम्

विंशत्त्रयोदशांशं वा अष्टांशं द्वादशांशके ॥ ८४ ॥
द्वात्रिंशत् त्रिंशतिर्वापि गर्भे स्याच्चतुरायतम् । अर्धाधिकाधिकं द्व्यङ्गं [12]कर्करीकृतनासिकम् ॥८५॥
तथा विन्यस्तसर्वाङ्गं शालाकृति शिरोन्वितम् । शिखराष्टं महानासि शालापञ्जरसंयुतम् ॥ ८६ ॥
एत[13]च्छ्रीधरमित्युक्तं श्रियं ददति देहिनाम् ।

चन्द्रकान्तम्

एवद्वृत्तायताकारं कर्करीकृतनासिकम् ॥ ८७ ॥

---

1. ऐ. ओ. मुखेन. 2. स. म. रश्रकम्. 3 मै. बन्धा . 4 श्री. ऐ. ओ. स. म. वृत्तानुसारवत्. 5. ऐ. ओ. श्री. उन्नतात्. 6. श्री. ऐ. ओ. विज्वलं, स. म. निश्चलं. 7. ऐ. ओ. स. म. श्री. चतुष्कूटं. 8. श्री. ऐ. ओ. अर्धार्धे. 9. श्री. ऐ. ओ. द्वारिकाभिश्च. 10. श्री. ऐ. ओ. स. म. अष्टोर्ध्वपञ्चकं विंशच्छेदेतस्तु. 11. स. म. विमलो भवेत्. 12. ऐ. ओ. कर्त्तरी. 13. ऐ. ओ. श्री. च्छुरीकान्त.

शेषं पूर्वोक्तवत्सर्वं चन्द्रकान्तमिदं स्मृतम् ।

श्रीप्रतिष्ठितम्

मुखे मुखे सभावक्त्रं [1]शिरसस्तद् द्विनेत्रवत् ॥ ८८ ॥

सौमुख्यं कर्क[2]रीभूतं वृत्तगर्भगृहान्वितम् । वृत्तायतविमानेषु मुखे महति नासिका ॥ ८९ ॥

नासिकापृष्ठतश्चापि स्तूपीत्रयसमन्वितम् । चतुरश्रतलच्छन्दं वृत्तगर्भगृहान्वितम् ॥ ९० ॥

सुवृत्तं शिखराकारं नासीभिः पञ्चभिर्युतम् । नवांशं वाऽष्टसंयुक्तं श्रीप्रतिष्ठितमुच्यते ॥ ९१ ॥

शुद्धस्वस्तिकम्

महानास्यां चतस्रः स्युः शालापञ्जरसंयुतम् । तच्चतुश्चार्धसंयुक्तं वृत्तमूर्ध्वशिरोधरम् ॥ ९२ ॥

सञ्चितं सञ्चिताङ्गं च सोपानानां [3]चतुष्टयैः । कपोत [4]मूलया युक्तं द्वारेणैव पताकया ॥ ९३ ॥

[5]अन्तः प्रस्तरसंयुक्तमुन्नताङ्ग[6]समन्वितम् । प्रासादमध्य [7]कर्णस्थैः नीलीकृतविशालकैः ॥ ९४ ॥

शालापञ्जरकूटैश्च [8]युक्तं प्रासादमस्तकम् । अधिष्ठानादिभिर्वर्गैरूहप्रत्यूह[9]मण्डनैः ॥ ९५ ॥

नन्द्यावर्ताकृतिं प्राप्तैः सोपानानां चतुष्टयैः । युक्तं बहुतलोपेतं शुद्धस्वस्तिकमुच्यते ॥ ९६ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे प्रासादभेदो नाम अष्टमोऽध्यायः ॥

## नवमोऽध्यायः ।

प्रासादविधि.

वेसरम्

श्रीभगवान्—

नागरं द्राविडं चैव वेसरं चेति तत् त्रिधा ।

नागरम्

आस्तूपी[10]कर्णमारभ्य चतुरश्रं प्रकल्पितम् ॥ १ ॥

धामायताश्रमथवा नागरं तदुदाहृतम् ।

द्राविडम्

वस्वश्रमायतं धिष्ण्यं षडश्रमथवायतम् ॥ २ ॥

1. स. म. शिखरं तु त्रिनेत्रवत्. 2. ऐ, ओ, रीत्युक्त. 3. श्री चतुष्टयम्, 4. श्री. मालया. 5. ऐ, ओ. एतत्. 6, ऐ. ओ. शिरोधरम्. 7. श्री. कण्ठस्थै.. 8, स. म. रिक्तं. 9. श्री. ऐ. ओ. मण्डलैः, 10, म. कण्ठं.

उक्तं तद् द्रामिडाह्वानं वृत्तं वृत्तायतं पुनः ।

—वेसरम्—

वेसराख्यं तदाख्यातमेवं त्रिविधमिष्यते ॥ ३ ॥

—मूर्धेष्टकाविधि—

मूर्धेष्टकाविधिं ब्रह्मन् शृणु वक्ष्यामि सांप्रतम् । भवनस्य पुरः पूर्वं पूर्ववत्कारयेत्प्रपाम् ॥ ४ ॥

तन्मध्ये वेदिकां कुर्यात्सर्वालङ्कारसंयुताम् । [1]यन्मध्यो यादृशाः पूर्वं कल्पिताः प्रथमेष्टकाः ॥ ५ ॥

मूर्धेष्टकाश्च [2]तन्मध्यश्चतस्रस्तादृशाः स्मृताः ।

—स्नपनार्थं कलशप्रतिष्ठा—

स्नापयेत्पूर्ववत्ताश्च धान्यराशिषु निक्षिपेत् ॥ ६ ॥

द्वारकुम्भान् ध्वजान् सम्यक् तोरणा[3]नि समर्चयेत् । संस्थापयेन्महाकुम्भं तस्मिन्नावाह्य पूजयेत् ॥ ७ ॥

वेदिकायाश्चतुर्दिक्षु होमः पूर्ववदिष्यते । दिक्ष्वष्टासु तथा धाम्नः शान्तिहोमं [4]प्रकल्पयेत् ॥ ८ ॥

पूर्ववच्चेष्टकाः सूत्रैः वेष्टये[5]त्प्रयतोऽब्जज । धान्यराशिषु संस्थाप्य कलशान् पञ्चविंशतिः ॥ ९ ॥

मणिहेमादिसंयुक्तान् सूत्रवस्त्रादिवेष्टितान् । अर्चयेत् गन्धपुष्पाद्यैः आचार्यः शास्त्रचक्षुषा ॥ १० ॥

—आचार्यनियमा—

उपोषितः शुचिः स्नातो नववस्त्राङ्गुलीयकः । तत्रैव दर्भानास्तीर्य शयीत विजितेन्द्रियः ॥ ११ ॥

मूर्धेष्टकानामाधाता तथैव गुरुणा सह । [6]यजमानेन शुद्धात्मा सोपवासो जितेन्द्रियः ॥ १२ ॥

वसेत्तत्रैव दर्भेषु ध्यायन् परमपूरुषम् । एवं रात्रौ प्राकुर्वीत यथोक्तं सर्वमक्षतम् ॥ १३ ॥

—इष्टकास्नापनाधाने—

श्वोभूते विमले शुद्धे मुहूर्ते गुरुरात्मवान् । उद्धृत्य कलशान् सर्वान् स्नापयेन्मूलविद्यया ॥ १४ ॥

महाकुम्भस्थतोयेन भूयस्तान् स्नापयेत् गुरुः । अभ्यर्च्य मूलमन्त्रेण वेष्टयेन्नववाससा ॥ १५ ॥

आदाय चेष्टकाः सर्वा ऋत्विजः समलङ्कृताः । धाम प्रदक्षिणीकृत्य तूर्यघोषसमन्वितम् ॥ १६ ॥

आरोपयेयुस्तान् सर्वान् विमानस्योपरि स्थले । पुण्याहं वाचयेत्तत्र ऋत्विग्भिः सहितो गुरुः ॥ १७ ॥

मूर्धेष्टकानामाधाता प्राङ्मुखः सुसमाहितः । ध्यायन्नारायणं देवं हृत्पद्मे प्रणवं जपेत् ॥ १८ ॥

आदध्यादिष्टकाः [7]सर्वाः पूर्वादिक्रममा[8]श्रितः ।

1 श्री. यन्मध्ये. 2. श्री. म. तन्मध्ये. 3. ऐ. ओ. दि. 4. श्री, प्रवर्त्तयेत्, 5. ऐ ओ. स. म. श्री. पृथक्, 6. ऐ. ओ. स. म. म. यजमानो विशुद्धात्मा, 7. स. म. पश्चात्, 8. ऐ. ओ. श्री, स्थितः.

—∘◇⊱ स्त्रीशूद्रादीनाममन्त्रकमाधानम् ⊰◇∘—

स्त्रीशूद्राः सानुलोमाश्च तूष्णीमाधानमाचरेत् ॥ १९ ॥

—∘◇⊱ इष्टकाविधौ वर्ज्या जनाः ⊰◇∘—

पापरोगयुतान् ब्रह्मन् पतितान् प्रतिलोमजान् । वर्जयेद्यत्नमास्थाय मर्त्यान् मूर्धेष्टकाविधौ ॥ २० ॥

—∘◇⊱ गुरोः सत्कारः ⊰◇∘—

प्रणम्य शिरसा भूमौ यजमानो गुरुं पुनः । वस्त्रैश्च धनधान्यैश्च गोभूमिकनकैस्तथा ॥ २१ ॥

पञ्चाङ्गभूषणं दद्यात् दासीदासाँस्तथैव च । वाहनं हस्तितुरगं छत्रोपानहमेव च ॥ २२ ॥

तस्मै [1]च गुरवे सर्वं प्रयच्छेदविशङ्कितः ।

—∘◇⊱ रथकारतोषणम् ⊰◇∘—

तोषयेद्रथकाराँश्च वस्त्रान्नधनधान्यकैः ॥ २३ ॥

—∘◇⊱ स्तूपिकाकीलविधिः ⊰◇∘—

स्तूपिका कीलमधुना वक्ष्यामि कमलासन । लोहजं दारुजं वापि स्तूपिकाकीलमिष्यते ॥ २४ ॥

ऊर्ध्वभूम्यङ्घ्रितुलितं विस्तारायामसंमितम् । स्तूपिका कीलमेतत्स्यादग्र[2]मङ्गुलसंयुतम् ॥ २५ ॥

विमान[3]कण्ठतुलितमध्यर्धं द्विगुणं तु वा ।

—∘◇⊱ कीलस्याकारभेदाः ⊰◇∘—

एवं चतुर्विधं प्रोक्तं स्तूपिकाकीलमुत्तमम् ॥ २६ ॥

[4]उद्वृत्तं चतुरश्रं वा [5]पञ्चाश्रं वा प्रकल्पयेत् ।

—∘◇⊱ विमानभेदेन कीलकसंख्या ⊰◇∘—

वृत्तायते विमाने तु चतुरश्रायतेऽपि च ॥ २७ ॥

युग्मं स्यात् स्तूपिकाकीलमपुनर्भवकांक्षिणाम् । इतरेषामयुग्मं स्यात् स्तूपिकाकीलकल्पनम् ॥ २८ ॥

यावद्विंशति युग्मं स्यात् अयुग्मैकोनविंशतिः । चतुरश्रे षडश्रे च अष्टाश्रे समवृत्तके ॥ २९ ॥

स्तूपिकाकीलमेवं स्यात्सर्वकामसमृद्धिदम् ।

—∘◇⊱ कीलाधिवासे विशेषः ⊰◇∘—

कृत्वैवं स्तूपिकाकीलं अधिवासं प्रकल्पयेत् ॥ ३० ॥

स्नापनादिक्रियाः सर्वा यावदारोपणक्रिया । मूर्धेष्टकावत्कर्तव्या विशेषस्तु विधीयते ॥ ३१ ॥

---

1. श्री. स गुरवे देया दक्षिणा. 2 श्री. ऐ, ओ. स. म. मङ्गुलिनिर्मितम्. 3. स. म, श्री. कर्ण. 4. श्री. तद्वृत्त. 5. स. म. म. श्री. वस्वश्र.

आरोपिते ततः कीले विमानाग्रे स्थितः सुधीः । पुण्याहं वाचयेद् गर्ते नवरत्नं विनिक्षिपेत् ॥३२॥
पूर्वादिमध्यमान्तं स्यात् धातुबीजं सलोहकम् । क्षिप्त्वा गर्ते ततःस्तूपीं प्राङ्मुखो मूलविग्रया ॥ ३३ ॥

—आचार्यालङ्कारः—

आचार्यः स्थापयेत् स्तूपीं पञ्चाङ्गाकल्पभूषितः । हारोपवीनकटकैः केयूरैरङ्गुलीयकैः ॥ ३४ ॥
पञ्चाङ्गभूषणै[1]रेतैर्भूषितः सोत्तरीयकः । सुधया स्तूपिकागर्तं दृढीकुर्यादनन्तरम् ॥ ३५ ॥

—स्तूप्याः वक्रभावे दोषः—

स्थापनीया ऋजुस्तूपी वक्रा चेद्बहुदोषदा ।

—स्तूप्याः लोहभेदेन फलम्—

सौवर्णी राजती ताम्रा स्तूपी दारुमयी तथा ॥ ३६ ॥
पूर्वपूर्वा बहुफला पश्चिमा पश्चिमाल्पदा । गुरवे दक्षिणा देया हेमसंख्या च पूर्ववत् ॥ ३७ ॥
शिखाकुम्भं सुवर्णं वा राजतं ताम्रमेव वा । पैत्तलं मृण्मयं वापि स्थापयेत् [2]तत्क्षणे शुभे ॥ ३८ ॥

—धामानुगुण्येन स्तूप्याकारः—

वृत्ते धामनि वृत्तं स्यात् अश्रयुक्तेऽश्रयुक्[3]च तत् । नानारत्नैश्च लोहैश्च शिखाकुम्भं च पूरयेत् ॥ ३९ ॥
घटाग्रं मुकुलाकारं दीपाकारमथापि वा । कुर्यान्मनोहरं [4]हृद्यमधस्तात्तस्य पङ्कजम् ॥ ४० ॥

—शूलभेदः—

महानासोत्तमाङ्गेषु चक्रं वा शूलमेव वा । स्थापयेल्लोहजं वापि दारुजं वा [5]तथा भवेत् ॥ ४१ ॥

—विमानतले कल्पनीयानां देवतानां विकल्पः—

तले तले विमानानां दिक्षु देवान् प्रकल्पयेत् । इन्द्रमैन्द्र्यां कुमारं वा दक्षिणस्यामुमापतिम् ॥ ४२ ॥
दक्षिणामूर्तिमथवा प्रतीच्यां नृहरिं हरिम् । श्रीधरं वा तथोदीच्यां ब्रह्माणं वा धनाधिपम् ॥४३॥
अथवाऽऽदिवराहः स्यात् प्राच्यां नरहरिस्तथा । ततो नु श्रीधरो देवः ततो हयशिराः स्मृतः ॥४४॥
प्राच्यादिष्वथवा दिक्षु नरो नारायणो हरिः । कृष्णश्चत्वार एते स्युः अथवा पुरुषः परः ॥ ४५ ॥
सत्यो दक्षिणतः पश्चादच्युतोऽनन्त उत्तरे । वासुदेवादयो वा स्युर्दिक्षु पूर्वादिषु क्रमात् ॥ ४६ ॥
श्रीधरं पूर्वदिग्भागे वराहं दक्षिणे तथा । नृसिंहं पश्चिमे भागे अनन्तं चोत्तरे तथा ॥ ४७ ॥

—विमानदेवतानां ध्रुवबेरसमसंस्थानता—

ध्रुवबेरे स्थिते दिक्षु मूर्तयोऽपि स्थितास्तथा । आसीने तद्वदासीनाः शयाने तूभयं भवेत् ॥ ४८ ॥
यानारूढे प्रधाने तु यानारूढाः स्थिताश्च ते । विश्वरूपे तु तद्वत्स्यात् स्थिता वा स्युश्चतुर्भुजाः ॥ ४९ ॥
इन्द्रादयश्च दिग्देवाः आसीना एव ते सदा ।

1. श्री. रत्नै.. 2. म. दक्षिणे, 3. श्री. भवेत्, 4. ए. ओ. स. म. दृश्य, 5. श्री स म. मै. नवा.

शैलादिविमाने तदुपादाना एव देवताः

विमाने शैलजे दिक्षु शैलजा एव देवताः ॥ ५० ॥
तोयाधिवासनं कृत्वा मण्डपे चाधिवास्य च। मुहूर्ते स्थापयेद्दिक्षु वर्णालेपं समाचरेत् ॥ ५१ ॥
शूलानि स्थापयेद्दिक्षु विमाने त्विष्टकामये। तोयाधिवासनं कृत्वा अधिवास्य न्यसेत्क्रमात् ॥ ५२ ॥

वर्णलिपविधिः

त्रिवस्तु[1]कमयं कृत्वा वर्णालेपं समाचरेत्। यो वर्णो यस्य शास्त्रोक्तः तेनैवालेपनं भवेत् ॥ ५३ ॥
व्यत्यासे ब्राह्मणादीनां वर्णानां सङ्करो भवेत्।

भित्तिभागे देवतानां अर्धचित्रादिविकल्पः

सर्वे च भित्तिभागस्थाः पद्मविष्टरमास्थिताः ॥ ५४ ॥
अर्धचित्राः कृताः सर्वे चित्राभासेन वा भवेत्। एकनासासमायुक्ते एका दिङ्मूर्तिरिष्यते ॥ ५५ ॥
चतुर्भुजो वा द्विभुजः सौम्यवक्त्रः स्मिताननः।

नासिकाहीनविमाने दिङ्मूर्तिनिषेधः

विमाने नासिकाहीने दिङ्मूर्तिरपि नेष्यते ॥ ५६ ॥

विमानभेदेन दिङ्मूर्तिभेदः

चतुरश्रायते वृत्ते धाम्नि वृत्तायतेऽपि च। वीरसेनः सुषेणश्च वीरनाथः सुभद्रकः ॥ ५७ ॥
आग्नेयादिविदिक्ष्वेते बाहुभिः सम्नधारिणः। विष्णुपारिषदाः स्थाप्याः करालवदनान्विताः ॥ ५८ ॥
चतुरश्रायते धाम्नि नासिकाद्वयसंयुते। दक्षिणोत्तरतस्तस्य पुरुषौ पूर्णपुष्करौ ॥ ५९ ॥
शङ्खचक्रधरौ स्थाप्यौ हस्तौ यवनिकास्पृशौ। तले तले विमानस्य सुरा विद्याधराः [2]स्मृताः ॥ ६० ॥
नृत्यन्तो बहुधा वेणुवीणापणवधारिणः। कल्पनीयास्तथान्ये च किन्नरोरगजातयः ॥ ६१ ॥
ममावताराः सर्वत्र कल्प्यास्तच्चेष्टितानि च।

कपोतेषु हंसमालादिकल्पनम्

[3]कपोतेषु कपोतेषु तलेषु च तलेषु च ॥ ६२ ॥
हंसमालां प्रकल्पेत भूतमालां तथैव च। अन्योन्यमुखमालोक्य स्थिता गगनयायिनः ॥ ६३ ॥
भूतानि [4]नाना नृत्यन्ति विकृतानन[5]भाञ्जि च। प्रतेरुपरि कण्ठस्याप्यधस्तात्कोणभूमिषु ॥ ६४ ॥
गरुडान् कल्पयेत् सिंहान् संविष्टानथवा स्थितान्।

उक्तानामुच्छ्रायमानम्

तदुन्नतं कण्ठमात्रं पादमात्रमथापि वा ॥ ६५ ॥

---

1. श्री स म क्रमश. 2. श्री स्थिता. 3 म कल्पितेषु कपोतेषु तलेषु च दलेषु च.
4. म. तानि. 5. स म. ऐ. ओ. भान्ति.

अध्यर्धं वा त्रिपादं वा नान्यथोच्छ्रायमिष्यते ।

अधिष्ठानाधस्थाः देवताः

अधस्तात्तदधिष्ठाने कल्पयेद्देवताः क्रमात् ॥ ६६ ॥

आग्नेये हस्तिवदनमीशं दक्षिणतोऽथवा । दक्षिणामूर्तिमृषिभिः सेवितं वटमाश्रितम् ॥ ६७ ॥

विश्वरूपं प्रतीचीने कमलासनमुत्तरे । ऐशान्यां वसुधां देवीं स्थापयेत्तु विचक्षणः ॥ ६८ ॥

अथवा पूर्ववत्सर्वा दिङ्मूर्तीः परिकल्पयेत् । अधस्तादुपपीठेऽपि पूर्वोक्ता [1]दिक्षु देवताः ॥ ६९ ॥

अथवा तत्कथोपेतान् प्रादुर्भावान् प्रकल्पयेत् ।

सुधा[2]कल्पनप्रकारः

पाषाणशर्करातक्रसुधया त्रिःप्रकारया ॥ ७० ॥

[3]पिष्टया त्रिफलाम्भोभिः सकृद्द्विस्त्रिश्च यत्नतः । खदिरार्जुनजैस्तोयैः शाल्मल्या क्षीरशाखिनः ॥७१॥

मिश्रीकृत्यावटे सम्यक् तोयभावितया [4]तथा । अभिषिच्य परिकार्थं संमिश्रीभूतया पुनः ॥ ७२॥

गुडपाकरसैस्तैश्च पुनः [5]क्वथितया भृशम् । धाम लिम्पेत्क्रमेणैव स्थूलादित्रिविधात्मना ॥ ७३ ॥

चिरस्थायि भवेदेवं कल्पिते [6]मन्दिरं तु तत् ।

लेपनत्रैविध्यम्

पाषाणशर्करातक्र[7]सुगन्धं चूर्णयेत् पुरा ॥ ७४ ॥

तच्चूर्णे [8]पिष्टमाने तद्द्विगुणां वालुकां क्षिपेत् । पिष्टं तदेकवारं चेत् स्थूलं द्विः पिष्टमुच्यते ॥ ७५ ॥

सूक्ष्मं त्रिश्चेत्परिज्ञेयः स्थूलाद्यालेपनक्रमः ।

पञ्चवर्णकल्पनम्

पञ्चवर्णैस्ततः कुर्याच्छोभितं शास्त्रचक्षुषा ॥ ७६ ॥

उपानहादि स्तूप्यन्तं भूषयेत् कनकादिभिः । मुक्ता[9]मणि हिरण्यस्रक् किङ्किणीजालहेतुभिः ॥ ७७ ॥

भूषयेत् सदनं विष्णोः यथावित्तानुसारतः ।

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे मूर्धेष्टकाविधिविमानदेवताकल्पनं नाम नवमोऽध्यायः ॥

---

1. स. म. अपि. 2 श्री. लेपन. 3 स. म त्रिवषा धात्रीफलाम्भोभिः. 4. ऐ. ओ स म. श्री. तया. 5. स. म. ऐ. ओ. कुट्टितया 6. श्री भवने सति. 7. श्री. सुधान्यं. 8 श्री. ऐ ओ. स. म, वे. पिष्टमानेन. 9. स. म, दाम,

## दशमोऽध्यायः ।

परिवारदेवतास्थानादिकल्पनम्

श्रीभगवान्—

परिवारनिवेशार्थं शोभार्थं मन्दिरस्य च । रक्षणार्थं च परितः प्राकारं परिकल्पयेत् ॥ १ ॥

अन्तर्मण्डलादिप्राकारनिरूपणम्

अन्तर्मण्डलनामानं प्राकारं प्रथमं विदुः । अन्तर्हारं ततो वप्रं [1]मध्यहारमनन्तरम् ॥ २ ॥
अनन्तरं च मर्यादा [2]महतीनाम पञ्चमम् । पञ्चैते चतुरश्राः स्युः समुपेतखलूरिकाः ॥ ३ ॥
पञ्चभेदाश्च तन्त्रेषु चन्द्रिका भूमिरन्तिमा । [3]एकान्तं भूवली कल्प्या द्वयी वा कमलासन ॥ ४ ॥
उपानदादि पञ्चाङ्गमधिष्ठानं प्रकल्पयेत् । दण्डं तदर्धं पादोनं स्योत्सेधः [4]समीरितः ॥ ५ ॥
अधिष्ठाने कृते तस्मिँस्तम्भमाला विधीयते । अन्तरालं महीमाहुर्धामान्तर्मण्डलाख्यया ॥ ६ ॥
पञ्चहस्तां चतुर्हस्तां द्विहस्तां वा यथेच्छया । अन्तरावरणस्यास्य पञ्चप्रासाद[5]गुम्भितः ॥ ७ ॥

सालान्तरालोच्छ्राययोर्मानम्

विच्छिन्ने चान्तरेषां तु सालानामन्तरालभूः । एकद्वित्रिचतुर्हस्तैः क्रमशो वर्धितो भवेत् ॥ ८ ॥
मन्दिरस्य महानासासमः सालसमुच्छ्रयः । ग्रीवाग्रतुलितो वा स्यात् प्रतिसंमित एव वा ॥ ९ ॥
उपपीठसमा[6]युक्तो सालो दण्डस्त्रिरुच्छ्रयः । चतुःपञ्च द्विदण्डो वा सालानामुच्छ्रयं विदुः ॥ १० ॥

सालोपरि गरुडादिविधानम्

उपरिष्टाच्च सालानां सिंहो गरुड एव वा । कल्पनीयः प्रयत्नेन ध्वजयष्टिः समन्ततः ॥ ११ ॥

अर्धमण्डपविधिः

प्रासादाग्रे प्रकर्तव्यस्तदङ्गश्चार्धमण्डपः । चतुर्धा धामनि कृते [7]पादो वार्धमथापि वा ॥ १२ ॥
* त्रिपादो धामतुल्यं वा अर्धार्धं वा यथारुचि । द्विगुणं वा चतुर्वक्त्रं यद्वा [8]हर्म्यप्रमाणतः ॥ १३ ॥
एकहस्तं द्विहस्तं वा त्रिहस्तं वा [9]समायतम् । चतुर्हस्तं पञ्चहस्तं कारयेदर्धमण्डपम् ॥ १४ ॥
अन्तरालं तयोः कार्यं तालं यद्वा करायतम् । दण्डमध्यर्धमथवा द्विगुणं वा विनापि वा ॥ १५ ॥

---

1. श्री. अर्ध. 2. ऐ. ओ. मै. श्री. महामर्याद. 3. श्री एका स्तम्भावली. 4. श्री. उदीरितम्. 5. ऐ. ओ. स. म. कुम्भतः. 6. ऐ. ओ. वे. युक्तैः 7. स. म. पादोनार्धं.

* खलूरिकाप्रांकणादौ ग्रहो वा वनवेश्मनोः—
एष अर्धश्लोकः अत्र अधिकतया दृश्यते.

8. स. म. मै. म. श्री. हस्त. 9. ऐ. ओ. समानतः.

—॰ हीनेऽर्धमण्डपे निर्गमस्थलनिर्देशः ॰—

हीनेऽर्धमण्डपे धाम्नि पार्श्वाभ्यां निर्गमः स्मृतः । अग्रतः पृष्ठतश्चापि भवेतां पार्श्व[1]वर्त्मनी ॥ १६ ॥

—॰ सोपपीठस्य धाम्नः गोपुरचतुष्टयम् ॰—

चत्वारि गोपुराणि स्युर्धाम चेत्सोपपीठकम् । अग्रे तु मण्डपस्यार्धे विपुलो वृत्तमण्डपः ॥ १७ ॥
समुच्छ्रितं प्रतिसममधिकं वा यथेच्छया ।

—॰ वृत्तमण्डपार्धमण्डपयोरायाममानम् ॰—

एकद्वित्रिचतुःपञ्चहस्तौ वृत्तार्धमण्डपौ । अन्तरालं समुद्दिष्टं पार्श्वाभ्यां [2]निर्गमः स्मृतः ॥
सोपानपङ्क्तयः कार्याः पार्श्वयोरुभयोरपि ॥ १९ ॥
देवालयेषु युग्माः स्युः षडङ्गुलसमुच्छ्रयाः । तावद्विस्तारयुक्ताश्च [3]द्व्यङ्गुलं वोभयं भवेत् ॥ २० ॥

—॰ सोपानपार्श्वयोर्हस्तिरथाङ्गादिन्यासः ॰—

सोपानपार्श्वयोर्हस्तिहस्तं कुर्यात् स्थवीयसः । यद्वा रथाङ्गं कुर्वीत द्विरदं पार्श्ववाहिकम् ॥ २१ ॥

—॰ द्वारवातायनयोर्भित्तिबन्धनिषेधः ॰—

द्वारं वातायनं वापि भित्तिबन्धं न जातुचित् । कुलक्षयो[4] विनाशश्च व्याधिर्वा भित्तिबन्धने ॥ २२ ॥

—॰ वातायनान्तरालतालबन्धलाङ्गलादिनिरूपणम् ॰—

यद्वार्धमण्डपादर्धं त्रिपादं पादमेव वा । तत्तुल्यं वान्तरालं तु अन्तरा[5]लान्तरं भवेत् ॥ २३ ॥
विस्तारो ह्रासयेत्तस्य अन्तरालस्य पार्श्वयोः । हस्तं तालं तदर्धं वा ह्रासयेत्पार्श्वयोरपि ॥ २४ ॥
युग्मस्तम्भसमोपेतं [6]तालबन्धमथापि वा । लाङ्गलं वा प्रकुर्वीत उभयं वा विना भवेत् ॥ २५ ॥
चतुरश्रायतं वा स्याच्चतुर्द्वारं चतुर्दिशम् । वातायनं वा युग्मे तु न कुर्याद्भित्तिबन्धनम् ॥ २६ ॥
अन्तरावरणस्यान्तर्बहिर्नोभयतोऽपि वा ।

—॰ मण्डपायामविस्तारौ ॰—

आयामो मण्डपस्य स्यादयुग्मं तु प्रमाणतः ॥ २७ ॥
आषोडशान्तं युग्मे स्यादथायुग्मे त्रयोदश । मण्डपायाममुद्दिष्टं [7]हस्तैः कमलसम्भव ॥ २८ ॥
यद्वा मूलालयसममर्धमण्डपसंमितम् । तदर्धं पादमेवाथ यद्वाऽऽलयसमं भवेत् ॥ २९ ॥
अध्यर्धं द्विगुणं वाथ सपादं वाऽऽलयस्य च । मण्डपायाममुद्दिष्टं विस्तारे कमलासन ॥ ३० ॥

---

1. ऐ. ओ. सद्मनि. 2. मै. स. म. ऐ. ओ. धामनिर्गमः. 3. स. म. मै. श्री. द्विगुणं.
4. स. म. म. ऐ. ओ. ऽक्षिनाशश्च, 5. स. म, मै, लायतं. 6, स. म. ऐ. ओ. तल,
7, ऐ. ओ. श्री. विस्तारे कमलासन.

मूलालयसमं वापि तालहस्तं च वाधिकम् । उपानाद्यङ्गसंयुक्तं सर्वालङ्कारसंयुतम् ॥ ३१ ॥

नानानाटकसंयुक्तं अन्तस्तम्भविवर्जितम् । उत्सेधं मण्डपस्याहुरर्धमण्डप[1]संमितम् ॥ ३२ ॥

अधिकं वा तदुत्सेधं मण्डपस्य चतुर्मुख । यद्वा प्राग्याम्यसोपानं [2]पार्श्वे तन्निर्गमो भवेत् ॥ ३३ ॥

कल्पयेच्छिल्पशास्त्रज्ञो भित्तयः कोणभूमिषु । [3]स्थलबन्धं तदूर्ध्वे तु लाङ्गलं वा प्रकल्पयेत् ॥ ३४ ॥

कोणेषु गरुडसिंहयोर्न्यासविकल्पः

कोणेषु गरुडं कुर्यात् सिंहं वा कमलासन । सभां वा तत्प्रकुर्वीत यथावित्तानुसारतः ॥ ३५ ॥

प्राकारस्य चतुर्दिक्षु गोपुरचतुष्टयबन्धविकल्पः

[4]प्राकारस्य चतुर्दिक्षु गोपुराणि प्रकल्पयेत् । धामाग्रपृष्ठयोर्वा स्यात् अग्रेचैकं प्रकल्पयेत् ॥ ३६ ॥

द्वितलादिधामनिरूपणम्

तलैर्द्वादशभिर्युक्तमुत्तमं द्वितलादिषु । मूर्धेष्टकां [5]स्तूपिकां च पूर्ववत्कल्पयेत्क्रमात् ॥ ३७ ॥

दिङ्मूर्तयः पूर्ववत्स्युः पूर्ववद्गरुडादिकम् ।

मण्डपस्य उत्तमादिमानभेदभित्तिबन्धौ

प्राकारेषु च सर्वेषु मण्डपाः स्युः समन्ततः ॥ ३८ ॥

[6]षड्विंशतिधनुर्मानं मण्डपं चोत्तमं विदुः । अष्टादशधनुर्मानं मण्डपं मध्यमं विदुः ॥ ३९ ॥

अधमं द्वादशधनुर्मण्डपं [7]संप्रचक्षते । पूर्वोक्तहस्तसंख्यं वा कुर्यादास्थानमण्डपम् ॥ ४० ॥

उत्तमं दशभिर्हस्तैर्मध्यमं चाष्टहस्तकम् । षड्हस्तमधमं विद्यात् क्षुद्रं हस्त[8]त्रयीयुतम् ॥ ४१ ॥

दक्षिणोत्तरतः पृष्ठे भित्तिं तस्य प्रकल्पयेत् । स्तम्भाष्टकयुतं तत्र सोपानं परिकल्पयेत् ॥ ४२ ॥

दीर्घशालामधः कुर्या[9]द्यूपाच्छादनसंयुताम् । मण्डपाः प्राङ्मुखाः सर्वे सर्वावरणसंस्थिताः ॥ ४३ ॥

आस्थानमण्डपान् सर्वान् प्रकुर्यात्सर्वतोमुखान् । प्रासादारम्भवत्सर्वं भूमिसंशोधनादिकम् ॥ ४४ ॥

कृत्वा हस्तिनखं चैव मण्डपं चैव कल्पयेत् ।

मण्डपगर्भन्यासप्रकारः

गर्भन्यासस्तु कोणे स्यादग्नेर्मण्डपकर्मणि ॥ ४५ ॥

गोपुरे क्रियमाणे तु दक्षिणस्यां दिशि स्मृतः ।

---

1. श्री. सस्थितम्, 2. ऐ. ओ. स. म. म, प्राग्वान्तर्निर्गमो. 3. स. म. ऐ. ओ. तल, 4. ऐ. ओ, प्रासादस्य. 5. ऐ ओ. च सर्वत्र. 6. मै. स. म. ऐ. ओ. द्वाविंशति. 7. श्री. परिकल्पयेत्, 8. श्री. त्रयायतम्. 9. ऐ. ओ. श्री. द्यूपच्छेदन.

### द्वारस्य कवाटयुग्मादिविन्यासः

कवाटयुग्मं संस्थाप्य द्वारे द्वारे दृढं यथा ॥ ४६ ॥

लोहजं दारुजं वापि विचित्रं तुरगादिभिः । उत्तराङ्गं शिलादारु वा हरेच्छिल्पिभिः सह ॥ ४७ ॥

रथकृत्तक्षयित्वा तु सर्वेण क्षालयेद् द्रुतः । पुण्याहं वाचयित्वाथ मुहूर्ते शोभने गुरुः ॥ ४८ ॥

रथकृच्छिल्पिभिः सार्धं द्वारस्योपरि निक्षिपेत् । शाखाचतुष्कं कुर्वीत तथैव शिलयापि वा ॥४९॥

शाखाकवाटौ प्रक्षाल्य पञ्चोपनिषदा जलैः । नववस्त्रेण संवेष्ट्य धान्यराशिषु निक्षिपेत् ॥ ५० ॥

महाकुम्भार्चनं कुर्यात् पूर्ववच्छास्त्रचोदितम् । कृत्वा प्रभाते विमले मुहूर्ते शोभने गुरुः ॥ ५१ ॥

खाते लोहादि विन्यस्य कारयेच्छिल्पिना सह । पुण्याहं वाचयित्वा च पञ्चगव्यैर्विलेपयेत्॥५२॥

महाकुम्भजलैर्देवान् न्यसेत्कूर्चेन [1]तत्क्षणात् ॥

### कवाटोपरि कल्पनीयदेवताः

अधःशान्तिं दक्षिणतो वाग्देवीमुपरि श्रियम् ॥ ५३ ॥

रतिमुत्तरतः शाखास्वेवं चतसृषु क्रमात् । कवाटे दक्षिणे स्थाप्यो विश्वधृग्भूतनायकः ॥ ५४ ॥

कवाटे चोत्तरे स्थाप्यो विश्ववक्त्रः प्रतापवान्। अवतारांश्च तत्रस्थान् प्रोक्षयेत्स्वस्य विद्यया॥५५॥

वेदशास्त्रपुराणानि वेत्रेषु निवसन्ति च । नाराचेषु त्रयस्त्रिंशद्देवाः कीलेषु [2]चर्षयः ॥ ५६ ॥

कवाटपट्टिकायां च भूतनाथः प्रतिष्ठितः । कवाट[3]कन्दपट्टे स्यात् संस्थाप्यो विश्वभावनः ॥ ५७ ॥

एवं कुम्भजले [4]ध्यात्वा विन्यसेत्सर्वदेवताः । आचार्यदक्षिणां दद्यात् निष्कसंख्या तु पूर्ववत् ॥ ५८ ॥

### कवाटस्य सौवर्णताविधिकल्पः

सौवर्णो राजतस्ताम्रः कवाटो दारुजः स्मृतः । पूर्वः पूर्वः फलाय स्यात् भूयसे कल्पते नृणाम् ॥ ५९ ॥

कवाटं दारुजं स्वर्णैः रञ्जयन् पूज्यते सुरैः ।

### स्तम्भपोतिकादिविधानम्

स्तम्भान् पादशिलास्वेव रत्नन्यासादि [5]पूर्ववत् ॥ ६० ॥

न स्थाप्या ब्रह्मणः स्थाने तेषामुपरि पोतिकाः । कल्प्यास्ताः सूत्तरारोपो वाजनादिसमन्विताः ॥६१॥

तुलामारोपयेत्पश्चात् बन्धयेच्चेष्टकादिभिः । तलबन्धं ततः कुर्यात् ब्रह्मन् वित्तानुसारतः ॥ ६२ ॥

यूपाच्छादनकं वापि कुर्याच्छास्त्रानुसारतः ।

---

1. श्री. तत्क्षणे. 2. श्री चोर्वय. 3. स. म. कण्ठ. 4. ए. ओ. स्नात्वा.
5. श्री. पूर्वकम्.

## दिग्भेदेन चण्डादिद्वारपालनिरूपणम्

चण्डप्रचण्डौ कर्तव्यौ द्वारे गर्भगृहस्य तु ॥ ६३ ॥

दक्षिणोत्तरपार्श्वस्थौ मुनिवेषौ सहस्त्रियौ । दंष्ट्राकरालवदनौ भीमौ वा दण्डधारिणौ ॥ ६४ ॥

कान्तावियुक्तौ विकटौ करण्डमुकुटोज्वलौ । अर्धमण्डपकद्वारे शङ्खचक्रोत्तमाङ्गिनौ ॥ ६५ ॥

अन्तर्मण्डलसंज्ञस्य सालस्य द्वारपार्श्वयोः । जयश्च विजयश्चैव कर्तव्यौ तस्य गोपुरे ॥ ६६ ॥

एवमेवेष्यतेऽन्येषां चतुर्दिक्षु च गोपुरम् । अन्तर्हारस्य पूर्वस्यां द्वारि पद्मगदाधरौ ॥ ६७ ॥

खड्गशार्ङ्गधरौ द्वारि दक्षिणस्यां प्रकल्पयेत् । प्रतीच्यां [1]वज्रमुसलधारिणौ दिशि कल्पयेत् ॥६८॥

पाशाङ्कुशधरौ ब्रह्मन्नुत्तरस्यां दिशि स्थितौ । मध्यान्त [2]र्हारसालस्य प्राच्यादिषु यथाक्रमम् ॥ ६९ ॥

दिक्षु धातृविधातारौ ततो भद्रसुभद्रकौ । कृतान्तासुर[3]विध्वंसौ कुबेराक्षकुबेरकौ ॥ ७० ॥

प्राच्यादिषु तथा दिक्षु मर्यादासालगोपुरौ । दुर्जयप्रबलौ कार्यौ विश्वभावनपुष्करौ ॥ ७१ ॥

संभवप्रभवौ स्यातां सुशोभनसुभद्रकौ । जघन्यावरणद्वारे प्राच्यादौ कुमुदादयः ॥ ७२ ॥

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ ७३ ॥

अष्टौ द्वौ द्वौ प्रतिद्वारं कल्पनीयौ यथाविधि । विष्णुपारिषदाः सर्वे [4]सेनाभिः कोटिभिर्वृताः ॥ ७४ ॥

दण्डहस्ता विरूपाक्षाः करण्डमुकुटान्विताः । फणिकङ्कणमालाढ्याः भ्रुकुटीकुटिलेक्षणाः ॥ ७५ ॥

व्यत्यस्तहस्तचरणाः रक्षन्ति द्वारमाश्रिताः । चतुर्थावरणे कुर्यात् पाकस्थानं विचक्षणः ॥ ७६ ॥

प्रथमावरणे वाऽपि द्वितीयावरणेऽपि वा । तृतीयावरणे वाऽपि यथा देशानुकूलतः ॥ ७७ ॥

## खलूरिकास्थाननिर्देशः

इन्द्राग्निमध्ये वाऽऽग्नेये तस्य स्थानं विधीयते । खलूरिका समायुक्तं मध्ये चाङ्कणसंयुतम् ॥ ७८ ॥

चतुरश्रायते भागे प्राचीनस्याश्मकान्तकम् । युग्मैर्हस्तप्रमाणैश्च दीर्घचुल्येन वा [5]युतम् ॥ ७९ ॥

मध्येऽग्नियमयोः कुण्डं नित्यहोमाय कल्पयेत् ।

## अपूपपचनस्थानम्

अपूपपचनस्थानं मध्ये नैर्ऋतयाम्ययोः ॥ ८० ॥

## फलमरीच्यादिनिधानस्थानम्

[6]फलानि निक्षिपेन्मध्ये निर्ऋतेर्वरुणस्य च । द्वारं प्रकल्पयेत्प्रत्यक् मध्ये वायुजलेशयोः ॥ ८१ ॥

1. स. म. चक्र. 2. स. म. द्वार, 3. ए. ओ. म. विध्वस्तौ. 4. श्री. ए. ओ. सर्वे सेनादिभिर्वृताः. 5. ए. ओ. श्री. पुनः. 6. स. म. फलादि पचनं.

मरीच्यादि [1]निधानं स्याद्वायुसोमान्तरे भवेत्। सर्पिरादि [2]द्रवस्थानं मध्ये शर्वशची[3]शयोः॥८२॥

तण्डुलक्षालनकूपधूमनिर्गममार्गस्थाननिरूपणम्

क्षालनं तण्डुलादीनां कूपोऽन्तर्बहिरेव वा। धूमनिर्गममार्गाश्च युग्माः स्युः कुटिलाः सदा॥८३॥

मज्जनताम्बूलवस्त्रपुष्पनिवेशनप्रदेशाः, एकान्तिना भुक्तिस्थानं च

मज्जनाम्भोगृहं याम्ये ताम्बूली[4]धाम नैर्ऋते। वारुणे वाससां स्थानं मारुतेः पुष्पमण्डपः॥८४॥
सौम्ये चैकान्तिनां भुक्तिस्थानमीशे धनालयः।

धान्यसङ्ग्रहछत्रादिनिवेशदेशः

बहिरावरणे कुर्यादाग्नेये धान्यसङ्ग्रहम्॥ ८५॥
अवघातगृहं याम्ये गोशाला स्यादुमापतौ। तृतीयावरणे स्थानं छत्रादीनां विभावसौ॥ ८६॥
शिबिकादिस्थितिश्चैन्द्रे पानीयं वारुणे भवेत्। उत्सवे देवयजनं सोमेशानान्तरे भवेत्॥ ८७॥
इन्द्रेशानान्तरे वापि मध्ये वाग्निसुरेशयोः। यमाग्निमध्ये वा कुर्यादुत्सवे यागमण्डपम्॥ ८८॥
स्थान[5]मीशे सरस्वत्याः वाद्यस्थानं तु [6]वायवे।

स्थानसङ्कोचे रचनाप्रकारः

यथोक्तावरणाभावे विद्यमाने क्वचिद्भवेत्॥ ८९॥

कूपतटाकादिजलाशयविधिः

वारुणे वा भवेत्सौम्ये कूपं शार्वेऽपि वा भवेत्। यत्र वाऽपां सिराः सन्ति तत्र कूपं प्रकल्पयेत्॥९०॥
अष्टदिक्षु यथायोगं तटाकं कारयेन्महत्।

प्राकारस्य बहिर्दीर्धिका यत्यादीनां मठादिश्च

प्राकाराणां च सर्वेषां बहिष्ठा दीर्घिका भवेत्॥ ९१॥
शास्त्रश्रवण [7]युक्तानां वेदाध्ययनशालिनाम्। यतीनामितरेषां च मठः कार्यो बहिर्भवेत्॥ ९२॥
सदनानि च कार्याणि देवमाश्रित्य तिष्ठताम्।

उद्यानादिनिर्देशः

उद्यानं पुष्पवाटीं च परितो धाम कल्पयेत्॥ ९३॥

एकावरणपरिवारनिरूपणम्

एकावरणयुक्तस्य परिवारानिमान् शृणु। प्रधानबेराभिमुखः कल्पनीयो विहङ्गराट्॥ ९४॥

---

1. ऐ. ओ. निवास, 2. म. स. म. व्यवस्थानं. 3. श्री. पतेः. 4. स. म. मै. याम्य. 5. स. म. मग्नौ. 6. स. म. वासवे. 7. ऐ. ओ. स. म. श्री. सक्तानां.

नृत्तार्धमण्डपस्याग्रे तस्य धाम च कल्पयेत् । गोपुरस्योत्तरे साले मन्दिराभिमुखो रविः ॥ ९५ ॥
तस्यैव दक्षिणे साले सुधांशुं परिकल्पयेत् । वह्नौ कामो यमे ब्रह्मा नैर्ऋते स्याद्गजाननः ॥ ९६ ॥
वारुणे षण्मुखो दुर्गा वायौ सौम्ये धनाधिपः । ईशाने शङ्करस्तत्र क्षेत्रपालस्तथा भवेत् ॥ ९७ ॥
सोमेशयोरन्तराले विष्वक्सेनं प्रकल्पयेत् । अङ्कणे दक्षिणे सप्तमातरः श्रीस्तु नैर्ऋते ॥ ९८ ॥
इन्द्रादयो लोकपालाः पूज्याः स्वाशासु चाङ्कणे । गोपुरस्य भवेदन्तर्बहिर्वा बलिपीठकम् ॥ ९९ ॥
अन्तर्हाराह्वयोपेते विशेषो धाम्नि कथ्यते । सूर्याचन्द्रमसौ स्थाने संस्थाप्यौ पुरुषाच्युतौ ॥ १०० ॥
सूर्याचन्द्रमसौ कल्प्यौ द्वितीयावरणे तथा । हयग्रीवः [1]स्मरस्थाने स्थाने सङ्कर्षणो विधेः ॥ १०१ ॥
वराहो विघ्नराट्स्थाने प्रद्युम्नः शरजन्मनः । कात्यायन्यामनन्तः स्यादनिरुद्धो [2]नरासने ॥ १०२ ॥
नृकेसरी शाङ्करे स्यादङ्कणे पीठिकासु चेत् । इन्द्रादयःसमभ्यर्च्यास्तेषां स्थाने यथाक्रमम् ॥१०३॥
चक्री मुसलवान् शङ्खी खड्गी चैव गदाधरः । शार्ङ्गी पद्मी तथा वज्री पूज्या दिव्यास्त्रधारिणः ॥१०४॥

### परिवारदेवतानामवस्थानादि

प्रथमावरणे येषां स्थानेऽन्ये समुदीरिताः । ज्ञेया द्वितीये ते सर्वे परिवारा [3]यथोक्तया ॥ १०५ ॥
मध्यान्तर्हारसाले तु गोपुरोभयपार्श्वयोः । आदित्या द्वादशाराध्याः मध्ये मन्मथवेधसोः ॥१०६॥
वसवः पूजनीयाः स्युर्विधिर्विघ्नकृतेः पुरः । मध्ये पितृगणाः पूज्याः षडाननगणेशयोः । १०७ ॥
विश्वेदेवाः समाराध्याः मरुतो गुहदुर्गयोः । सप्तर्षयः पूजनीयाः मध्ये दुर्गाकुबेरयोः ॥ १०८ ॥
कुबेरेशानयोर्मध्ये रुद्रा एकादश स्मृताः । तत्रैव च क्षेत्रपालाः प्राङ्कणे कुमुदादयः ॥ १०९ ॥
इन्द्रादिपीठिकास्थाने [4]सभाज्याः कमलासन । मर्यादावरणे स्थाप्या अष्टादश गणेषु ये ॥ ११० ॥
उत्तमाः परिवारास्ते प्राङ्कणोर्वीतले पुनः । उपेन्द्रप्रमुखाः पूज्या दिक्षु प्राच्यादिषु क्रमात् ॥१११॥
उपेन्द्रः प्राकृतः पुण्यः पुष्करो विश्वभावनः । असुरघ्नः कृतान्तश्च भूतनाथोऽष्टमः स्मृतः ॥ ११२ ॥
मर्यादायां महत्यां तु मध्यमा ये गणेषु ते । परिवाराः प्रकर्तव्याः विश्वाद्या वासवादिषु ॥ ११३ ॥

### अङ्कणे समर्चनीया देवताः

अङ्कणेषु समर्च्या ये वक्ष्येताननुपूर्वशः । विश्वेशी [5]विश्वकृद्विश्वो विश्वात्मा विश्वलोचनः ॥ ११४॥
विश्वपादो विश्वभुजस्तथा वै विश्वकर्मकृत् ।

### आदित्याद्यष्टादश गणाः

अष्टादशगणान् वक्ष्ये तान्बुध्यस्व क्रमोदितान् ॥ ११५ ॥

---

1. स. म. सुर. 2. स, म, धनाधिपे, 3. श्री. यथोदिताः, 4. ए. ओ. सभाध्याः, 5. स, म, विश्वजित्.

आदित्या वसवो रुद्राः साध्याश्च मरुतस्तथा। विश्वेदेवाश्च पितरो मातरो गृहदेवताः ॥ ११६ ॥
अङ्गिराश्चाश्विनीदेवौ तथा स्त्रीदेवतागणाः। लोकेशा वास्तुदेवाश्च नक्षत्राणि च पार्षदाः ॥११७॥
तत्वानां पतयश्चैव उत्तमाः परिकीर्तिताः। सिद्धाश्च ऋषयो नागाः असुरा राक्षसा अपि॥११८॥
यक्षविद्याधराश्चैव सौरभेयाश्च गुह्यकाः। गन्धर्वाप्सरसश्चैव प्रजानां पतयस्तथा ॥ ११९ ॥
मर्त्याश्चैवाथ रोहिण्यो गणास्ते मध्यमाः स्मृताः। भूताः प्रेताः पिशाचाश्च कूश्माण्डाः प्रमथा अपि॥
स्कन्दो बालग्रहाश्चैव तैतलाश्चैव भैरवाः। किन्नराश्चैव वेताला अपस्मारास्तथैव च ॥ १२१ ॥
योगिन्यश्चैव डाकिन्यः शाकिन्यश्चैव [1]चारिकाः। मोहिन्यश्चैव सर्वेषु जघन्याः परिकीर्तिताः ॥
धाताऽर्यमा विधाता च मित्रश्च वरुणस्तथा। भगो विवस्वान् पूषा च सविता च रविस्तथा॥ १२३॥
त्वष्टा विष्णुरिति प्रोक्ताः द्वादशैतेऽदितेः सुताः। धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः ॥१२४॥
प्रत्यूषश्च प्रभासश्च वसवः शान्तवर्चसः। मृगव्याधश्च शर्वश्च निर्ऋतिर्ध्वज एकपात् ॥ १२५ ॥
अहिर्बुध्न्यः पिनाकी च [2]यवषश्च तथैव च। स्थाणुर्भवः कपाली च रुद्राश्चैकादश स्मृताः॥१२६॥
त्रिणेत्रा रुद्रसदृशाः जटामुकुटधारिणः। आवहो विवहश्चैव उद्वहः संवहस्तथा ॥ १२७ ॥
[3]निवहोऽनुवहश्चैव प्रवहश्च तथैव च। सप्तैते मरुतः प्रोक्ताः सप्त सप्ताद्रिभेदिनः ॥ १२८ ॥
कालो रविश्च रुद्रश्च अग्निरापस्तथैव च। पञ्चैते तु समाख्याताःगणाः साध्यसमाह्वयाः ॥ १२९॥
रुद्रोऽग्निः सविता विष्णुर्विश्वेदेवगणाः स्मृताः। कव्यबाडनलः सोमो यम एवार्यमा तथा ॥ १३०॥
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च। एते पितृगणाः प्रोक्ताः सप्तैते लोकपूजिताः॥१३१॥
[4]क्रतुर्दक्षः [5]कालकाख्यो वसुःसत्यः शुची रुचिः। पुरूरवार्ध्रुवश्चैव विश्वेदेवा इमे स्मृताः॥१३२॥
नासत्यदस्रमुभयमश्विनौ परिकीर्तितौ। अन्योन्यसदृशौ देवौ पीयूषकलशोद्भवौ ॥ १३३ ॥
रविसोमाङ्गारबुधगुरुशुक्रशनैश्चराः। राहुकेतू तथाश्लिष्टौ कीर्तितास्तु नवग्रहाः ॥ १३४ ॥
शक्राग्नियमरक्षांसि वरुणो वायुरेव च। सोम ईशान इत्यष्टौ लोकपालाः प्रकीर्तिताः ॥ १३५ ॥
ब्रह्मा मरीचिरत्रिश्च विवस्वान् पृथिवीश्वरः। [6]आपश्चैवापवत्सश्च [7]सविता च सवित्रकः॥ १३६॥
रुद्रो रुद्रजयश्चैव इन्द्र इन्द्रजयस्तथा। [8]ईशश्चैवाथ पर्जन्यो जयन्तश्च महेन्द्रकः ॥ १३७ ॥
भानुः [9]सत्यो भृगुश्चैव अन्तरिक्षश्च पूर्वतः। अग्निः पूषा कृशोभानु [10]बृहत्क्षत्रो यमस्तथा॥१३८॥
गन्धर्वी भृङ्गराजश्च मृगश्चैव तु [11]याम्यतः। पितृदौवारिकाश्चैव सुग्रीवः पुष्पदन्तकः॥ १३९ ॥

1, स, म. मै. शारिका., 2. ऐ. ओ. यवस. स. म. म. यवद. 3. श्री. निवह. सुवह. 4, ऐ, ओ, चतु. 5, स, म. म, कालकाम्यो, 6, श्री, स, म, ऐ, ओ, चित्राश्चैव, 7, श्री, सन्धिता, 8. श्री. ईशानश्चैव. 9. ऐ, ओ. शास्ता, 10. ऐ, ओ. म. श्री. गृहकर्त्ता. 11. ऐ, ओ. याम्यकः.

वरुणश्च भृशश्चापो[1]चक्षुमश्च मनोजवः । रोगनाथश्च मृत्यन्तो भल्लाटः सोम एव च ॥ १४० ॥
अदितिर्वास्तुनाथश्च वासुदेवगणाः स्मृताः । अग्निर्वायुः प्रजासक्तश्चत्वारोऽङ्गिरसः स्मृताः॥१४१॥
तिष्ठन्ति मुनिरूपेण देवरूपेण च द्विधा । लक्ष्मीः सरस्वती [2]विघ्ना तिस्रस्तु गृहदेवताः ॥ १४२॥
इत्येतेऽष्टादश प्रोक्ताः गणा मध्योत्तमाधमाः । उत्तमा मध्यमाश्चापि परिवारेषु संमताः॥१४३॥
रुद्रालयादिष्वधमाः परिवाराः प्रकीर्तिताः ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे *परिवारादि देवताकल्पनं नाम दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ।

### प्रतिमाद्रव्यादिविधिः

श्रीभगवान्—

अतः परं [3]प्रतिकृतेर्द्रव्यस्य विधिरुच्यते । [4]यन्मयं प्रतिमाद्रव्यं तदनेकं प्रचक्षते ॥ १ ॥

### रत्नादिषड्द्रव्यनिर्देशः

रत्नं लोहं शिला मृच्च दारु स्फटिक एव च । षड् द्रव्याणि प्रकृतयो यन्मय्यः प्रतिमाः स्मृताः॥
माणिक्य[5]प्रमुखै रत्नैरर्चामवयवैर्युताम् । [6]विदध्यादर्धचित्रं वा केवलं वा समर्चयेत् ॥ ३ ॥

### उक्तद्रव्यफलनिर्देशः

निर्दोषा रत्नजाः सर्वाः सर्वकामफलप्रदाः । सुवर्णं रजतं ताम्रं त्रिविधं लोहमिष्यते ॥ ४ ॥
हिरण्मयी प्रतिकृतिः सर्वसंपत्करी भवेत् । वित्तं यशश्च विजयो विज्ञानं राजतीफलम् ॥ ५ ॥
[7]बुद्धिः शान्तिश्च सौभाग्यं औदुम्बर्यार्चया भवेत् ।

### शिलायाश्चातुर्विध्यम्

शिला चतुर्विधा ब्रह्मन् वर्णभेदैः सितादिभिः ॥ ६ ॥
शुभ्रा शिला ब्राह्मणस्य क्षत्रियस्य तु पाटला । वैश्यस्य पीता शूद्रस्य कृष्णा मुख्या यथोदिता॥७॥
ब्राह्मणस्य चतस्रः स्युः तिस्रो राज्ञो विशो द्वयी । एकैव स्याच्चतुर्थस्य गौणोऽयं विधि[8]रीरितः ॥८॥

### उत्तमा शिला

शङ्खचक्रगदापद्मशक्ति[9]चन्दनमालिकाः । सिंहमातङ्गसारङ्गवराहकुशकुण्डिका ॥ ९ ॥

---

1. श्री. यक्ष्मा चैव. 2. श्री. दुर्गा. * आवरणदेवताकल्पनं नाम. 3. श्री. म. प्रवक्ष्यामि द्रव्याणां विधिमुत्तमम्. 4. श्री. म. यन्मयी. 5. म. प्रतिमै, 6. श्री. स. चित्रं वाप्यर्धचित्रं. 7. श्री. म. सिद्धिः. 8. म. रीदृशः. 9. म. स्यन्दन—श्री. बन्धन.

श्रीवत्सचामरच्छत्रध्वजमत्स्यविहङ्गमाः । शिलासु यत्र दृश्यन्ते तिलतण्डुलवालुकाः ॥ १० ॥
ताः शुभा यजमानस्य शुभदाः पार्थिवस्य च ।

शिलादार्वादीनां गर्भदोषपरीक्षोपायः

गर्भवत्यः शिला[1]वर्ज्याः गर्भा[2]ह्यन्तरवस्थिताः ॥ ११ ॥
यथोपलब्धुं शक्यन्ते तं प्रकारमिमं शृणु । नवनीतं माहिषजं शृङ्गं मेषस्य चूर्णितम् ॥ १२ ॥
चूर्णं च कुरुविन्दस्य संपेष्य पयसा गवाम् । लिम्पेच्छिलां तथा दारु गर्भव्यक्तिस्ततो भवेत् ॥ १३ ॥
वीथिका यदि दृश्यन्ते मण्डलावर्तकानि च । ध्वनिश्च शिथिलो यासु स्पर्शेचौष्ण्यमथापि वा ॥ १४ ॥
तासु गर्भाः स्फुटं सन्ति यत्नेनोत्पाटयेत्तु ताः । पाटले मण्डले पांसून् पाटलान् श्वेत[3]पङ्कजे ॥ १५ ॥
श्वेतपांसून् स्थितावन्तर्गर्भरूपेण संस्थितान् । निर्दिशेत्कपिले वर्णे स्निग्धे च कमठं स्थितम् ॥ १६ ॥
गौलीं कपोते माञ्जिष्ठे वर्णे लोहितदर्दुरम् । शुक्लं [4]डिण्डीरवर्णे तु रक्तपीते तु कच्छपम् ॥ १७ ॥
कुसुम्भपीतवर्णे तु पीतं बर्षाभुवं स्थितम् । शुक्लहेमनिभे वर्णे गर्भे क्षुद्रविहङ्गमम् ॥ १८ ॥
कालायससमे वर्णे [5]गोधामन्तरवस्थिताम् । गुडवर्णे तु पाषाणखद्योतं मधुसन्निभे ॥ १९ ॥
*सारङ्गसदृशे वर्णे वृश्चिकं खड्गसन्निभे । सलीलं शलभं नीलेरूक्षे फेनकमेव च ॥ २० ॥
मूषिकं कपिले कृष्णे कृष्णाहिं शष्पसन्निभे । मत्स्यमेवंविधं गर्भं मण्डले वर्णभेदतः ॥ २१ ॥
बुधो निश्चिनुयात् सर्वमुद्धरेच्च प्रयत्नतः । गर्भवद्दारुशिलया प्रतिमां कुरुते यदि ॥ २२ ॥
अज्ञानाद्वाथ लोभाद्वा यजमानस्त्वरान्वितः । समूल[6]घातं हन्याच्च स कुलान्यात्मनामज ॥ २३ ॥
राजा च राष्ट्रमचिरात् स्थापकश्च विनश्यति । [7]गर्भागारे कृते पश्चात् जुहुयाच्छान्तये गुरुः ॥२४॥
भोजयेद्दक्षिणां दद्याद्ब्राह्मणेभ्यः स्वशक्तितः ।

स्त्रीपुन्नपुंसकशिलानां प्रतिमादौ विनियोगः

बिम्बं शीतलया कुर्याच्छिलया यदि सादरम् ॥ २५ ॥
देवस्य सन्निधिः साक्षात् संपच्च वरदो हरिः । स्त्रीपुंनपुंसकं चेति शैलं त्रिविधमुच्यते ॥ २६ ॥
कांस्यघण्टाध्वनिप्रख्यश्छेदने जायते ध्वनिः । शिरःप्रदेशे मध्ये तु कांस्यध्वनिसमो भवेत् ॥ २७ ॥
मूले तालध्वनिसमो यत्र सा स्याच्छिला पुमान् । न्यूनस्तस्माद् ध्वनिः किञ्चि[8]च्छिद्रतो यत्र साधम ॥

1. श्री. म. ग्राह्याः, 2. श्री. म. ञ्चा. 3. म. मण्डले. 4 म. पाण्डर. 5. म. गोना.
* एष. अर्धश्लोकः श्री. ग्रन्थे अधिकतया दृश्यते—
ताम्रमौदुम्बरं शूल्प पवित्रं ब्रह्म वर्धनम् ।
6. श्री. म. घातक हन्यात् कुलमात्मानमात्मनः. 7. श्री. म. गर्भद्वरे. 8. श्री. म. च्छेदिते.

[1]शिला नादविहीना तु नपुंसकमुदाहृतम्। बिम्बं पुंशिलया [2]कार्यं पीठं[3] स्त्रीशिलया भवेत् ॥ २९॥
रत्नन्यासस्तु कर्तव्यो [4]न शिलायामिति क्रमात्। देवीनां च श्रियादीनां निर्माणे स्त्रीशिला [5]वरा ॥ ३०॥
पुंशिला पादपीठे स्याद्रत्नन्यासो नपुंसके। सौम्या शिला शीतला स्याद्वैष्णवी सा महाफला॥३१॥
उष्णाग्नेयी शिला रौद्री सा रोगस्यास्पदा भवेत्। सौम्या ज्ञेयाऽभयात्मा तु ब्राह्मी सृष्टिकरी भवेत्॥३२॥
शीतला घर्मकाले या महोष्णा जलदागमे। एकवर्णा शिला शुद्धा सा भवेत्प्रतिमाविधौ ॥ ३३ ॥
सङ्कीर्णानेकवर्णा तु सा शिला रोगदा सदा।

### शिलाग्रहणस्थानफलादीनि

पर्वतेषु प्रसिद्धेषु गृह्णीयात्प्रतिमाशिलाम् ॥ ३४ ॥
भूगता वा शिला शस्ता निन्दिता न कदाचन। या पुष्पवनसङ्कीर्णा जलाशयसमावृता ॥ ३५ ॥
सा भूमिर्वारुणी ज्ञेया [6]तत्रत्याः कामदाः शिलाः। तोयमुत्तरतो यस्याः क्षेत्रं दक्षिणतो महत् ॥ ३६ ॥
प्रत्यक् च क्षीरिणो वृक्षाः सा माहेन्द्री क्षमा मता। तत्रत्या पुष्टिदा नित्यं शिला बहुमता ततः ॥ ३७॥
पूर्वदक्षिणतो यस्याः काश्मर्यः खदिरादयः। झल्लिका टिट्टिभा गृध्रवराहश्वापदादयः ॥ ३८ ॥
तोयमन्तर्गतं स्वल्पं यत्राग्नेयी भवेदियम्। शिला तत्रोद्भवा स्वल्पविभवा तदसंमता ॥ ३९ ॥
विभीतकादयो वृक्षा मृगा हिंस्राश्च सन्ततम्। यत्र त्यक्तोदकतृणा कण्टकद्रुमसंवृता ॥ ४० ॥
या च सा वायवी भूमिस्तस्यां शून्यप्रदा शिला।

### वर्ज्यशिलास्थानानि

नदीतटे ह्रदतटे भूतिभूमौ चतुष्पथे ॥ ४१ ॥
ग्रामे श्मशाने वल्मीके लवणोदकपीडिते। अमेध्यभूमौ शबरचण्डालादिनिषेविते ॥ ४२ ॥
शर्करोत्करसंबाधे निस्तृणे जलवर्जिते। देवालयसमीपे च तप्ते वातातपाग्निभिः ॥ ४३ ।
देशे वर्ज्याः शिलाः सर्वा गृहीताश्चेदनर्थदाः।

### उपादेयशिलाप्रदेशौ

पुण्यक्षेत्रे शुभे देशे ब्रह्मवृक्षनिरन्तरे ॥ ४४ ॥
कुशकाशोदकयुते मृगैः कृष्णै[7]र्निषेविते। पद्मोत्पलसमाकीर्णे व्रीहिक्षेत्रनिरन्तरे ॥ ४५ ॥
हिन्तालपूगपुन्नागनालिकेरनिरन्तरे। तपस्विजनसंबाधे देशे ग्राह्या शिला भवेत् ॥ ४६ ॥

---

1. म. शिलानां ध्वनिहीने. 2 म. कुर्यात्. 3, म, योषिच्छिलया, 4. म. नपुसकशिलोपरि, 5. म. परम्, 6. श्री. म. तत्रस्थाः. 7. म. निरन्तरै.

वर्ज्यावर्ज्यं विदित्वैवं गुणदोषौ निरूप्य च। देशभेदाँश्च भूमेदान् ज्ञात्वा लिङ्गभिदास्तथा॥४७॥
सितादिवर्णभेदाँश्च गृह्णीयाच्छुभदां शिलाम्।

## शिलाग्रहणसमयः

पुण्यर्क्षतिथिवारेषु यजमानानुकूलिषु ॥ ४८ ॥
शकुनादिनिमित्तानामानुकूल्येन चान्वितः। यजमानो गुरुश्चैव श्रद्धया परयान्वितः ॥ ४९ ॥
रथकारेण सहितः स्थपतीनां गणैः सह। ब्राह्मणान् भोजयित्वादौ तैश्च स्वस्त्यादि वाचितः॥५०॥
शिलासंग्रहणे देशे कारयेन्महतीं प्रपाम्। कृत्वाङ्कुरार्पणं तत्र ब्रह्मचारी हविष्यभुक् ॥ ५१ ॥
आचार्यो यजमानेन सार्धं तत्र वसेच्छुचिः। शालिभारं क्षिपेत्तस्मिन् प्रपामध्ये सवेदिके॥ ५२॥
तस्मिन् न्यसेन्महाकुम्भं सूत्रवस्त्रादिवेष्टितम्। न्यस्तकूर्चं प्रतिच्छन्नमश्वत्थनवपल्लवैः ॥ ५३ ॥
विन्यस्त [1]रत्नलोहाढ्यं विद्यया परमेष्ठिनः। तस्याष्टदिक्षु च न्यस्येत्कुम्भान् सूत्रेण वेष्टितान्॥५४॥
महाकुम्भस्य तस्यैव [2]पार्श्वे न्यस्येच्च वर्धनीम्। अस्त्रमन्त्रेण [3]संसिद्धान् सिद्धार्थान् दिक्षु पातयेत्॥ ५५॥
पुण्याहं वाचयित्वा तु चक्रमुद्रां प्रदर्शयेत्। महामुद्रां प्रदर्श्याथ प्रणम्याञ्जलिमुद्रया ॥ ५६ ॥
आवाहयेत्ततो देवं मूर्तिमन्त्रेण सर्वगम्। महाकुम्भे प्रतिष्ठाप्य पूजयेद्देशिकः क्रमात् ॥ ५७ ॥
वर्धन्या मन्त्रराजानं कुम्भेष्वष्टसु पूजयेत्। विष्ण्वादिमूर्तीस्तदनु परमान्नं निवेदयेत् ॥ ५८ ॥
होमं कुर्याच्चतुर्दिक्षु कुण्डे वा स्थण्डिलेऽपि वा। पालाशसमिधः पुष्पं फलमाज्यं सपल्लवम्॥५९॥
जुहुयान्मूलमन्त्रेण पृथगष्टोत्तरं शतम्। चरुणा च नृसूक्तेन पृथक्कुण्डचतुष्टये ॥ ६० ॥
प्राचीनकुण्डे जुहुयात् सर्पिषा वनदेवताः। पर्वतान् गण्डशैलाँश्च तत्र शृङ्गाणि निर्झरान्॥ ६१ ॥
समुद्राँश्च तथा वृक्षानोषधीश्च वनस्पतीन्। जरायुजानण्डजाँश्च स्वेदजानुद्भिजाँस्तथा ॥ ६२ ॥
तथा सर्वाणि भूतानि मन्त्रैस्तद्देवतापरैः। स्वाहान्तैस्तैर्व्याहृतिभिः पूर्णाहुत्यन्तमब्जज ॥ ६३ ॥
पललं रजनीचूर्णं लाजापूपाः करम्भिणः। चरवस्तैर्बलिं द्रव्यैर्भूतेभ्यो निक्षिपेद्गुरुः ॥ ६४ ॥
होतव्यं स्वप्नपतये सर्पिषाऽष्टोत्तरं शतम्। वाद्यैस्तथा ब्रह्मघोषैःसर्वतो घोषयेन्निशि ॥ ६५ ॥
उपोष्य दर्भशय्यायां शुचिर्नियतमानसः। जपन्नष्टोत्तरशतं स्वप्नाधिपतिमात्मवान् ॥ ६६ ॥
स्वपेत्स्वप्ने ततः शैलं यदि पश्येत्समुज्वलम्। प्रातरेव शिला ग्राह्या शान्तिं कुर्याददर्शने ॥ ६७॥
दुर्दर्शने वा पूर्वोक्तदुर्निमित्तोदये तथा। शिलां मुहूर्ते संपश्येच्छोभने देशिकोत्तमः ॥ ६८ ॥
यक्षाः पिशाचा नागाद्या यत्र तिष्ठन्ति नित्यशः। सर्वे ते ह्यपगच्छन्तु सन्निधत्तां सदा हरिः॥ ६९ ॥
इत्युक्त्वा मन्त्रसंसिद्धान् सिद्धार्थांस्तत्र निक्षिपेत्। बलिं दद्याच्च भूतेभ्यः प्रत्याशं सर्वमन्त्रतः॥ ७०॥

---

1. म, लोहरत्नाढ्य. 2. श्री. दक्षिणे वर्धनी न्यसेत्. 3. म. संजप्तान्.

पुण्याहं वाचयित्वा च पौरुषेण शिलाः स्पृशेत् । मूलमन्त्रेण दत्वार्घ्यं जपेदष्टोत्तरं शतम् ॥ ७१ ॥
प्रासादस्याऽनुरूपेण पातयेत्सूत्रमञ्जसा । शिलांस्थपतयश्छिन्द्युः रथकारस्य शासनात् ॥ ७२ ॥

सिरावैषम्येण वर्ज्यावर्ज्यशिलानिरूपणम्

शान्तिदा दक्षिणशिराः प्राक्छिरा जयदायिनी । श्रीकरी पश्चिमशिराः [1]पुष्टिं दद्यादुदक्छिरा ॥ ७३ ॥
वर्जयेत्कोणशिरसं यदि कुर्यात्कुलक्षयम् ।

शिलाऽऽनयननियमः

यस्यां दिशि मुखं धाम्नः तस्याः प्रतिकृतेः शिरः ॥ ७४ ॥
व्यत्यासे यजमानस्य राज्ञो राष्ट्रस्य वास्तुतः । आलयस्य च सर्वेषामचिरात्कल्पते विपत् ॥ ७५ ॥
मूलभागः शिलानांचेत् उपरिष्टाद्भवेत्तथा । अधस्ताचेच्छिरो [2]भागो विपत्स्याद्राजराष्ट्रयोः ॥७६॥
महाकुम्भस्थतोयेन स्नापयेदुद्धृतां शिलाम् । विष्ण्वादिकुम्भतोयैश्च पौरुषं सूक्तमुच्चरन् ॥ ७७ ॥
परिषिञ्चेच्छिलां भूयो वर्धनीस्थेन वारिणा ।

श्रियादिदेवीप्रतिमार्हशिलाविधिः

देवीनां बिम्ब[3]शुध्यर्थं पृथगेवाधिवासयेत् ॥ ७८ ॥
मध्यकुम्भेऽर्चयेद्देवीं श्रियं त्रैलोक्यमातरम् । अष्टकुम्भेषु संपूज्य देव्यश्चाष्टौ यथाक्रमम् ॥ ७९ ॥
होमादि पूर्ववत्कृत्वा बिम्बार्था स्त्रीशिला भवेत् । अस्त्रिया शिलया देव्यो विहिताश्चेत्प्रमादतः ॥ ८० ॥
लोभेन महता [4]युक्ता हन्युः स्वविषयाः प्रजाः । तस्मिन्नेव क्षणे ग्राह्याः परिवारशिलाः शुभाः ॥ ८१ ॥
शिलासङ्ग्रहणं [5]कुर्यात्तेषां मन्त्रैर्यथाक्रमम् । शिलां गृहीत्वा तां सम्यक् आरोप्य शकटादिषु ॥ ८२ ॥
नीत्वा धाम्नि स्थपतयो रथकारमतानुगाः । कुर्युरर्चां यथाशास्त्रं चोदितैर्लक्षणैर्युताम् ॥ ८३ ॥
शिलासङ्ग्रहणे कर्म यदुक्तं बहिरालयात् । तत्सर्वमथशा कुर्यादङ्कुरादिकमालये ॥ ८४ ॥

अन्यार्थं गृहीतमुक्तायाः पुनरधिवासेन ग्रहणानुज्ञा

शिलां [6]गृहीत्वा विधिवत्त्यक्तां कर्तुमशक्तितः । अन्यार्थमपि तां विद्धि शुद्धां भूयोऽधिवासनात् ॥ ८५ ॥

दारुसङ्ग्रहणकालः

[7]कार्तिकाद्यष्टमासेषु प्रशस्तो दारुसङ्ग्रहः । प्रशस्तं सर्वमासेषु शिलासङ्ग्रहणं मतम् ॥ ८६ ॥

उपादेयदारुनिर्देशः

चन्दनश्चागुरुश्चैव काश्मर्यो हरिचन्दनम् । केसरः खदिरश्चैव कुरवश्चासनस्तथा ॥ ८७ ॥

---

1. म. पुष्टिदा स्यादु. 2. श्री. भागे. 3. श्री. सिध्यर्थं. 4. श्री. युक्तो हन्यात्.
5. म. श्री. तेषां कार्यं. 6. म. आहृत्य. 7. श्री. कृत्तिका.

मधुको देवदारुश्च जातिर्बिल्वः शमी तथा । शाकश्च पनसश्चैव कदम्बस्तिलकस्तथा ॥ ८८ ॥
नमेरुः फलिनी चैव सुरभिश्चम्पकस्तथा । शिंशुपा क्षीरिका सालो बीजकः कुरुविन्दकः ॥ ८९ ॥
तिनिशश्चन्दनश्चूतस्तमालः सरलोऽर्जुनः । कुटजः करकेली च सप्तपर्णो मधुष्ठिलः ॥ ९० ॥
वरणो [1]निचुलश्चैव पुन्नागः खदिरस्तथा । राजवृक्षश्च इत्येते प्रतिमार्थमुदाहृताः ॥ ९१ ॥
सारवन्तो घनोपेताः सर्वदोषविवर्जिताः । एतैः कार्या प्रतिकृतिर्वर्जितैर्न कदाचन ॥ ९२ ॥

वर्जनीयानि दारूणि

वर्जनीयानपि तरूनभिधास्यामि तान् शृणु । स्वयं शुष्काश्च दग्धाश्च स्वयं भग्ना हतत्वचः ॥ ९३ ॥
वक्रा घुणक्षताश्चैव कोटराः पक्षिसेविताः । चण्डालाद्यधमैः शश्वत्सेविताः प्रतिलोमजैः ॥ ९४ ॥
निवासवृक्षाश्चैत्यस्थाः देवताधिष्ठितास्तथा । श्मशानस्थाश्च मार्गस्था देवालयसमीपगाः ॥ ९५ ॥
कूपस्थाश्च तटाकस्था विकृताश्चैव [2]वर्जिताः । वर्जितैस्तरुभिः कुर्यात्प्रतिमां चेत्प्रमादतः ॥ ९६ ॥
कर्ता कारयिता चोभौ सान्ववायौ विनश्यतः ।

दारुसङ्ग्रहणेऽपि शिलाग्रहणवदेव विधिः

दारुसङ्ग्रहणे देशे पूर्वव[3]च्चाधिवासनम् ॥ ९७ ॥
शिलाग्रहणवद्धोमः सर्वः कार्यो यथाविधि । अनोकहानामङ्गानि प्रवालादीनि पूर्ववत् ॥ ९८ ॥
जुहुयादग्निकुण्डे च प्राचीने देशिकोत्तमः । प्रक्षालयेद्वृक्षमूलं वाससा [4]तं प्रकोणकम् ॥ ९९ ॥
आच्छादयेत्सदर्भेण मूलमन्त्रं समुच्चरन् । मूर्तिभिश्च [5]द्वादशभिः मत्स्यादिभिरनुक्रमात् ॥ १०० ॥

वृक्षोपस्थानम्

हुत्वा व्याहृतिभिः पश्चादुपतिष्ठेत भूरुहम् । कर्मणा पूर्ववृत्तेन स्थावराकारमाश्रितम् ॥ १०१ ॥
वृणोमि विष्णो[6]र्बिम्बार्थं सर्वसंपत्करं तव । स्थावरत्वादितो गच्छ दिव्यं रूपमनुत्तमम् ॥ १०२ ॥
भुंक्ष्व भोगाँश्च विपुलान् वासुदेवप्रसादतः । हिनस्मि नाहं वृक्ष त्वां किन्तु मुञ्चामि जन्मतः ॥ १०३ ॥
इत्युपस्थाय मन्त्रेण रक्षासूत्रेण वेष्टयेत् । अनुक्तमन्यत्कर्तव्यं शिलाग्रहणवन्निशि ॥ १०४ ॥

वृक्षच्छेदने कालदिगादिनिर्देशः

प्रभाते देशिकः स्नात्वा मुहूर्ते शोभने शुचिः । छिन्द्याद्वृक्षं कुठारेण प्राङ्मुखः पुरुषात्मना ॥ १०५ ॥
रथकारस्ततो वृक्षं छेदयेद् गुर्वनुज्ञया ।

---

1. श्री. मणिलाश्चैव. 2. श्री. वर्जयेत्. 3. श्री. च्चाधिवासयेत्. 4. श्री. तन्तुवेष्टनम्.
5. म. द्वादशविधैः. 6. श्री. पूजार्थं.

—छिन्नवृक्षपतने दिग्भेदेन फलभेदः—

प्राच्यामुदीच्यां पतितस्तरुरभ्युदयावहः[1] ॥ १०६ ॥

—प्रकाण्डेन शाखया बिम्बनिर्माणं तत्संस्कारश्च—

कुर्याद्बिम्बे प्रकाण्डेन शाखया चानुरूपया । कुम्भोदकेन तं सिञ्चेद्ध्यात्वा तत्र स्थितं हरिम् ॥ १०७ ॥

मूलमन्त्रेण परितः सिञ्चेत्करकवारिणा । गुरवे दक्षिणां दद्यात्पूर्ववत्कमलासन ॥ १०८ ॥

—रथकारस्य बिम्बनिर्माणानुज्ञा—

देवालये द्रुमं नीत्वा रथकारेण कारयेत् । बिम्बमत्यद्भुताकारं धाममानानुसारतः ॥ १०९ ॥

आलये चाधिवासादि स्थापयित्वा द्रुमं भुवि । कुर्याद्बहिर्वने यद्वत् सर्वं [2]तद्वद्यथाविधि ॥ ११० ॥

—असंस्कृततरुणा बिम्बनिर्माणे दोषः—

असंस्कृतेन तरुणा यथोक्तविधिना यदि । कुर्यात्प्रतिकृतिं मोहात्तदनर्थाय केवलम् ॥ १११ ॥

तस्माद्यथोक्ततरुणा कृतमभ्युदयावहम् ॥ ११२ ॥

**इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे शिलादारुसङ्ग्रहविधानं नाम एकादशोऽध्यायः ॥**

---

## द्वादशोऽध्यायः ।

श्रीभगवान्—

—मूलबेरप्रमाणादिविधि.—

[3]अथैतत्संप्रवक्ष्यामि [4]मूलबेरसमुच्छ्रयम् । गर्भविस्तारमानं वा द्वारदैर्घ्यमथाऽपि वा ॥ १ ॥

प्रासादपादमानं वा हस्तमानमथापि वा । यजमानप्रमाणं वा स्तम्भमानमथापि वा ॥ २ ॥

कुर्याद् ध्रुवप्रतिकृतिं ग्रामादेरनुकूलिकाम् ।

—प्रतिमाया मानं उत्तमादिभेदाश्च—

प्रतिमा गर्भविस्तारतुल्या श्रेष्ठा चतुर्मुख ॥ ३ ॥

नवभागैकहीना तु प्रतिमा मध्यमा भवेत् । पञ्चभागैकहीना तु जघन्या परिकीर्तिता ॥ ४ ॥

सप्तधा गर्भविस्तारं विभज्य द्वौ विवर्जयेत् । शिष्टभागसमुच्छ्राया श्रेष्ठा स्यादथवाब्जज ॥ ५ ॥

मध्यमा पञ्चसत्र्यंशैस्त्रिभिर्द्वाभ्यां कनीयसी । द्वाराध्यर्धसमुच्छ्राया श्रेष्ठा पादाधिका पुनः । ६ ॥

---

1. म. पतितं दारुमाहुर्जयावहम्. 2. म. क्रियाविधिम्. 3. श्री. म. आथ तत्. 4. श्री. म. ध्रुवबेर.

मध्यमा द्वारमात्रा तु कनिष्ठा [1]मध्यमा भवेत्। द्वारं षोडशधा कृत्वा न्यूनैकद्वित्रिभिः क्रमात् ॥७॥
श्रेष्ठा मध्या कनिष्ठा स्यादित्थं पादादिषु क्रमात्। उत्तमा पञ्चभिर्हस्तैः त्रिभिरेकेन [2]चेतरे ॥ ८ ॥
स्थितस्य कौतुकस्यायमुच्छ्रायः समुदीरितः।

आसीनमूर्तिमानम्

गर्भगेहस्य विस्तारं त्रिधा भङ्क्त्वा द्वयी भवेत् ॥ ९ ॥
उत्तमा पञ्चधा त्र्यंशैर्मध्यमार्धकनीयसी। आसीना चाथवा श्रेष्ठा गर्भविस्तारसंमिता ॥ १० ॥
नवभागैकहीना तु मध्यमा पञ्चधा कृते। एकोना चरमा प्रोक्ता सप्तधा षड्भिरुत्तमा ॥ ११ ॥
सप्तधैव त्रिभिर्मध्या त्रिधा द्वाभ्यां कनीयसी। द्वारादिषु स्थितस्यैव समासीनोन्नति[3]क्रमात् ॥ १२ ॥
हस्तैः सप्तभिरासीना श्रेष्ठा मध्या तु पञ्चभिः।

शयनमूर्तिमानम्

त्रिभिर्जघन्या वक्ष्यामि शयनस्यापि चोन्नतिम् ॥ १३ ॥
आयामं गर्भगेहस्य भङ्क्त्वा षोडशधा पुनः। चतुरो मूर्ध्नि संत्यज्य भागौ द्वौ पादतस्तथा ॥ १४ ॥
अवशिष्टदशांशेन शयितस्योत्तमोन्नतिः। आयाममष्टधा कृत्वा हित्वा द्वौ मूर्ध्नि पार्श्वतः ॥ १५ ॥
एकमंशं चरणतः शिष्टांशैनैव मध्यमा। आयामं सप्तधा कृत्वा मूर्ध्नि द्वावेकमङ्घ्रितः ॥ १६ ॥
हित्वा कनिष्ठा शेषेण शयानस्याकृतिर्भवेत्। विस्तारे वा चतुर्धा तु कृते तेष्वेकमुद्धरेत् ॥ १७ ॥
शिष्टेन द्विगुणेन स्याच्छयानस्योत्तमोन्नतिः। कृत्वैवं पञ्चभागेन स्याच्छयानस्य मध्यमा ॥ १८ ॥
गर्भविस्तारमानेन शयानस्याधमा भवेत्। द्विगुणा द्वारमानेन शयानस्योत्तमोन्नतिः ॥ १९ ॥
अध्यर्धमानैर्मध्या स्यात्सपादा चरमा भवेत्। उत्तमादिक्रमो यादृग्द्वारमाश्रित्य कीर्तितः ॥ २० ॥
ध्रुवबेरस्य यादृक् स्यात्तम्भा[4]द्याश्रयणेऽपि च। सप्तभिः पञ्चभिर्हस्तैस्त्रिभिःश्रेष्ठा [5]यथाक्रमम् ॥२१॥
यानेऽप्यासनवन्मानं विश्वरूपं स्थितं यथा। गर्भगेहं त्रिधा कृत्वा द्विभागं चोत्तमं भवेत् ॥ २२ ॥
पञ्चधा तु कृते तस्मिन् त्रिभागो मध्यमो भवेत्। गर्भार्धमधमं धाम्ना सर्वसाधारणो विधिः ॥ २३ ॥

यजमानानुगुण्येन मूर्तिमानम्

यजमानाद्यनुगुणो विधिरद्याभिधीयते। लब्धांशमङ्गुलीकुर्यात्प्रासादस्य चतुर्मुख ॥ २४ ॥

अङ्गुलिविधिः

तत्राङ्गुलिविधिं वक्ष्ये [6]यथा तदवधारय। पञ्चधाङ्गुलिराख्याता उच्यन्ते ता विधाः क्रमात् ॥ २५ ॥

---

1. म. श्री कथ्यतेऽथवा. 2. म. चोत्तरे 3. श्री. भवेत् 4. म. श्री. द्याश्रयणेन च
5. म. दयक्रमात्. 6. म. यथावद.

मानं मानान्तरं मात्रा मुष्टिर्देहस्तथैव च । वक्ष्यमाणक्रमेणैषां भेदानां लक्षणं शृणु ॥ २६ ॥
वातायनपथं प्राप्य ये यान्ति रविरश्मयः । तेषु सूक्ष्मा विसर्पन्ति रेणवः परमाणवः ॥ २७ ॥
तेऽष्टौ केशाह्वयास्तेऽष्टौ लीक्षो यूकस्तदष्टकम् । तदष्टकं यवास्तेऽष्टावङ्गुलिः समुदाहृता ॥ २८ ॥
तदुत्तमाङ्गुलिः सप्त यवास्त्वेव तु मध्यमा । यवाः षडधमा प्रोक्ता मानाङ्गुलमिदं भवेत् ॥ २९ ॥
विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तराङ्गुलम् । शालीभिर्वा ऋजुन्यस्तैस्त्रिभिर्मानान्तरं भवेत् ॥ ३० ॥
आचार्यदक्षिणकरे मध्यमाङ्गुलिमध्यमे । पर्वणोरन्तरं दीर्घं मात्राङ्गुलमुदाहृतम् ॥ ३१ ॥
*चतुर्धा विभजेदेको भागो मुष्टयङ्गुलिः [1]स्मृता ।

—कौतुकायाममानम्—

यत्किञ्चित्कौतुकायामं विभज्य दशधा पुनः ॥ ३२ ॥
एकं द्वादशधा भागं कृत्वा तेष्वेकमङ्गुलम् । उच्छ्रायः प्रतिमायाः [2]स्यान्महामानाङ्गुलाश्रयः ॥३३॥

—प्रासादवेदिकादीनामङ्गुलनिर्देशः—

प्रासादादींश्च तेनैव कुर्यान्मानान्तरेण वा । वेदिकापीठशिबिकारथादीनां विधिः पुनः ॥ ३४ ॥
[3]मानान्तराङ्गुलेनैव भवेन्नान्येन केनचित् । यागोपकरणानां च कुर्यान्मात्राङ्गुलेन च ॥ ३५ ॥
होमाङ्गानि स्रुवादीनि [4]कुणमुष्टयङ्गुलाश्रयः ।

—देहलब्धाङ्गुलेन प्रतिमाङ्गमानम्—

देहलब्धाङ्गुलेनैव प्रतिमाङ्गानि कल्पयेत् ॥ ३६ ॥
यैर्यावद्भिर्विभागांशैरर्च्यमानमुदाहृतम् ।

—ग्रामादीनां मानाङ्गुलेनैवायविभागः—

मानाङ्गुलेन तन्मानमङ्गुलीकृत्य तत्पुनः ॥ ३७ ॥
आयव्ययादौ संयोज्य ग्रामादेर्यच्छुभं भवेत् । तत्तथा वक्ष्यते ब्रह्मन् इदानीमवधार्यताम् ॥ ३८ ॥
लब्धांशमङ्गुलीकृत्य तदङ्गुलमथाष्टभिः । वर्धयेद् द्रावयेच्चैव पुनर्द्वादशसंख्यया ॥ ३९ ॥
आयं शिष्टाङ्गुलं ज्ञेयं [5]व्ययैर्नवभिरेधयेत् । दशभिः क्षपयेच्छिष्टमङ्गुलं व्ययसंज्ञितम् ॥ ४० ॥

---

* विनाङ्गुष्ठेन शेषाभिर्मुष्टिमंगुलिमुदाहृतम् । एषः अर्धश्लोकः श्री ग्रन्थे इत. पूर्वं दृश्यते.

1. श्री. स्मृतः. 2. म. स्यादेतद्देहाङ्गुलं स्मृतम्. 3 श्री. एतद्देहाङ्गुलेनैव. 4. म. श्री. कुण्डं.
5. म. व्ययेन.

आयः समग्रशुभदो व्ययः स्वल्पशुभावहः । प्रतिकूले विपर्यासे ग्रामादेः कमलासन ॥ ४१ ॥
त्रिभिर्वृद्धौ क्षयोऽष्टाभिः शिष्टं योनिरुदाहृता ।

ध्वजाद्यष्टौ आयाः

ध्वजो धूमस्तथा सिंहः श्वा वृषो गर्दभः करी ॥ ४२ ॥
काक इत्युच्यते योनिः सा शुभा शुभलक्षणा । ध्वजः सिंहो गजोऽनड्वान् शुभयोनिः शुभावहः ॥
धूमध्वजखरश्वानः प्रतिकूला हि योनयः ।

नक्षत्रादिकल्पनप्रकारः

अष्टाभिर्वर्धते हानौ सप्तविंशतिसंख्यया ॥ ४४ ॥
शिष्टमृक्षमिति प्रोक्तं ग्रामादेस्तच्छुभं भवेत् । नवभिर्वर्धते हानौ सप्तभिः शिष्टमङ्गुलम् ॥ ४५ ॥
वारास्ते शुभदाः सौम्याः क्रूराः स्युर्भयदायिनः । वृद्धौ चतुर्भिर्नवभिः [1]शिष्टं हानावधांशकम् ॥ ४६ ॥
तस्करो भुक्तिशक्तिश्च धन्यो नरपतिः क्लिबः । [2]सुनीतिः प्रीतिरायुष्मान् एतेंशाः [3]समुदीरिताः ॥४७॥

तालधनुःक्रोशादिनिरूपणम्

मानाङ्गुलैर्द्वादशभिर्मानं तालाह्वयं मतम् । द्वौ तालौ कथितो हस्तस्ते ह्यष्टौ धनुरुच्यते ॥ ४८ ॥
स एव दण्डः सयुगः क्रोशस्तैः पञ्चभिः शतैः । क्रोशैश्चतुर्भिः [4]गोपानं [5]योजनं तच्चतुर्गुणम् ॥ ४९ ॥
ग्रामस्य यजमानस्य राज्ञो जनपदस्य च । आयादिरनुकूलश्चेत् प्रतिमाः सर्वसिद्धिदाः ॥ ५० ।
आयादिरेष विज्ञेयो मूलबेरसमाश्रयः । न तदङ्गेषु बिम्बेषु लोहजेष्वितरेषु वा ॥ ५१ ॥
श्रद्धा बिम्बेषु विज्ञेयस्तथा भवनकौतुके ।

प्रस्थादिमानभेदाः

[6]प्रस्थादीनां तु मर्यादा प्रसङ्गादुच्यतेऽधुना ॥ ५२ ॥
चत्वारो व्रीहयः कुञ्जास्तेऽष्टौ मञ्जिष्ठ उच्यते । ते शतं षष्टिरधिकं निष्कं निष्काष्टकं फलम् ॥ ५३ ॥
फलानि पञ्च कुडुपं प्रस्थं स्यात्तु चतुर्गुणम् । तच्चतु[7]र्गुणकं विद्यादाढकं तद्द्वयं शिवम् ॥ ५४ ॥
तद् द्वयं [8]द्रोणमुदितं खारी तद् [9]द्वितयं भवेत् । तत्खारीत्रितयं भारं परिमाण [10]मुदीरितम् ॥ ५५ ॥
एतेन परिमाणेन परिच्छेद्यं घृतादिकम् ॥ ५६ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे ध्रुवबेर[11]प्रमाणानुकूल्यनिर्णयो नाम द्वादशोऽध्यायः ॥

---

1. म. हानौ शिष्ट. 2. श्री म. निर्भीतः. 3. म. समुदाहृताः. 4. म. गोधान. 5. म. योजना तच्चतुर्गुणा. 6. म. प्रस्थादेरपि. 7. म. गुणितं. 8. श्री. मुद्दिष्ट. 9. म. द्वयमुच्यते. 10. म. मुदाहृतम्. 11. मानाङ्गुलि.

# त्रयोदशोऽध्यायः ।

## शूलस्थापनविधिः

श्रीभगवान्—

अथातः संप्रवक्ष्यामि शूलस्य [1]स्थापनादिकम् ।

### सजातीयविजातीयशूलाकारप्रमाणादिविधिः

स्थिराणि चन्दनादीनि दारूणि घनवन्ति च ॥ १ ॥

अधिवास्य [2]यथापूर्वं गृह्णीयाद्देशिकोत्तमः । वृक्षजातीयया व्यक्त्या शूलं यद्येकया भवेत् ॥ २ ॥

उत्तमं तद्विजानीयात् [3]पर्वभिर्यदि मध्यमम् । नानाजातीयया तच्चेदधमं कमलासन ॥ ३ ॥

शिल्पिभिस्तक्षयित्वा तु असारं व्यपनीय तु । सारेण कारयेच्छूलं प्रमाणं तस्य कथ्यते ॥ ४ ॥

अङ्गुलीनां चतुर्विंशच्छतं कौतुकमुन्नतम् । द्व्यधिका षष्टिरायामो वंशदण्डस्य कथ्यते ॥ ५ ॥

तस्य मूलाग्रमध्यानि विस्तीर्णानि यथाक्रमम् । चत्वार्यङ्गुलमानानि सार्धानि त्रीणि तानि च ॥ ६ ॥

यवाः षट् च तथा नाहाः षोडशा[4]ङ्गुलसंमितः । मूलस्य स्यात्तथा मध्ये नाहः पञ्चदशाङ्गुलः ॥ ७ ॥

चतुर्दशाङ्गुलो नाहस्तदग्रे कमलासन । वक्षोदण्डश्चतुस्त्रिंशदङ्गुलः स्यात्समायतः ॥ ८ ॥

चतुरङ्गुलविस्तारः षोडशाङ्गुलमानतः । द्विशिखा त्रिशिखा वापि शिखा किंशुककुड्मलः ॥ ९ ॥

आयामो बाहुदण्डस्य [5]पञ्चविंशाङ्गुलो भवेत् । सार्धत्र्यगुलकं मूलं विस्तीर्णं तस्य मध्यमम् ॥ १० ॥

द्व्यङ्गुलं त्र्यङ्गुलं सार्धमग्रं तस्य चतुर्मुख । प्रकोष्ठमायतं विंशत्यङ्गुलं द्वियवाधिकम् ॥ ११ ॥

मूलमध्याग्रविस्तारः द्व्यङ्गुलस्त्र्यङ्गुलोऽपि वा । सार्धस्तथाङ्गुलानि स्युस्त्रीणि विद्याद्यथाक्रमम् ॥ १२ ॥

सुषिरं बाहुमूलं स्यादग्रं बाहुप्रकोष्ठयोः । मिथुनं कल्पनीयं स्यान्नीचबाहुरपीदृशः ॥ १३ ॥

आयामः [6]कल्पदण्डस्य षोडशाङ्गुलसंमितः । विस्तारस्तस्य मध्ये स्याच्चतुरङ्गुलसंमितः ॥ १४ ॥

षोडशाङ्गुलनाहश्च तस्य मध्यः प्रकीर्तितः । आयामः पार्श्वदण्डस्य कार्यो द्वात्रिंशदङ्गुलः ॥ १५ ॥

पार्श्वदण्डपरीणाहश्चतुरङ्गुलसंमितः । द्विशिखश्च कटीदण्डो वक्षोदण्डो नियोगतः ॥ १६ ॥

दण्डयोः पार्श्वयोः सम्यक् ऊर्ध्वदण्डस्य चायतिः । [7]एकविंशाङ्गुलो दण्डो जङ्घादण्डसमो भवेत् ॥ १७ ॥

---

1. श्री. म स्थापना विधिम् 2. म यथाशूल पूर्ववत् 3. म बह्वीभि. 4. श्री ङ्गुलि मानतः.
5. म. सप्त. 6. श्री. म कटी. 7 म सप्तविंशाङ्गुलान्तेन जङ्घादण्डस्समुद्भवेत्.

मध्याग्रमूलविस्तारः क्रमेण परिपठ्यते । त्र्यङ्गुलोऽर्धाधिकः सार्धो द्व्यङ्गुलश्चतुरङ्गुलः ॥ १८ ॥
जङ्घायास्त्र्यङ्गुल मूलं सार्धद्व्यङ्गुलमन्तरम् । अर्ध च द्व्यङ्गुलं तत्र त्रिगुणं सहनं मतम् ॥ १९ ॥
ऊरुमूलं च सुषिरं द्व्यङ्गुलं षड्यवाधिकम् । ऊरुजङ्घाग्रयो[1]रन्ते मिथुनं परिकल्पयेत् ॥ २० ॥
वंशदण्डमुरः कट्याः मध्ये निम्ने निवेशयेत् । शू .प्रमाणमुदितं शूलसंख्याधुनोच्यते ॥ २१ ॥

शूलाना सख्या

वंश[2]दण्डः कटीदण्डो वक्षोदण्डस्तथैव च । बाहुदण्डाश्च चत्वारः [3]प्रकोष्ठेन तथाविधः ॥ २२ ॥
जङ्घादण्डश्च इत्येते शूलदण्डास्त्रयोदश । श्लेषयेत्तद्यथायोगं सुषिर नैव कारयेत् ॥ २३ ॥
न च कीलं विधातव्यं शिल्पिभिः शूलकर्मणि । वंश[4]दण्डं किरीटान्तं मूर्धान्तं वा प्रचक्षते ॥ २४ ॥
पादान्तं वा यथा स्थैर्यं तथा कुर्याद्विचक्षणः । लोहपट्टेन [5]शूलानां बन्धनं दृढमाचरेत् ॥ २५ ॥

शूलदण्डस्य लोहादिभेद.

लोहजाः शूलदण्डाः स्युरथवा विभवे सति । वंशमूलं चतुष्कोणमष्टाश्रं मध्यमिष्यते ॥ २६ ॥
अग्रं सुवृत्तं शूलानि वृत्तान्यन्यानि वाऽन्यथा । वंशदण्ड[6]जमानस्य गलादर्वागृजुर्भवेत् ॥ २७ ॥
उपरिष्टाद्यथायोगं किञ्चिद्भुग्नं चतुर्मुख । प्रतिमानां यथाभागं वंशदण्डस्थितिर्भवेत् ॥ २८ ॥
वक्षोदण्डः कटीदण्डः किञ्चिद्भुग्नशिखो भवेत् । भुजोरुदण्डयोर्मूलं निम्नं कृत्वा यथाशिखम् ॥२९॥
[7]मुखं सार्धं किरीटस्य शूलद्विगुणमेव वा । [8]मौलिमूलस्य विस्तारस्त्र्यङ्गुलं [9]वा यवत्रयम् ॥ ३० ॥
[10]त्रियवं त्र्यङ्गुलं मध्यं सार्धत्र्यङ्गुलसंमितम् । बाह्वन्तमूलबेरस्य देवीनां शयने सति ॥ ३१ ॥
शूलमन्यत्र यानादौ नासिकान्तमथापि वा । चिबुकान्तं यथोच्छ्रायं ब्रह्मणः शयने सति ॥ ३२ ॥
शूलं जान्वन्तमन्यत्र बाहुसीमान्त[11]मिष्यते । भृग्वादिपरिवाराणां बाहुसीमान्तमुच्यते ॥ ३३ ॥

शूलाना जलाधिवासादि

[12]जलाधिवासनं चैव स्थापनं मण्डपे तथा । होमं कुम्भार्चनं द्वारपूजा ब्राह्मणतर्पणम् ॥ ३४ ॥
शुद्धिश्च शोषणादीनि शूलानां बिम्बवत्स्मृतम् । [13]न दिवा पिण्डिकां रात्रौ अधिवास्य समाहितः ॥३५॥
श्वोभूते वास्तुनो होमं दद्याद्वास्तुबलिं तथा ।

---

1. म मध्ये. 2. म. दण्डि 3. श्री. म प्रकोष्ठाश्च चतुर्विधाः. 4. म. दण्डि. 5. श्री म सन्धीना. 6. म श्शयानस्य 7 श्री मुखात् 8 म. शूल. 9 म. च चतुर्यवः. 10. श्री. म. त्र्यङ्गुल मध्यमग्र तु 11. म. मुच्यते 12. श्री. जलावासादि सकल मण्डपे तु यथा तथा । म. जलाधिवासस्नपन शयन मण्डपे तथा ॥ 13. म. तथैव.

गर्भगेहशोधनम्

शोधयेद्गर्भगेहं च मार्जनालेपनादिभिः ॥ ३६ ॥

सूत्रं चन्दनतोयेन सिक्तमास्फालयेत्क्रमात् । सूत्राण्युदङ्मुखान्यष्टौ प्राङ्मुखानि तथैव च ॥३७॥

कोष्ठान्येकोनपञ्चाशन्न्यूनाधिक [1]विवर्जिता ।

ब्राह्मणादिसज्ञकभागविधिः

ब्राह्मणो मध्यमो भागः दैविकस्तु तदन्तरः ॥ ३८ ॥

तृतीये मानुषस्तुर्यः पैशाचो भाग इष्यते । अर्चना पीठिका ब्राह्मे भागे दैवे स्थितिर्भवेत् ॥ ३९ ॥

मानुषे परिवाराः स्युरायुधानि चतुर्थके । किञ्चिन्मानुषमाश्रित्य दैवे स्यादासनं [2]भवेत् ॥ ४० ॥

दिव्यमानुषयोः शय्या पैशाचे यानमिष्यते । [3]दैवे देव्यः स्थिता वा स्युरासने तस्य पार्श्वतः ॥४१॥

शयनेऽपि यथायोगं यानारूढेऽपि [4]वै तथा ।

सूत्राणामुदङ्मुखता

उदङ्मुखानि सूत्राणि दश तावन्निपातयेत् ॥ ४२ ॥

प्राङ्मुखान्यपि कोष्ठानामेकाशीतिर्भवेत्ततः । मध्यमो ब्राह्मणो भागो दैवः स्यात्तदनन्तरः ॥४३॥

तृतीयः पैतृकस्तुर्यो मानुषः पञ्चमः पुनः । पैशाच इति वा भागान् कल्पयेद्गर्भमन्दिरे ॥ ४४ ॥

एकबेरबहुबेरादीनां ब्राह्मादिभागभेदः

[5]एकबेरविधिर्ब्राह्मे बहुबेरं तु दैविके । दैवे च मानुषे भागे द्वयोरासनमिष्यते ॥ ४५ ॥

दैवमानुषपित्र्येषु शयनं त्रिषु कारयेत् । पैशाचे मानुषे चैव द्वयोर्यानं विधीयते ॥ ४६ ॥

उक्तस्थानविपर्यासे अनिष्टफलम्

उक्तस्थानविपर्यासे राजा राष्ट्रं च नश्यति । तस्माद्यथोक्तभागे स्युः स्थाप्या ऋद्धिमभीप्सुभिः ॥४७॥

कामनानुगुणस्थापनाभूमिः

चतस्रः स्थापनाभूमिं कृत्वा [6]मध्येपदे पुनः । मुक्तिकामोऽर्चयेद्देवं पदे तु तदनन्तरे ॥ ४८ ॥

दिव्ये भोगाभिलाषश्चेत्सन्तानार्थी तु मानुषे । पश्वादिकामः पैशाचे पदेष्वेवं यथाक्रमम् ॥ ४९ ॥

प्रासादद्वारविस्तारमानम्

प्रासादद्वारविस्तारं त्रिभागीकृत्य मध्यमम् । भागं तु सप्तधा कृत्वा पञ्चभागांस्तु दक्षिणे ॥ ५० ॥

---

1. म. श्री. विवर्जितम्. 2. म. पदे. 3. म. दिव्ये. 4. म. ते. 5. म. एकबेरं न्यसेत्.
6. श्री. म. मध्यपदे.

अपोह्यानन्तरे भागे ब्राह्मे सूत्रमुदाहृतम् ।

—ब्राह्मभागे भित्तिस्तम्भादिनिषेधः—

न कुर्याद्ब्रह्मणः सूत्रे भित्तिस्तम्भादिकं सुधीः ॥ ५१ ॥

अज्ञानाद्यदि कुर्वीत प्रत्यवायो महान् भवेत् । एकबेरं भवेत्तत्र [1]ब्रह्मसूत्रे शिलामयम् ॥ ५२ ॥

रत्नलोहशिलाकाष्ठमृद्भिस्तद्वा त्रिवस्तुभिः । बहुबेरं भवेदर्धचित्रं साभासमिष्यते ॥ ५३ ॥

स्थितासीनशयानानां द्रव्यैः रत्नादिभिर्भवेत् । निर्माणं सर्वमूर्तीनां ऋद्धिकृन्नैव दोषकृत् ॥ ५४ ॥

—गर्भगेहे खाते गर्भन्यासविधिः—

गर्भगेहे ततो भागे यथोक्तधरणीं खनेत् । हस्तमात्रेण तत्रैव नपुंसकशिलां क्षिपेत् ॥ ५५ ॥

शिलायां तत्र रत्नानि लोहैर्बीजैश्च धातुभिः । सह वा तैर्विना वाऽपि निक्षिपेच्चोदितः क्रमात् ॥ ५६ ॥

विधाय योषिच्छिलया दृढं कुर्यात् सुधादिभिः । मञ्जूषां लोहजां कृत्वा यद्वा रत्नानि निक्षिपेत् । ५७ ॥

रत्नन्यासः [2]स्थितः सैषः पादमूले विधीयते । अन्येषां पृष्ठतः कुर्यात् रत्नन्यासविचक्षणः ॥ ५८ ॥

—पादपीठस्याकारभेदः—

वृत्तं वा चतुरश्रं वा पादपीठं तु तद्भवेत् । प्रतिमायां शिलामय्यां शिलायां च स्थितिर्भवेत् ॥ ५९ ॥

स्थाने पादशिलायां च शूलार्धं सुषिरद्वयम् । इष्टकाभिस्तथा कुर्यात्पीठिकां च शिलोपरि ॥ ६० ॥

उत्सेधश्चापि चायामो भूमिभागप्रमाणतः । द्वाराष्टभागमथवा पादाष्टकमथापि वा ॥ ६१ ॥

प्रतिमाष्टांशमथवा पादपीठप्रमाणकम् । वृत्तं वा चतुरश्रं वा पादपीठ यथा भवेत् ॥ ६२ ॥

वृत्ते च चतुरश्रे च पद्मं चोपरि कल्पयेत् । स्थानकेषु विधिर्ह्येष [3]आसीने द्विगुणं भवेत् ॥ ६३ ॥

शयने तावदुत्सेधं प्रतिमायामसंमितम् । पद्मादिपीठमथवा देहलब्धाङ्गुलैः पुनः ॥ ६४ ॥

कुर्याद् द्वादशभिः प्रांशुं विस्तीर्णं द्विगुणाङ्गुलैः । पञ्चविंशद्दलयुतं यद्वा षोडशभिर्युतम् ॥ ६५ ॥

दलैर्द्वादशभिर्यद्वा युक्तमष्टभिरेव वा । अङ्घ्रिमानवशेनैव दलानां द्राघिमा भवेत् ॥ ६६ ॥

ऊर्ध्वच्छदनसंयुक्तं [4]ततोऽल्पदलसंयुतम् । मध्ये कर्णिकया युक्तं किञ्चित्फुल्लाम्बुजाकृतिम् ॥ ६७ ॥

दिव्ये भागे स्थितस्यैष विष्टरः [5]समुदीरितः ।

—एकबेरादिभेदेन वेदिकामानम्—

एकबेरे तथायामं त्रिधा कृत्वैकभागिकाम् ॥ ६८ ॥

वेदिं कुर्याच्चतुर्धा वा तुर्यांशेन प्रकल्पयेत् । उत्सेधोऽयं स्नानवेदेर्वृत्ता वृत्तायता [6]तु वा ॥ ६९ ॥

---

1. ब्रह्मस्थाने. 2. म स्थितस्यैवं 3. श्री. म. आसन. 4. श्री. म. ततोऽपदल.
5. म. समुदाहृतः. 6. म. अपि वा.

चतुरश्रायता वापि षडश्राष्टाश्रकापि वा । [1]उपानकटिसंयुक्ता कर्तव्या द्वादशाङ्गुला ॥ ७० ॥
आयतं नालमेतस्य चतुर्भिरथवाङ्गुलैः । विंशत्या चायतं तस्य मुखं मकरवक्त्रवत् ॥ ७१ ॥
किञ्चिन्निम्नं यथा तस्मान्नालं [2]तिर्यगथोत्थितम् । उपरिष्टाच्च तद्वेदेर्वलयं चतुरङ्गुलम् ॥ ७२ ॥
उन्नतं कारयेत्तावद्विस्तारं कमलासन । वेदिकानुगुणं यद्वा पद्ममेवाखिलं भवेत् ॥ ७३ ॥

देवमुखादिभेदेन जलप्रणालीभेद

प्रत्यङ्मुखस्य देवस्य प्राङ्मुखस्य तथा भवेत् । प्रणाल्युदङ्मुखा [3]कुर्याद् दक्षिणोदङ्मुखस्य तु ॥ ७४ ॥
प्रणाली प्राङ्मुखा कार्या [4]नान्यत्र विधिरिष्यते ।

धाराकुल्याविधिः

धाराकुल्या च कर्तव्या यावच्छिद्रं बहिःस्थितम् ॥ ७५ ॥
हस्तिहस्तादिभिः श्वभ्रे जलधारां निपातयेत् । वृत्तं वा चतुरश्रं वा श्वभ्रं कुर्याच्छिलादिभिः ॥ ७६ ॥
मनोहरमगाधं च बहिस्तद्देवतालयात् ।

आसीनमूर्तिविधिः

आसीनस्याभिधास्यामि प्रमाणं सिंहविष्टरे ॥ ७७ ॥
देहलब्धाङ्गुलैः षड्भिरुत्सेधं त्रिंशतापि च । द्विगुणेरायतं तस्य सिंहैरष्टाभिरासनम् ॥ ७८ ॥
ध्रियमाणं चतुर्भिर्वा तेषां वक्त्राणि सिंहवत् । शिष्टं वपुः पुरुषवच्चतुर्भिर्बाहुभिर्युतम् ॥ ७९ ॥
बिभ्राणो विष्टरं द्वाभ्यां द्वाभ्यां बध्वांजलिं हृदि । रत्नैः परिष्कृतं पीठं सिंहैर्वा केवलैर्युतम् ॥ ८० ॥
गजाङ्घ्रिभिर्वा तद्युक्तं कुर्यान्नैवान्यथा विधिः ।

भोगशय्याविधिः

भोगशय्या शयानस्य वक्ष्यामि कमलासन ॥ ८१ ॥
वृत्तायतं यथायोगं तथा त्रिर्मण्डलीकृतम् । प्रादक्षिण्येन वलयैः पञ्चभिर्वाथ सप्तभिः ॥ ८२ ॥
देहाङ्गुलैश्चतुस्तालमुत्सेधं भोगमण्डलम् । मध्यतः पादतः प्रोक्तं मूर्धन्यधिकमङ्गुलैः ॥ ८३ ॥
त्रिभिर्द्विगुणितैर्यद्वा वलयास्ते यथोदिताः । पश्चात्प्रभृति चैकैकं किञ्चित्किञ्चित् [5]समुन्नतम् ॥ ८४ ॥
फणैरयुग्मैर्नवभिः सप्तभिर्वाथ पञ्चभिः । उपेतमुत्तमं मध्यमधमं संप्रचक्षते ॥ ८५ ॥
त्रितालमुन्नतं षड्भिरङ्गुलैर्मध्यमं [6]फलम् । अष्टाङ्गुलं फणानां स्युरन्तरालं फणास्तु ते ॥ ८६ ॥

1. श्री म. उपानत्वादि. 2. श्री म कुर्यादिवोत्थितम् 3. श्री. म कार्या. 4. श्री. म. नान्यथा. 5. म. समुन्नताः. 6. श्री. भवेत्.

निम्नाः क्रमेण कर्तव्या न्यूनाः पञ्चचतुस्त्रिभिः। अङ्गुलैः क्रमशस्तेषां विस्तारो मध्यमं फणम् ॥८७॥

द्वात्रिंशदङ्गुलास्तस्य फणाः पार्श्वैः चतुर्मुख। [1]विंशत्पञ्चचतुर्भिश्च [2]विस्तीर्ण द्व्यङ्गुलैरपि ॥ ८८ ॥

विंशत्यङ्गुलविस्तारौ शेषौ द्वौ फणिनः फणौ। इतरेष्वपि सर्वेषु हानिरूह्या यथाक्रमम् ॥ ८९ ॥

बिडालवक्त्रवद्वक्त्रं दंष्ट्रया परिशोभितम्। मूर्ध्नि न्यस्तमहारत्नं तीक्ष्णशृङ्गसमन्वितम् ॥ ९० ॥

शनैः शनैरधो वक्त्रं यावन्मौल्यग्रमाननम्। सर्वकण्ठात्फणोत्सेधं चतुस्तालं दशाङ्गुलम् ॥ ९१ ॥

अथवा शयनोत्सेधं तादृशं संप्रचक्षते। कौतुकद्वारचरणसमुत्सेधे त्रिधा कृते ॥ ९२ ॥

एकांशेन समुत्सेधं भोगमण्डलमिष्यते। चतुर्थांशेन वा कुर्याद्भोगिनो भोगमण्डलम् ॥ ९३ ॥

भोगासनसमुत्सेधो भोगशय्यावदिष्यते। सुवृत्तं देवदेवस्य पृष्ठभागे समुन्नतम् ॥ ९४ ॥

फणानां मण्डलं यद्वच्छत्रं तद्वच्च शोभनम्। देवस्य मौलेरुपरि विंशत्यङ्गुलमुन्नतम् ॥ ९५ ॥

चतुरश्रायतं पीठमथवा शयनं भवेत्। प्रागुक्तैश्चरणैर्युक्तमुपधानादिसंमितम् ॥ ९६ ॥

आसनं पद्ममात्रं तु विश्वमूर्तेर्विधीयते।

## यानासनमूर्तिनिरूपणम्

याने गरुत्मतोऽधस्तात्पद्ममासनमिष्यते ॥ ९७ ॥

तस्मिन्विदध्यात्पक्षीन्द्रं देवायामार्ध [3]संयुतम्। बृहद्भुजं गरुत्मन्तमारुह्यस्थितमच्युतम् ॥ ९८ ॥

कुर्याद् देवं स्थितादीनामासनानि प्रकल्पयेत्।

## अधिवासितशूलस्थापनविधिः

अतो मुहूर्ते संप्राप्ते शोभने देशिकोत्तमः ॥ ९९ ॥

अधिवासितशूलानि ह्युद्धृत्याध्वर्युभिः सह। धाम प्रदक्षिणीकृत्य तूर्यघोषमुदीर्य च ॥ १०० ॥

शूलानि स्थापयेच्छ्वभ्रे रत्नन्यासो यथोदिते।

## प्रतिष्ठापञ्चकविधिः

स्थापनास्थापने चैव तथा संस्थापनाऽपि च ॥ १०१ ॥

प्रस्थापना प्रतिष्ठेति प्रतिष्ठापञ्चकं स्मृतम्। या प्रतिष्ठा भवेत्स्थाने स्थापना सा प्रकीर्तिता ॥ १०२ ॥

या प्रतिष्ठासने प्रोक्ता सा चास्थापनसंमिता। शयने या प्रतिष्ठा च साच संस्थापना भवेत् ॥ १०३ ॥

[4]याने च या प्रतिष्ठा सा नाम्ना प्रस्थापना भवेत्। प्रतिमा यार्चनापीठे कर्मार्चेति प्रकीर्तिता ॥१०४॥

1 श्री. म. विंशत्या च. 2. विस्तीर्णविगुलैरपि. 3. म. सम्मितम्. 4. म. यानके.

तस्यां या च क्रिया प्रोक्ता सा प्रतिष्ठेति कीर्तिता ।

परमेष्ठ्यादिभेदेन आसीनादिशूलस्थापनम्

आचार्यः स्थापयेच्छूलं स्थानकं परमेष्ठिनः । आसीनं स्थापयेत्पुंसा विश्वेन शयितं तथा ॥ १०५ ॥
सर्वेण विश्वरूपं तु निवृत्या यानकं भवेत् । देवीशूलं तथा स्थाप्य रत्नन्यासोपरि क्रमात् ॥ १०६ ॥
ब्रह्मादिदेवतानां तु शूलान्यात्मीयविद्यया ।

भित्तिशूलस्थापनम्

एवं संस्थाप्य शूलानि [1]भित्तिशूलं विनिक्षिपेत् ॥ १०७ ॥
[2]ककुदे पृष्ठपार्श्वे तु स्थानकस्य समाचरेत् । आसीनस्य तथा कृत्वा शयानस्योच्यतेऽधुना ॥ १०८ ॥
शयानाधारशूले वै कुर्यादूर्ध्वमुखे स्थिते । दिव्यमानुषयोर्मध्ये वंशदण्डं निधापयेत् ॥ १०९ ॥
पृष्ठपार्श्वे [3]तु ककुदे शयानाधारशूलकम् । [4]शयानाधार शूले द्वे कुर्यादूर्ध्वमुखे स्थिते ॥ ११० ॥
दिव्यमानुषयोर्मध्ये शयिताधारशूलकम् । आधारशूलं शयने स्थले कुर्याद्विचक्षणः ॥ १११ ॥
आधारशूलमन्येषां [5]भित्तिसंस्थं च कारयेत् ।

आधारशूलरहिते देवस्य सान्निध्यातिशयः

आधारशूलरहिते सर्वत्र स्थापने कृते ॥ ११२ ॥
वरप्रदानं सान्निध्यमधिकं भवति ध्रुवम् ।

महाकुम्भादिप्रोक्षणम्

महाकुम्भादिकुम्भानां वारिभिर्मूलविद्यया ॥ ११३ ॥
प्रोक्षयेद् दर्भकूर्चेन शूलानि स्थापि[6]तान्यथ ।

गुरुदक्षिणा

दक्षिणां गुरवे दद्याद्यथा तुष्टिर्भवेद् गुरोः ॥ ११४ ॥
दशनिष्कं [7]सुवर्णं तु तस्यार्धं वा प्रदापयेत् । ऋत्विजामपि सर्वेषां दशनिष्कं प्रदापयेत् ॥ ११५ ॥
काले तस्मिन्समाहूय रथकारं द्विजोत्तमः । प्रेषयेत्तोषयेच्चापि यजमानो धनैर्भृशम् ॥ ११६ ॥

कुलालनियोगः

कुलालं कुशालं शान्तं व्याधिहीनमदूषितम् । रथकारो नियुञ्जीत शास्त्रोक्ते [8]सर्वकर्मणि ॥ ११७ ॥
तदभावे पारशवं यावन्नयनमोक्षणम् । रथकारोक्तविधिना [9]कुशलः सर्वमाचरेत् ॥ ११८ ॥

1. म. तत्रि. 2. म. ककुद्देशे पृष्ठपार्श्वे. 3. म ककुद्देशे शयना. 4. म. शयिता.
5. म. भक्तिसंस्थानि. 6. म. तान्यपि. 7. म. सुवर्णस्य. 8. म. अथ 9 श्री म. कुलाल,

—⊷ स्थापितशूलोद्धारे दोषः ⊶—

स्थापितं नोद्धरेच्छूलं समुद्धारे महद्भयम् । कर्तुः कारयितुश्चापि भवत्येव न संशयः ॥ ११९ ॥
[1]अङ्गभेदेऽङ्गहानिः स्याद्यजमानस्य निश्चितम् ।

—⊷ शूलस्थापने शुभफलम् ⊶—

शूलस्थापनमात्रेण यजमानो महत्फलम् ॥ १२० ॥
अश्नुते मानुषान् दैवानथवा न समापितम् ।

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे शूलस्थापनविधिर्नाम त्रयोदशोऽध्यायः ॥

---

# चतुर्दशोऽध्यायः ।

—⊷ बिम्बनिर्माणविधिः ⊶—

श्रीभगवान्—

बिम्बनिर्माणमधुना वक्ष्यामि कमलासन । लोहपट्टेन शूलानां सन्धिं बद्ध्वा दृढं यथा ॥ १ ॥
अष्टबन्धेन शूलानि लिम्पेत् सर्वाणि सर्वतः । रज्जुभिर्वेष्टयेत्तानि दृढानि च्छिद्रवर्जितम् ॥ २ ॥
यथा सिराभिर्बहुभिः शरीरं बध्यते तथा ।

—⊷ शूलरज्वादीनां अस्थिसिराप्रकृतिता ⊶—

शूलान्यस्थीनि मृण्मांसं शिराः पाशास्त्वचः पटाः ॥ ३ ॥

—⊷ अपक्वमृदालेपने शुभफलम् ⊶—

मृद्भिरालेपनं कुर्यादपक्वाभिश्चतुर्मुख । पक्वाभिर्वर्जयेद्बिम्बं गृहे देवालयेऽपि वा ॥ ४ ॥
अपक्वाः सर्वफलदाः पक्वास्तु बहुदोषदाः ।

—⊷ केवलमृदा बिम्बनिर्माणम् ⊶—

मृदा केवलया बिम्बं कुर्याद्यद्वा त्रिवस्तुभिः ॥ ५ ॥
मृण्मये कौतुके पूर्णे साङ्गो[2]पाङ्गं यथाविधि । त्रिवस्तुके मृदालिप्ते [3]कङ्कशर्करया तथा ॥ ६ ॥
पटेनाच्छाद्य [4]सर्वाङ्गं वर्णलेपं समाचरेत् ।

—⊷ प्रशस्तमृत्तिकास्थानानि ⊶—

पुण्यक्षेत्रे नदीतीरे कान्तारे पर्वतेऽपि वा ॥ ७ ॥

---

1. श्री. म. अङ्गच्छेदे. 2. श्री. पाङ्गे. 3. श्री. कटु. 4. म. सूक्ष्मेण.

मृदं समग्रां गृह्णीयात्सर्वदोषविवर्जिताम् । नीचैरध्यासितां चैत्यश्मशानादिविवर्जिताम् ॥ ८ ॥

कल्कोपयोगिन्यस्त्वचः

खदिरोदुम्बराश्वत्थन्यग्रोधार्जुनभूरुहाम् । समुद्धृत्य त्वचः सर्वा मासं वारिषु निक्षिपेत् ॥ ९ ॥

तोयैर्मासोषितैर्मृत्स्नां मिश्रयेत्पीडयेच्च ताम् । तां नूतनेषु भाण्डेषु निक्षिप्याच्छाद्य यत्नतः ॥ १० ॥

छायायां निक्षिपेद्भाण्डान्यथा वातादि न स्पृशेत् ।

कल्कप्रतिवापद्रव्यविधिः

[1]धातुकीयास्त्रयो भागाः [2]षड्गुणा च हरीतकी ॥ ११ ॥

धात्री च द्वादशविधा भागाँस्तानेकविंशतिः ।

अधिवासकालमानम्

अधिवास्यैकमासं तु भाण्डेषु कमलासन । त्रिफलेन पुनर्वारा तां मृदं मिश्रयेत्सुधीः ॥ १२ ॥

छायायां नातिशुष्कां तां विंशत्येकोनया मृदा । मिश्रयेद्वक्ष्यमाणानां पुण्यक्षेत्रादिजन्मनाम् ॥ १३ ॥

एकोनविंशतिमृद.

पुण्यक्षेत्रे नदीतीरे पर्वते पुलिने ह्रदे । निर्झरे सङ्गमे गोष्ठे [3]देविके तीरयोस्तथा ॥ १४ ॥

शालिक्षेत्रे देवखाते शृङ्गे च वृषहस्तिनोः । वराहकृष्टे वल्मीके कुलीरखमतौ तथा ॥ १५ ॥

नलिन्यां दीर्घिकायां च मृत्स्नामेकोनविंशतिम् ।

मृदः प्रमाण चूर्णविभागश्च

मृत्स्नाभिर्मुष्टिमात्राभिः पूर्वोक्तां मिश्रयेन्मृदम् ॥ १६ ॥

पूर्वोक्त[4]मानैस्त्रिफलैः चूर्णैस्तां मिश्रयेत्पुनः । तत्त्रिभागैकभागैश्च [5]कटशर्करचूर्णितैः ॥ १७ ॥

नादेयैः श्लक्ष्णपाषाणैः मृत्तयाँशैश्च चूर्णितैः ।

योजनीयसुरभिद्रव्याणि

चन्दनं कुङ्कुमं कोष्ठं श्रीवेष्टं हरिचन्दनम् ॥ १८ ॥

गुग्गुलुं च निशां शुष्कां हरितालं मनःशिलाम् । तमालपत्राण्येतानि चन्दनादीनि [6]चूर्णयेत् ॥ १९ ॥

मृद्विंशत्येकभागैस्तैश्चूर्णैस्तत्तुल्यसैकतैः । सूक्ष्मैश्च मिश्रयेन्मृत्स्नां कपित्थरस[7]तुर्यकैः ॥ २० ॥

चूर्णितैर्लोहरत्नैश्च मिश्रयित्वा तु मृत्तिकाम् ।

---

1. म वैभीतिका 2. म. षड्द्विगुणा. 3. श्री. म· शोष्यवेदिकतीरयो· 4. म. मात्रैः. 5. म. कटि. 6. म. चूर्णितैः. 7. म. तुल्यकैः.

समिश्रणीयस्नेहद्रवद्रव्याणि

मधुतैलदधिक्षीरघृतैः शुक्तिप्रमाणकैः ॥ २१ ॥

अतसीतैल [1]संमिश्रैः पुनः संमिश्रयेन्मृदम् ।

संस्कृतमृदः अधिवासः

इत्थं तु संस्कृतां मृत्स्नां निक्षिप्य नवभाजने ॥ २२ ॥

आच्छाद्य नववस्त्रेण भाण्डं धान्येषु निक्षिपेत् । अर्चयेन्मूलमन्त्रेण [2]मृद्भाण्डान् देशिकोत्तमः ॥ २३ ॥

[3]सर्पिषा जुहुयादग्नौ मूलेनाष्टोत्तरं शतम् । चरुं पुरुषसूक्तेन प्रत्यृचं [4]जुहुयाद् बुधः ॥ २४ ॥

संपाताज्येन [5]सिञ्चेत्तां मृदं [6]भाजनसंस्थिताम् ।

अधिवासवेला

सद्यो वा निशि वा मृत्स्नामधिवास्य यथाविधि ॥ २५ ॥

लेपनक्रमस्तद्विद्या च

मुहूर्ते शोभने [7]बिम्बे प्रलिम्पेन्मृत्तिकां [8]गुरुः । आमौलिकण्ठपर्यन्तमालिम्पेद्व्योमविद्यया ॥ २६ ॥

[9]आकण्ठनाभिपर्यन्तं विलिम्पेद्वायुविद्यया । *आनाभि कटिपर्यन्तं लेपयेद्वह्निविद्यया ॥ २७ ॥

आकटेर्जानुपर्यन्तमालिम्पेद्वारिविद्यया । आजानुकटिपर्यन्तं प्रलिम्पेद् भूमिविद्यया ॥ २८ ॥

आनाभिकण्ठमालिम्पेत् पुनः श्वसनविद्यया । नाभ्यादिगुह्यपर्यन्तमालिम्पेच्छिखिविद्यया ॥ २९ ॥

गुह्यादिजानुपर्यन्तमालिम्पेद्वारिविद्यया । जानुप्रभृति पादान्त[10]मालिम्पेत्क्षितिविद्यया ॥ ३० ॥

देव्यादीना मृदालेपे विद्यानिर्देश.

देवीनां च श्रियादीनां ब्रह्मादीनां तथैव च । आलेपनं प्रकुर्वीत कालेऽस्मिन् भूतविद्यया ॥ ३१ ॥

गुरवे दक्षिणा देया स यथा तुष्टिमाप्नुयात् ।

रज्वादिवेष्टनम्

बिम्बस्य नाहमानं यच्छूलमानमपोह्य तत् ॥ ३२ ॥

अष्टधाकृत्य तेषु त्रीन् [11]रज्वा चावेष्टयेद्गुणान् । मृद्भिरालेपयेत् त्र्यंशं द्वौ वस्त्रकटुशर्करैः ॥ ३३ ॥

नारिकेलत्वचा मृत्स्नां द्वितीयां मिश्रयेत् पुनः । क्रमेण परिमाणं च मुखबाहूरुवक्षसाम् ॥ ३४ ॥

नाडीकल्पनम्

नाडीमिडां पिङ्गलां च सुषुम्नां तन्तुभिः कृताम् । सितपीतारुणैस्ताभिर्वेष्टयेद्विष्णुविग्रहम् ॥ ३५ ॥

---

1. श्री. म. सहितैः 2 म मृद्भाण्ड. 3 म आज्येन 4. म षोडशाहुतीः. 5. म. संसिञ्चेत्. 6. म. भाजने स्थिताम्. 7. श्री म शूले 8 म. सुधी 9 म. कर्णादारम्यनाभ्यन्तं.
* म. ग्रन्थे. इतश्चत्वारोऽर्धश्लोका. न दृश्यन्ते. 10. म. मालेपः. 11. म. रज्जून् वेष्टयेत्.

नलिकेरत्वचं [1]सूक्ष्मं छित्वा छित्वा च मृत्तिकाम् । तृतीयां मिश्रयेत्तां च लेपयेत्पूर्वशोषणे ॥ ३६ ॥
हस्तं च साङ्गुलोपेतं कृत्वा लोहेन बन्धयेत् । कर्णावर्तं ततः कृत्वा लोहेन परिविन्यसेत् ॥ ३७ ॥
शरीरपोषणं कुर्याच्छिद्ररन्ध्रविवर्जितम् ।

## मृत्तिकाकटशर्करयोर्लेपने विधिः

हस्तेन मृत्तिकां दद्यात्कूर्चेन [2]कटुशर्कराम् ॥ ३८ ॥
कटुशर्करचूर्णानि त्रिफला [3]कृषिताम्भसा । पिष्ट्वाऽपूपाकृतिं कृत्वा शोषयेदातपेन [4]ताः ॥ ३९ ॥
पुनः संपेषयेत्पिण्डान् कपित्थरसवारिणा । चतुस्त्रिः पञ्चकृत्वो वा कृत्वैवं पेषयेत्पुनः ॥ ४० ॥
कार्पासतूलमिलितान् कपित्थरसवारिणा । तावत्संपेषयेद्यावद्बाहुभ्यां बाहुमात्रकम् ॥ ४१ ॥

## पिष्टकल्पनम्

पुत्रिकायाः समुद्धारे पेषणेन पतेद्यदि । कल्पं सुपिष्टं कूर्चेन शनैरेव परामृशेत् ॥ ४२ ॥
ततः करण्डिकाग्रेण लिप्ताङ्गानि च लेपयेत् । पूर्णेष्वङ्गेषु सर्वेषु पटेनाच्छादयेद् दृढम् ॥ ४३ ॥
[5]कार्पासजं दृढं चेलं लोमादिभिरदूषितम् । धान्यराशिषु संस्थाप्य वाचयित्वाशिषं पुनः ॥ ४४ ॥
[6]धान्येन शुद्धिं संपाद्य पूजयेद्वायुविद्यया । मूलमन्त्रेण जुहुयात् समिदाज्येन वै शतम् ॥ ४५ ॥
चरुं पुरुषसूक्तेन जुहुयात्षोडशाहुतीः । मुहूर्ते शोभने प्राप्ते पटेनाच्छाद्य लेपयेत् ॥ ४६ ॥
[7]या शर्करा पटे तस्मिन् [8]तयैवाकल्पयेत्ततः । शुक्लमृत्तिकयालेपः कपित्थरसमिश्रया ॥ ४७ ॥

## वर्णलेपविधि

वर्णलेपं ततः कुर्याच्छिल्पिशास्त्रविचक्षणैः । श्वेतं पीतं तथा रक्तं हरितं कृष्णमेव च ॥ ४८ ॥
पञ्चवर्णं पृथिव्यादिवर्णानामधिदेवताः । उत्तमा धातवः प्रोक्ता मध्यमा वृक्षसम्भवाः ॥ ४९ ॥
संयोगजाः स्युरधमास्त्रैविध्यमपरं शृणु । वर्णं [9]चाप्यसुवर्णं च संस्कारं च तथैव च ॥ ५० ॥
त्रिविधो वर्णसंयोगः [10]शास्त्रेषु समुदीरितः । वर्ण इत्युच्यते शुद्धो राजवत्तानि कारयेत् ॥ ५१ ॥
अनुकारे च ये वर्णाः प्रायशः शुद्धिवर्जिताः । अनुवर्णा इमे प्रोक्ताः [11]सङ्कीर्णान् कथयामि ते ॥ ५२ ॥
शुक्लो रक्तश्च पीतश्च [12]कृष्णश्चैव चतुर्विधः । सङ्करास्त्वेव चत्वारः प्रत्येकं द्विविधाः स्मृताः ॥ ५३ ॥
शुक्लश्चैव वलक्षश्च श्वेतो द्विविध उच्यते । शङ्खगोक्षीरकुन्दाभः शुक्ल इत्यभिसंज्ञितः ॥ ५४ ॥

---

1. श्री. म. सार. 2. म. कटि 3. श्री. म. रूषिता. 4. म. ताम् 5 म. कार्पासिकं.
6. म. ध्यानेन. 7. म. कटुशर्करा. 8. म, तथैव. 9. म. चाप्यनुवर्णं च संकरं.
10. श्री. शास्त्रेऽस्मिन् प्रतिपादिताः. 11. श्री. म. सकरानपरान् शृणु. 12. श्री. म. कृष्णश्चेति.

मुक्तास्फटिक [1]चन्द्राभो वलक्ष इति संज्ञितः । रक्तश्चाप्यरुणः शोण इति भेदेन कथ्यते ॥ ५५ ॥
जपाशोणितसङ्काशो रक्तवर्णोऽरुणो मतः । किंशुकाशोकसंकाशः शोण इत्यभिधीयते ॥ ५६ ॥
हरितश्चैव पीतश्च पीतवर्णो द्विधा भवेत् । मनःशिलाहरीतालनिभो हरित उच्यते ॥ ५७ ॥
हरिद्राकुङ्कुमाभस्तु पीत इत्यभिसंज्ञितः । श्यामश्च कृष्णवर्णश्च कृष्णवर्णो द्विधा भवेत् ॥ ५८ ॥
दूर्वामरकताभश्च श्याम इत्यभिसंज्ञितः । इन्द्रनीलनिभः कृष्णः कृष्णवर्णः प्रकीर्तितः । ५९ ॥
शुक्लेन मिश्रितो रक्तो बभ्रुरित्यभिधीयते । शुक्लेन मिश्रितः कृष्णो करालः परिकीर्तितः ॥ ६० ॥
पीतेन मिश्रितः कृष्णः काल इत्यभि[2]धीयते । पीतकृष्णयुतः शुक्लः कर्बुरः समुदाहृतः ॥ ६१ ॥
एवं सङ्करजान् वर्णानूहापोहेन योजयेत् । उक्तोऽयं वर्णसंक्षेपस्तैः कुर्या[3]च्चोदितैः क्रमात् ॥ ६२ ॥

## मूर्तिकल्पनपरिपाटी

प्रथमो दारुसङ्घातो द्वितीयो रज्जुवेष्टनम् । मृदालेपस्तृतीयस्तु तुरीयं नाडिबन्धनम् ॥ ६३ ॥
पञ्चमो रज्जुवेष्टः स्यान्नालिकेरत्वचा पुनः । मिश्रिता मृत्तिका षष्ठी सप्तमं रज्जुवेष्टनम् ॥ ६४ ॥
अष्टमः शर्करालेपो नवमं पटयोजनम् । भूषणं दशमं प्रोक्तं एकादशमतः परम् ॥ ६५ ॥
शुक्लालेपनमुद्दिष्टं द्वादशं वर्णयोजनम् । द्वादशैस्ते च निर्दिष्टाः प्रतिमाकरणेऽ[4]म्बुज ॥ ६६ ॥

## लेपनशोषणावधिः

कालेन वर्षमात्रेण वस्तु शुष्यति नान्यथा ।

## विध्यनुसारशुष्कमूर्तेरायुः

सहस्रं वत्सरान् याति मासैर्द्वादशभिः कृतैः ॥ ६७ ॥
द्वाभ्यामयुतमायुः स्यात् त्रिभिर्लक्षं प्रतिष्ठितम् । [5]हेम्नैव पोषणं सर्वं वर्णानां दीप्तिकारकम् ॥ ६८ ॥
आलेख्ये च पटे भित्तौ लिखिते फलकेऽपि च । वर्णयोगः समुद्दिष्टो द्रव्योत्पत्तिस्तथैव च ॥ ६९ ॥

## युगभेदेन मूर्तीना वर्णभेदः

मूर्तीनां युगभेदेन वर्णभेदो विधीयते । कृते वलक्षस्त्रेतायामरुणो द्वापरे पुनः ॥ ७० ॥
पीतः कलौ घनश्यामो वासुदेवः परः पुमान् । रक्तः सङ्कर्षणो देवः प्रद्युम्नः कनकप्रभः ॥ ७१ ॥
श्यामोऽनिरुद्धः कथितः कृतादिषु चतुर्ष्वपि ।

## द्वादशमूर्तिवर्णाः

केशवः कनकप्रख्यः स्यादर्जुन समाकृतिः ॥ ७२ ॥

---

1. श्री. वर्णाभो. 2. श्री सज्ञितः. 3 श्री द्बोधितै 4. श्री अब्नज. 5. श्री होमेन पेषणं.

नारायणः श्यामवर्णो माधवः स्फटिकप्रभः । गोविन्दः पद्मकिञ्जल्कनिभो विष्णुरुदाहृतः ॥ ७३ ॥

अरुणाम्बुजसङ्काशो मधुसूदन उच्यते । त्रिविक्रमः शिखिनिभो वामनो बालसूर्यवत् ॥ ७४ ॥

श्रीधरः सितपद्माभो हृषीकेशस्तटित्प्रभः । पद्मनाभः श्यामवर्णो बन्धूककुसुमच्छविः ॥ ७५ ॥

दामोदरो द्वादशैते कथिताः केशवादयः ।

चतुर्विंशतिमूर्तिवर्णाः

वासुदेवादिमूर्तीनां ये वर्णाः पूर्वमीरिताः ॥ ७६ ॥

स एव वासुदेवादिचतुर्णां तद्ध्रुवामपि । शुद्धस्फटिकसंकाशो विज्ञेयः पुरुषोत्तमः ॥ ७७ ॥

अधोक्षजः श्यामवर्णो नृसिंहो हेमसन्निभः । पीतवर्णोऽच्युतोऽतीव रक्तवर्णो जनार्दनः ॥ ७८ ॥

उपेन्द्रः श्यामलः प्रोक्तो हरिः पीतनिभः स्मृतः । कृष्णः कृष्णाम्बुदप्रख्यश्चतुर्विंशति मूर्तयः ॥ ७९ ॥

श्रियादिदेवीनां वर्णाः

सुवर्णनिकशाभा श्रीः श्यामा भूरर्जुनच्छविः । सरस्वती [1]सितारक्ता प्रीतिः श्यामनिभाकृतिः ॥ ८० ॥

कीर्ती रक्ता भवेच्छान्तिः स्फटिकाभा समीरिता । तुष्टिःपीता भवेत्पुष्टिः श्यामा देव्यः [2]स्मृतास्तु ताः ॥

मत्स्यादिमूर्तीनां वर्णाः

मत्स्यः स्फटिकसङ्काशः कूर्मः काञ्चनसन्निभः । वराहः श्यामलनिभो वलक्षाकृतिरेव वा ॥ ८२ ॥

नृसिंहश्चन्द्रवर्णाभः प्रह्लादः काञ्चनप्रभः । वामनः श्यामलनिभः कालवर्णो महाबलिः ॥ ८३ ॥

जामदग्न्यः सुवर्णाभः राघवः श्यामलाकृतिः । भरतः श्यामलो वर्णो लक्ष्मणः कनकप्रभः ॥ ८४ ॥

शत्रुघ्नो रक्तवर्णाभः सीता हेमनिभाकृतिः । माण्डवी रक्तवर्णाभा ऊर्मिला श्यामलप्रभा ॥ ८५ ॥

श्रुतकीर्तिः सिताङ्गी च हनूमान् कनकप्रभः । अङ्गदो रक्तवर्णाभः सुग्रीवो हेमपिङ्गलः ॥ ८६ ॥

गुहश्च नीलवर्णाभः कालवर्णो विभीषणः । नीलो नीलनिभः प्रोक्तो जाम्बवान् कनकप्रभः ॥ ८७ ॥

बलः क्षीरनिभश्चैव रक्तवर्णा च रेवती । मेघश्यामो भवेत्कृष्णो रुक्मिणी कनकप्रभा ॥ ८८ ॥

सत्यभामा भवेत्श्यामा कल्की रक्तनिभः स्मृतः ।

अनन्तगरुडादीनां वर्णाः

अनन्तः क्षीरसङ्काशो यद्वा हेमसमाकृतिः ॥ ८९ ॥

गरुडः कनकप्रख्यो ब्रह्मा कनकसन्निभः । विष्णुः श्यामनिभः प्रोक्तो रुद्रः शोणितसन्निभः ॥ ९० ॥

हयग्रीवो वलक्षः स्यात् सेनानीः श्यामलाकृतिः । रक्तवर्णो भवेच्चण्डः प्रचण्डः श्वेतसन्निभः ॥ ९१ ॥

---

1. श्री. म. रती.  2. श्री. म. स्मृता इमाः.

जयः पीतस्ततः श्यामो विजयः पद्मसन्निभः । *पद्मी गदाधरो हेमः कृष्णः खड्गधरो भवेत् ॥ ९२ ॥
शार्ङ्गधारी हेमनिभः श्वेतो वज्रधरो मतः । श्यामो मुसलधारी स्यात्पाशधृक्कनकप्रभः ॥ ९३ ॥
कृष्णोऽङ्कुशधरो धाता रक्तपीतवपुर्धरः । विधाता धवलो भद्रः सुभद्रो ह्यरुणच्छविः ॥ ९४ ॥
कृतान्तः श्यामलो रक्तः सुरविध्वंसनः स्मृतः । कुबेराक्षो भवेत्पीतः कुबेरो रक्तदेहभृत् ॥ ९५ ॥
† सम्भवः श्यामलः प्रोक्तः प्रथमो रक्तसन्निभः । सुशोभनो भवेच्छ्यामः सुभद्रः श्वेतवर्णभाक् ॥९६॥
कुमुदः श्वेतवर्णाभः कुमुदाक्षोऽग्निसन्निभः । पुण्डरीकः सितः प्रोक्तो वामनः श्यामलाकृतिः ॥९७॥
रक्तो भवेच्छङ्कुकर्णः सर्वनेत्रोऽसितप्रभः । सुमुखः श्यामलः प्रोक्तो रक्ताभः सुप्रतिष्ठितः ॥ ९८ ॥
रक्तः सूर्यः सितश्चन्द्रो भौमो रक्तः सितो बुधः । बृहस्पतिः सुवर्णाभः शुक्रः शुक्लश्शनैश्वरः ॥ ९९ ॥
कृष्णस्ताम्रस्तथा राहुः केतुः कृष्ण उदाहृतः । कामो रक्तः सितो हस्तिवक्त्रो रक्तः षडाननः ॥ १०० ॥
दुर्गा श्यामा सुवर्णाभो धनदः क्षेत्रपालकः । नीलो ब्राह्मी सुवर्णाभा रक्ता माहेश्वरी भवेत् ॥ १०१ ॥
कौमारी रक्तवर्णाभा वैष्णवी श्यामलप्रभा । वाराही श्यामवर्णाभा इन्द्राणी श्यामलाकृतिः ॥ १०२॥
चामुण्डा रक्तवर्णाभा वीरभद्रोऽरुणद्युतिः । ज्येष्ठा नीला भवेदिन्द्रः श्यामोऽग्निररुणप्रभः ॥ १०३ ॥
यमः कालोऽथ निर्ऋतिर्नीलः श्यामः [1]प्रचेतनः । वायुर्धूम्रः [2]सितश्चेन्दुः रक्तो रुद्र उदाहृतः ॥ १०४ ॥
पुरुषः श्यामलो हेमद्युतिः स्यादच्युतः स्मृतः ।

वसूनां वर्णसङ्ग्रहः

सितो रक्तस्तथा पीतः श्यामो रक्तः सितप्रभः ॥ १०५ ॥
बभ्रः पीतो धरादीनां वसूनां वर्णसङ्ग्रहः ।

पितॄणा वणसङ्ग्रहः

रक्तः श्वेतः प्रभा पीतः श्यामः श्वेतोऽरुण[3]प्रभः ॥ १०६ ॥
बभ्रुः पितॄणां वर्णोऽयं क्रमेण समुदाहृतः ।

मरुता वर्णसङ्ग्रहः

धूम्रो रक्तस्तथा पीतः श्यामः श्वेतोऽरुणोऽसितः ॥ १०७ ॥

---

* सितासितनिभौ स्याता शंखपद्मनिधी उभे । एष अर्धश्लोकः एतत्स्थाने श्री. ग्रन्थे एव अत्र दृश्यते.

† दुर्जय कृष्णवर्णाभ प्रलम्ब श्वेतसन्निभ' । स्याद्विश्वभावनो रक्त. पुष्करः श्वेतवर्णधृत् ॥ एष श्लोकः इत. पूर्व श्री. ग्रन्थे दृश्यते.

1. म. प्रचेतस'. 2. म. सितः सोमो. 3. श्री. द्युतिः.

वर्णोऽयं मरुतामुक्तः सप्तानामानुपूर्वशः ।

—ऋषीणा वर्णसङ्ग्रहः—

कनकश्यामलः पीतः कृष्णो रक्तः सितोऽसितः ॥ १०८ ॥

वर्णः क्रमेण सप्तानामृषीणां समुदाहृतः । रक्तः पीतः सितःश्यामो रक्तपीतः सितासितः ॥ १०९ ॥

विश्वादिपरिवाराणां वर्णानुक्रमणं स्मृतम् ।

—आदित्यानां वर्णाः—

रक्तः पीतोऽरुणः श्यामो श्वेतो बभ्रुश्च कर्बुरः ॥ ११० ॥

[1]वर्णतो हरितः श्वेतः [2]शोणः कुन्दनिभस्तथा । आदित्यानामयं वर्णो द्वादशानां क्रमात्स्मृतः ॥१११॥

—अप्सरसां वर्णसङ्ग्रहः—

श्वेताभा कनकाभा च श्यामा च कनकप्रभा । रक्ता कृष्णा च पीता च रूपमप्सरसां मतम् ॥ ११२ ॥

—रुद्राणां वर्णाः—

शोणश्च हरितो नीलः श्वेतः श्यामलदीधितिः । पीतः कालस्तथा बभ्रुः वर्णकः पाटलोऽसितः ॥ ११३ ॥

एकादशानां रुद्राणां वर्णोऽयं समुदीरितः ।

—अश्विनोर्वर्णः—

अश्विनौ चारुणौ पीतौ मार्कण्डेयस्तथा भवेत् ॥ ११४ ॥

—नारदभृग्वादीनां वर्णाः—

नारदः स्फटिकः पीतो भृगुर्दक्षस्तथाऽसितः । रक्तो मनुः सनन्दश्च श्यामलः [3]कनकस्तथा ॥ ११५ ॥

पीतः सनत्कुमारश्च रक्तो हाहा च पीतलः । हूहू रक्तस्तथा श्यामस्तुम्बुरुः किन्नरः शुकः ॥ ११६ ॥

रक्तः किंपुरुषः श्यामश्चित्रसेनस्तथा भवेत् । पीतो विश्वावसुः प्रोक्तो मधुश्च [4]मधुवर्णकः ॥ ११७ ॥

कैटभः श्यामलः प्रोक्तो वर्णोऽनुक्तोऽवगम्यताम् ॥ ११८ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे देवतावर्णविधिर्नाम चतुर्दशोऽध्यायः ॥

## पञ्चदशोऽध्यायः ।

—स्थितादिमूर्तिनिर्देशः—

श्रीभगवान्—

भेदानथातो वक्ष्यामि प्रतिमासु स्थितादिषु । स्थितामूर्तिस्तथासीना यानारूढा तथैव च ॥ १ ॥

1. म. वर्णको. 2. म. श्वेत. 3. श्री. सनक. 4. श्री. सित.

[1]तास्तिस्रो द्विविधाः प्रोक्ता भोगयोगप्रभेदतः । शयानस्य तु पूर्वोक्तौ सर्वसंहारकारिणौ ॥ २ ॥
द्वौ चापरौ चतुर्भेदः शयानः कमलासन । एकैका [2]द्वित्रिधा भेदा उत्तमाधममध्यमाः ॥ ३ ॥

भोगमूर्तिस्तत्रोत्तमा

दिव्ये [3]भोगे स्थितं देवं शङ्खचक्रगदाधरम् । श्रीभूमिसहितं युक्तमर्चनापीठपार्श्वयोः ॥ ४ ॥
सनन्दसनकर्षिभ्यां कृताञ्जलिपुटौ स्थितौ । उत्थितौ वामजानुभ्यामितराभ्यां प्रतिष्ठितौ ॥ ५ ॥
पादयोरुभयो[4]रग्रे तावुभौ कारयेत्सुधीः । अर्चनापीठिकापार्श्वभूतलेष्वेवमासनम् ॥ ६ ॥
दक्षिणोत्तरयोर्भित्तिपार्श्वयोर्ब्रह्मशङ्करौ । पृष्ठतः पुष्पवन्तौ तौ दक्षिणोत्तरपार्श्वयोः ॥ ७ ॥
भित्तिं समाश्रितौ कुर्यात्सनन्दसनकौ तथा । बालवेषधरौ वामं प्रसार्य चरणं [5]स्थितौ ॥ ८ ॥
निकुञ्च्य दक्षिणं पादं दक्षिणं करमुत्क्षिपन् । सनालमम्बुजं फुल्लं वामहस्ततले दधत् ॥ ९ ॥
सनकर्षिः सनन्दस्तु यथोक्तादन्यथास्थितिः । सूर्याचन्द्रमसौ [6]चापि करपादक्रमात्तथा ॥ १० ॥
चामरव्यजने भित्तौ श्वेतच्छत्रे च मौक्तिके । भित्तिपार्श्वे प्रभां कुर्याद्यथालक्षणसंयुताम् ॥ ११ ॥
कल्पकानोकहं पृष्ठे भित्तिपार्श्वे प्रकल्पयेत् । भित्तिपार्श्वे तु पुरतो रतिशान्ती प्रकल्पयेत् ॥ १२ ॥
संवीजयन्त्यौ तं देवं चामराभ्यां चतुर्मुख । हाहा हूहूश्च गन्धर्वौ गरुडो नारदस्तथा ॥ १३ ॥
देवताश्चापि मुनयः सन्ति यत्र निकेतने । भोगस्थानं तु तद्विद्यादुत्तमं कमलासन ॥ १४ ॥

मध्यमा भोगमूर्तिः

महीस्थाने पतत्रीन्द्रं महीं च सनकासने । मार्कण्डेयासनान्ते तु आभासौ ब्रह्मशङ्करौ ॥ १५ ॥
अन्ये च यत्र पूर्वोक्ताः भोगस्थाने स मध्यमः ।

जघन्या भोगमूर्तिः

देवश्चतुर्भुजः सार्धं श्रीधराभ्यामवस्थितः ॥ १६ ॥
दक्षिणे वरदं वामं सिंहकर्णमथापि वा । ऊरुमूलाश्रितं वापि शङ्खचक्रधरौ परौ ॥ १७ ॥
ब्रह्मेशानौ तु साभासौ सर्वमन्यद्यथोदितम् । भोगस्थाने यत्र भवेज्जघन्यं तत्प्रचक्षते ॥ १८ ॥

योगस्थानमूर्तिलक्षणं तत्रोत्तमम्

श्रीभूमिसहितो देवः शङ्खचक्रगदाधरः । अर्चनापीठिकापार्श्वे मार्कण्डेयो भृगुस्तथा ॥ १९ ॥
सर्वमन्यद्यथोक्तं च योगस्थानं तदुत्तमम् ।

---

1. म. तासु तिस्रो द्विधा. 2. म. त्रिविधा. 3. श्री. म. भागे. 4. म. रग्रं संयुक्तं. 5. म. स्थितः. 6. म. बापि.

मध्यमा योगमूर्तिः

नारदो द्रुहिणस्थाने शिवस्थाने खगेश्वरः ॥ २० ॥

अर्चनापीठपार्श्वे तु ब्रह्मेशानौ कृताञ्जली । यथोक्तमन्यत्सर्वं च योगस्थाने स मध्यमः ॥ २१ ॥

जघन्या योगमूर्तिः

देवश्चतुर्भुजो दिव्ये भागे ब्राह्मेऽथवा यदि । अभयं दक्षिणं हस्तं वरदं स्वागतं तु वा ॥ २२ ॥

ऊरुमूलाश्रयं वामं सपल्लवमथाऽपि वा । गदामुद्रमथो वापि शङ्खचक्रधरौ परौ ॥ २३ ॥

[1]ब्रह्मेशानादिरहितं नीचा सा योगसंस्थितिः ।

भोगासने तु आसीना मूर्तिः तत्र उत्तमा

स्थानप्रभेदः कथितः संप्रत्यासीन उच्यते ॥ २४ ॥

श्रीभूमिभ्यां सहासीनः सिंहविष्टरमाश्रितः । ब्रह्मेशानौ भित्तिपार्श्वे स्थितौ यद्वा सुखासनौ ॥ २५ ॥

भृगुं च [2]नारदं च द्वौ भित्तिपार्श्वे समाचरेत् । अर्चनापीठिकापार्श्वे रतिशान्ती कृताञ्जली ॥ २६ ॥

पृष्ठत[3]श्चन्द्रसूर्यौ च सर्वमन्य[4]द्यथोदितम् । भोगासनं तदुच्चैः स्यात् आसीनः सिंहविष्टरे ॥ २७ ॥

आसीना मध्यमा

वामोत्सङ्गे श्रियं देवीं समारोप्य चतुर्भुजः । वामहस्तेन चाश्लिष्य यद्वा भूमिं यथोदिताम् ॥ २८ ॥

साभासावर्धचित्रौ वा ब्रह्मेशौ भित्तिपार्श्वयोः । पूजासिकामुभयतः कार्यौ च भृगुनारदौ ॥ २९ ॥

दक्षश्चैव मनुश्चोभौ सचामरकरौ स्थितौ । पृष्ठतश्चन्द्रसूर्यादि भोगे मध्यममासनम् । ३० ॥

आसीना जघन्या

आसीनः सहदेवीभ्यां ब्रह्मेशौ भित्तिपार्श्वयोः । भित्तिपार्श्वे रतिःशान्तिः सवालव्यजने स्थिते ॥ ३१ ॥

भोगासनं तदधमं योगासनमथोच्यते ।

आसीने योगासनं तत्रोत्तमम्

सिंहासने सुखासीनं ब्रह्मेशौ भित्तिपार्श्वयोः ॥ ३२ ॥

रतिः सरस्वती च द्वे सितव्यजनवीजने । अर्चनापीठिकापार्श्वे [5]श्रीभूमी च कृताञ्जली ॥ ३३ ॥

पृष्ठतश्चन्द्रसूर्यादि [6]योगासनमिदं परम् ।

---

1. श्री. ब्रह्मेशानादिभ्या च रहितो. 2. श्री. नारदश्चोभौ. 3. श्री श्चन्द्रसूर्यादि. 4. श्री. द्यथापुरे. 5. म. श्रीभूम्यौ. 6. म. योगे तन्मध्यमासनम्.

—आसीनयोगे मध्यमम्—

सिंहासने सुखासीनं ब्रह्मेशौ भित्तिपार्श्वयोः ॥ ३४ ॥
आसीने श्रीमहीदेव्यौ सचामरकरे स्थिते । अर्चनापीठिकापार्श्वे श्रीभूम्यौ च कृताञ्जली ॥ ३५ ॥
दक्षश्चैव मनुश्चैव भित्तिपार्श्वे कृताञ्जली । पृष्ठतश्चन्द्रसूर्यादि योगे तन्मध्यमासनम् ॥ ३६ ॥

—जघन्यमासनम्—

सिंहासने सुखासीनो देव एकश्चतुर्भुजः । त्यक्त्वा सर्वं परिकरं चन्द्रसूर्यादि पृष्ठतः ॥ ३७ ॥
दिव्ये ब्राह्मेऽथवा भागे योगे तन्नीचमासनम् ।

—शेषासनं तत्रोत्तमम्—

शेषासनमथो वक्ष्ये यथावदवधारय ॥ ३८ ॥
सुवृत्तं भोगिनो भोगं मण्डलेन स्थितं त्रिवृत् । किञ्चिद् वृत्तायतं [1]वा तु समुन्नम्य स्थितं शिरः ॥ ३९ ॥
तत्र श्रीभूमिसहितो विष्टरे तु सुखासनः । रती सरस्वती च द्वे पूजाविष्टरपार्श्वयोः ॥ ४० ॥
* कृताञ्जलिपुटाः सर्वे शेषासनमिदं परम् ।

—शेषासने मध्यमम्—

देवश्चतुर्भुजासीनः वामोत्सङ्गार्पितप्रियः ॥ ४१ ॥
मार्कण्डेयो मही चैव पूजाविष्टरपार्श्वयोः । भृगुश्च नारदश्चैव तिष्ठतः सितचामरौ ॥ ४२ ॥
पृष्ठतश्चन्द्रसूर्यादि शेषे मध्यममासनम् ।

—जघन्यं शेषासनम्—

श्रिया देव्या समासीनः पूजा पीठस्य पार्श्वयोः ॥ ४३ ॥
ब्रह्मा च वसुधा चैव [2]धर्मो देवो वृषध्वजः । देवस्य पुरतः श्रीमान् मार्कण्डेयः कृताञ्जलिः ॥४४॥
पृष्ठतश्चन्द्रसूर्यादि शेषे तन्नीचमासनम् ।

—शयनासने उत्तमम्—

शेषासनभिदाः प्रोक्ताः शयनस्य भिदां शृणु ॥ ४५ ॥
अनन्तभोगशयने मृद्वास्तरणकल्पिते । सोपधाने शिरःपार्श्वे पादपार्श्वे तथैव च ॥ ४६ ॥
शीर्षेऽस्मिन् भोगमास्थाय परमात्मा सनातनः । देव्योरुत्सङ्गयोः पादौ प्रसार्य सुखवाहनौ ॥ ४७ ॥

---

1. श्री. वाऽपि.

* इत. पूर्व "देवैर्देवगणैश्चैव ऋषिभि. भित्तिपार्श्वयो." इति श्री ग्रन्थे अर्धश्लोक. अधिकतया दृश्यते.

2. म. यद्वा.

देव्यौ देवस्य वक्त्राब्जं वीक्षमाणे सुखासने । अर्चनापीठपार्श्वे तु रतिशान्ती कृताञ्जली ।। ४८ ।।
इन्द्रादीन् पादपार्श्वे तु भित्तौ च परिकल्पयेत् । पृष्ठतो भित्तिपार्श्वे तु शाङ्गादीन् देहसंयुतान् ।। ४९ ।।
देवस्य मौलिपार्श्वे तु भित्तौ ब्रह्मादिमूर्तयः । सनन्दसनकाद्यन्यान् यथापूर्वं प्रकल्पयेत् ।। ५० ।।
देवस्य पुरतो भित्तौ हाहा हूहूस्तथैव च । चित्रसेनश्चित्ररथो नृत्तगीतक्रियापरौ ।। ५१ ।।
विष्णुलोकोद्भवाः कन्याः ब्रह्मलोकसमुद्भवाः । [1]रुद्रादिलोकजाः कन्याः नानाविभ्रमसंयुताः ।। ५२ ।।
तुम्बुरुर्नारदश्चैव गरुडः किन्नरस्तथा । वीणादिभिर्वादयन्तस्तथोपरि महर्षयः ।। ५३ ।।
चित्ररूपेण सर्वे स्युः शयने भोगमुत्तमम् ।

### शयने मध्यमम्

श्रीमह्यौ मूर्ध्नि पार्श्वे तु बाह्वोर्मूलं समाश्रिते ।। ५४ ।।
पादपार्श्वे रतिः शान्तिः पादस्पृष्टे सुखासने । सनत्कुमारसनकौ अर्चनापीठपार्श्वयोः ।। ५५ ।।
अर्धचित्रेण भित्तिस्थौ भोगशय्या तु मध्यमा ।

### जघन्यं शयनासनम्

श्रीः पादपद्मयुगलं कराभ्यां वाहयेत्सुखम् ।। ५६ ।।
अर्चनापीठिकापार्श्वे रतिश्चैव वसुन्धरा । चित्राभासेन कुड्यस्थे भोगशय्याऽधमा भवेत् ।। ५७ ।।

### शयने योगासन तत्रोत्तमम्

अनन्तभोगशयने त्यक्तसर्वपरिग्रहः । योगमास्थाय शयितः स्वयमेव परः पुमान् ।। ५८ ।।
श्रीवत्साङ्कः प्रसन्नास्यः नीलजीमूतसन्निभः । द्विभुजो योगशयनमुत्तमं समुदाहृतम् ।। ५९ ।।

### योगशयने मध्यमम्

सेवितो वैनतेयेन सन्निविष्टेन पार्श्वतः । चतुर्भुजः परिकैरन्यैः सर्वै[2]र्विवर्जितः ।। ६० ।।
मध्यमं योगशयनमुच्यते तच्चतुर्भुख ।

### जघन्यं योगशयनम्

द्वाभ्यां भुजाभ्यां सहितस्त्यक्तसर्वपरिग्रहः ।। ६१ ।।
अर्चनापीठिकापार्श्वे श्रीभूमी तु कृताञ्जली । अधमं योगशयनं संहारशयनं शृणु ।। ६२ ।।

### संहारशयने उत्तमम्

अनन्तभोगशयने अनन्तफणमण्डिते । शयितोऽष्टभुजो देवः भ्रुकुटीकुटिलाननः ।। ६३ ।।

---

1. श्री. इन्द्रा. 2. श्री. विवर्जिभिः.

दंष्ट्राकरालं बिभ्राणो मुखमेकं भयानकम् । प्रलयाम्भोधिनिर्घोषगम्भीरभयदध्वनिम् ॥ ६४ ॥
वमन्तमान्तरं वह्निं मुखवायुसमीरितम् । संहारशयनं श्रेष्ठमिदमाहुर्मनीषिणः ॥ ६५ ॥

संहारशयने मध्यमम्

दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् । चतुर्भुजं [1]गदाखड्गशङ्खपद्मविभूषितम् ॥ ६६ ॥
अर्चनापीठिकापार्श्वे श्रीखगेन्द्रौ कृताञ्जली । मध्यमा संहृतौ शय्या कनिष्ठं शयनं शृणु ॥ ६७ ॥

कनिष्ठ सहारशयनम्

* केशैरलकसङ्घैश्च विराजितशुभाननम् । नीलजीमूतसङ्काशं मध्ये [2]हरितपङ्कजम् ॥ ६८ ॥

उत्तमा सर्गशय्या

सर्गशय्या चतुर्दिक्षु भित्तौ वारिनिधिं लिखेत् । ब्रह्माणं च चतुस्तालं शयनाद्भित्तिपार्श्वतः ॥ ६९ ॥
उपरिष्टादभिमुखं नाभेर्नारायणस्य च । चतुर्मुखं चतुर्बाहुं जटामुकुटसंयुतम् ॥ ७० ॥
द्वाभ्यां कराभ्यां [3]मुख्याभ्यां कृताञ्जलिपुटं स्थितम् । दर्शयन्तं कराभ्यां वा योगमुद्रां चतुर्मुख ॥ ७१ ॥
[4]उत्तराभ्यामुदस्ताभ्यामक्षमालां सकुण्डिकाम् । धारयन्तं सरसिजे स्वस्तिकासनबन्धनम् ॥ ७२ ॥
देवस्य [5]शिरसः पृष्ठे श्रियं तस्याक्षिलक्षिताम् । वामजानुं समुन्नम्य दक्षिणेन प्रतिष्ठिताम् ॥ ७३ ॥
दक्षिणं पुष्पहस्तं तु वामहस्तं वसुप्रदम् । अनन्तशयनेऽधस्तात् पूजापीठस्य पार्श्वयोः ॥ ७४ ॥
नारदं सनकं चैव मानुषे तु कृताञ्जली । पादपार्श्वे महीं देवीं पादस्पृष्टां तु कारयेत् ॥ ७५ ॥
उपरिष्टात् [6]समुद्राणां शङ्खादीन् देहसंयुतान् । देवस्य पृष्ठभित्तौ तु देहलब्धाङ्गुलेन च ॥ ७६ ॥
चतुर्विंशाङ्गुलो[7]त्सेधान् शङ्खाद्यायुधधारिणः । शङ्खचक्रगदाखड्गधनुःपञ्चायुधानि च ॥ ७७ ॥
द्विहस्तान् पुरुषाकारान् स्वचिह्नाङ्कितमस्तकान् । शङ्खाधारं प्रकुर्वीत लम्बकुक्षिं सितप्रभम् ॥ ७८ ॥
रक्तवर्णं विवृत्ताक्षं कुर्याच्चक्रधरं परम् । गदाधरं महाकायं वृत्ताक्षं पीतलप्रभम् ॥ ७९ ॥
स्त्रीवेषा खड्गधारी तु सुस्तना श्यामलप्रभा । शार्ङ्गधृग्घेमवर्णाभः महाकायो महोदरः ॥ ८० ॥
वैनतेयः सुवर्णाभः पक्षमण्डलमण्डितः । नानाकञ्चुकसंयुक्ताः नानाम्बरधरा इमे ॥ ८१ ॥
दंष्ट्राकरालवदनाः भ्रुकुटीकुटिलेक्षणाः । करण्डिका मुकुटिनः सर्वाभरणभूषिताः ॥ ८२ ॥
वामैः करैस्तर्जयन्त इतरैर्बद्धमुष्टयः । धावन्तोऽभिमुखं सर्वे मधुकैटभयोर्द्वयोः ॥ ८३ ॥

---

* "इत पूर्व बालरूप सपुष्टाङ्ग बालभूषणभूषितम् ।" इति श्री म. ग्रन्थद्वयेऽपि अधिकतया दृश्यते । 1 म. शंखचक्राचाप 2 म. वारिनिधेऽब्जज 3 म. मूर्धन्यां. 4. म. इतराभ्यां. 5. श्री. पुरतः. 6. म. समुद्रस्य. 7. म. त्सेध.

अधस्तात्पादयोः पार्श्वे कारयेन्मधुकैटभौ । * मधुश्यामौ महाकायौ करण्डिमुकुटोज्वलौ ॥ ८४ ॥
जानुमात्रं समुद्रस्थौ खड्गदण्डायुधोद्यतौ । दंष्ट्राकरालवदनौ भ्रुकुटीकुटिलेक्षणौ ॥ ८५ ॥
अनन्तफणिवक्त्राग्निज्वालाभिः परितापितौ । भीतौ पलायितौ वज्रकल्पैर्मुष्टिभिराहतौ ॥ ८६ ॥
देवस्य पूर्वभित्तौ तु प्रादुर्भावान् प्रकल्पयेत् । पुष्टिस्तुष्टिस्तथा कीर्ती रतिः शान्तिः सरस्वती ॥ ८७ ॥
प्रसूनमञ्जरीहस्ताः सितचामरवीजनाः । सर्वेषामुपरिष्टात्तु कुर्याज्जलदपद्धतिम् ॥ ८८ ॥
उपरिष्टाच्च मेघानां देवाश्च ऋषयस्तथा । इन्द्रादयश्च दिक्पालाः ऋषयः सप्त दण्डिनः ॥ ८९ ॥
सोत्तरीयाश्च सर्वे ते रचिताञ्जलयः स्थिताः । मूर्ध्नि पार्श्वे च विष्णुश्च रुद्रश्चैव चतुर्भुजौ ॥ ९० ॥
देवस्य पुरतो भित्तौ कुर्यान्मेघपथोपरि । हाहा हूहूश्च गन्धर्वौ किन्नरस्तुम्बुरुस्तथा ॥ ९१ ॥
[1]सर्वे चाप्सरसङ्घाता नृत्तगीतरताः सदा । अनन्तशयने रम्ये पूर्ववत्तत्र कल्पिते ॥ ९२ ॥
चतुर्भुजः श्यामवर्णः शङ्खचक्रगदाधरः । पीताम्बरधरः सौम्यः कर्णान्तायतलोचनः ॥ ९३ ॥
दक्षिणे च [2]भुजे मौलिं प्रसारिततलाङ्गुलौ । निधाय मौलिपट्टान्तं प्रसारितभुजेतरः ॥ ९४ ॥
[3]शयितो राजवद्देवः किञ्चिद् द्वारनिरीक्षकः । सर्वे चित्रेण रूपेण भित्तिस्थाः पूर्वमीरिताः ॥ ९५ ॥
उत्तमं सृष्टि[4]शयनमेतदाहुर्मनीषिणः ।

मध्यमा सृष्टिशय्या

बाहुद्वयसमोपेतः श्यामलः कोमलाकृतिः ॥ ९६ ॥
पृष्ठतः स्कन्धपार्श्वे तु [5]प्राक् च पद्मा [6]प्रतिष्ठिता । ब्रह्माणं भित्तिपार्श्वे तु चित्रेणैव प्रकल्पयेत् ॥९७॥
सनकं च महीं चैव पूजापीठस्य पार्श्वयोः । अर्धचित्रेण शेषाः स्युः सृष्टिशय्या तु मध्यमा ॥ ९८ ॥

कनीयसी सर्गशय्या

श्रियं महीमधस्ताच्च भूतले पीठपार्श्वयोः । ब्रह्माणं भित्तिपार्श्वे तु चित्राभासेन कल्पयेत् ॥ ९९ ॥
भुजद्वयसमोपेतः पद्मनाभश्चतुर्मुखः । प्रलयोदधिमध्यस्थः शयिता [7]विश्वकारणम् ॥ १०० ॥
आभासेनैव कुड्यस्था सर्गशय्या कनीयसी ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे स्थित्यासनादिभेदनिर्णयो नाम पञ्चदशोऽध्यायः ॥

---

* मधुकैटभदैत्यौ तौ सितश्यामवपुर्धरौ । एष अर्धश्लोक. श्री. ग्रन्थे अधिकतया दृश्यते.

1. म. सर्वाश्चात्सरससघान् नृत्तगीतरतान्. 2. म. भुजौ 3. म. शयिते. 4. म. शयने. 5. म. प्राग्वत्. 6. श्री. प्रकीर्तिता. 7. म. सृष्टि.

## षोडशोऽध्यायः ।

—यानारूढमूर्तिलक्षणं तत्र उत्तमम्—

श्रीभगवान्—

यानारूढस्य भेदोऽयं अधुना संप्रदर्श्यते । वैनतेयं सुवर्णाभं पक्षमण्डलमण्डितम् ॥ १ ॥
[1]नीलाग्रनासासंयुक्तं नागेन्द्राभरणैर्युतम् । स्कन्धे चारुह्य चरणं वाममाकुञ्च्य दक्षिणम् ॥ २ ॥
प्रसार्य चरणं देवो भुजाष्टकसमन्वितः । चक्रपद्मासिविशिखान् धारयन् दक्षिणैः करैः ॥ ३ ॥
शङ्खं कौमोदकीं चर्म चापमन्यैः करैर्दधत् । पृष्ठतो भित्तिपार्श्वे तु आतपत्रं सुरद्रुमम् ॥ ४ ॥
सनन्दसनकौ भित्तौ पार्श्वयोश्चन्द्रभास्करौ । यथा स्ववाहने देवाः समारुह्य स्थिता यदि ॥ ५ ॥
अर्चनापीठिकापार्श्वे श्रीमह्यौ तु कृताञ्जली । सुरासुरमुनीन् नागान् सिद्धविद्याधरांस्तथा ॥ ६ ॥
गन्धर्वाप्सरसो मेघान् कारयेद्भित्तिभूमिषु । सर्वे चित्रेण संयुक्ता यानारोहणमुत्तमम् ॥ ७ ॥

—मध्यमा मूर्तिः—

देवं चतुर्भुजं कृत्वा शङ्खचक्रगदाधरम् । वामोत्सङ्गे समारोप्य रतिं दाडिमसन्निभाम् ॥ ८ ॥
पाशाङ्कुशधरां देवीं कामविह्वललोचनाम् । अर्चनापीठिकापार्श्वे श्रियं भूमिं च कारयेत् ॥ ९ ॥
नारदश्च भृगुश्चैव कुड्ये चामरधारिणौ । प्रीतिं सरस्वतीं शान्तिं कल्पयेद्याम्य[2]भूमिषु ॥ १० ॥
पुष्टिं तुष्टिं च कीर्तिं च कुडये वामे तु कारयेत् । पुष्प[3]मञ्जरिहस्ताश्च सितचामरवीजनाः ॥ ११ ॥
अर्धचित्रेण वा सर्वे आभासेनैव वा [4]विधिः । मध्यमो वाहनारोहः शृणु नीचं चतुर्मुख ॥ १२ ॥

—जघन्या मूर्तिः—

चतुर्भुजं विशालाक्षं भिन्नाञ्जन[5]समप्रभम् । मुख्याभ्यां चैव हस्ताभ्यां शार्ङ्गपञ्चशरानपि ॥ १३ ॥
ऊर्ध्वाभ्यामितराभ्यां च शङ्खं चक्रं च धारयन् । निष्टप्तकनकप्रख्यां वामोत्सङ्गसमर्पिताम् ॥ १४ ॥
लावण्यामृततोयेन सिञ्चन्तीमिव [6]सर्वतः । दक्षिणं पुष्पहस्तं वा वामहस्तं वसुप्रदम् ॥ १५ ॥
अर्चनापीठिकापार्श्वे रतिं शान्तिं च कारयेत् । चित्राभासेन कुडयस्थाः नीचं यानाधिरोहणम् ॥ १६ ॥

—विश्वरूपमूर्तिः तत्र उत्तमा—

विश्वरूपं प्रवक्ष्यामि शृणु पङ्कजसम्भव । द्विपादमेककण्ठं च चतुर्दिक्षु चतुर्मुखम् ॥ १७ ॥
वासुदेवमुखादूर्ध्वं सर्वदेवमुखानि तु । सङ्कर्षणमुखादूर्ध्वं सर्वर्षीणां मुखानि च ॥ १८ ॥

---

1 म नास  2. श्री. भित्तिषु.  3. म. मञ्जलि.  4. म. विधेः.  5. म. चयप्रभम्. श्री. समद्युतिम्.  6. श्री. सर्वशः.

प्रद्युम्नस्य मुखादूर्ध्वं दैत्यदानवरक्षसाम् । अनिरुद्धमुखादूर्ध्वं नागगन्धर्वकिन्नराः ॥ १९ ॥
मुखान्येतानि चान्यानि यथाविभवमादरात् । कर्तव्यानि चतुर्वक्त्र [1]समर्थानि विचक्षणैः ॥ २० ॥
उपरिष्टाच्च वक्त्राणां किरीटमतिशोभनम् । कुर्याद्युगपदुद्भूतं सहस्रादित्यवर्चसम् ॥ २१ ॥
अनेकभुजसंयुक्तमनेकायुधभूषितम् । अर्चितं ब्रह्मरुद्राभ्यां भित्तिभूमिषु देवताः ॥ २२ ॥
चित्रेण सर्वे विहिताः विश्वरूपः स उत्तमः ।

## मध्यमा मूर्तिः

सर्वे यथोक्ताः कुडयस्थाः अर्धचित्रेण चेत्कृताः ॥ २३ ॥
सनन्दसनकौ कुर्यात्पूजापीठस्य पार्श्वयोः । मध्यमा विश्वमूर्तिः स्यात् जघन्यामपि संशृणु ॥ २४ ॥

## जघन्या विश्वमूर्तिः

आभासेनैव कुडयस्थाः देव्यौ पूजासने स्थिते । चतुर्भिर्बाहुभिर्युक्तः वासुदेवश्च शाश्वतः ॥ २५ ॥
मुख्याभ्यां धारयन् सव्यदक्षिणाभ्यां [2]गदाम्बुजे । ऊर्ध्वाभ्यामितराभ्यां तु शङ्खचक्रे यथातथम् ॥ २६ ॥
अथवा दक्षिणो हस्तः वरदोऽभयदोऽपि वा । गदां विना वामहस्तः कटिदेशावलम्बितः ॥ २७ ॥
द्विभुजो वा बहुभुजो युक्तोऽनेकैस्तथाननैः । एकेन वा सितो वर्णो वासुदेवः सनातनः ॥ २८ ॥
एवं नारायणोऽनादिर्नीलनीरदसन्निभः ।

## चतुर्विंशतिमूर्तिलक्षणम्

चतुर्विंशतिमूर्तीनां लक्षणं वक्ष्यतेऽधुना ॥ २९ ॥
केशवस्याम्बुजं शङ्खं चक्रं दण्डस्तथायुधम् । प्रादक्षिण्येन बाहूनां अन्येषामुच्यते क्रमात् ॥ ३० ॥
नारायणः शङ्खपद्मगदाचक्रधरः स्मृतः । माधवो गदया सार्धं चक्रशङ्खाम्बुजायुधः ॥ ३१ ॥
गोविन्दश्चक्रदण्डाब्जशङ्खायुधधरो भवेत् । विष्णुर्गदाब्जशङ्खारिधरः स्यान्मधुसूदनः ॥ ३२ ॥
चक्रशङ्खाब्जदण्डास्त्रधरः कार्यस्त्रिविक्रमः । पद्मदण्डारिशङ्खास्त्रो वामनः शङ्खचक्रधृक् ॥ ३३ ॥
गदाब्जपाणिश्च तथा श्रीधरो धृतवारिजः । सार्धं चक्रगदाशङ्खैः हृषीकेशमतः शृणु ॥ ३४ ॥
गदाचक्राब्जशङ्खास्त्रधरः पङ्कज[3]नाभकः । [4]पद्मचक्राम्बुजगदाधरो दामोदरः स्मृतः ॥ ३५ ॥
अब्जशङ्खगदाचक्रधरो द्वादशमूर्तयः । एताः कौमोदकीशङ्खचक्राम्भोजधराः स्मृताः ॥ ३६ ॥
वासुदेवो जगद्योनिः सङ्कर्षणमतः शृणु । गदाशङ्खाब्जचक्राणि धारयन्तं चतुर्भुजम् ॥ ३७ ॥
प्रद्युम्नः चक्रशङ्खाभ्यां सह दण्डसरोजवान् । अनिरुद्धोऽरिदण्डाब्ज [5]पद्मपाणिश्चतुर्भुजः ॥ ३८ ॥

---

1. म. समूर्तानि. 2. म. सदा भुजे. 3. म नाभिधृक् 4. म. पद्मचक्राब्जदण्डास्त्रधरो.
5. श्री. शंख.

चक्रपद्माम्बुजैः सार्धं गदावान् पुरुषोत्तमः । अधोक्षजः पद्मदण्डशङ्खचक्रधरः स्मृतः ॥ ३९ ॥
नृसिंहश्चक्रजलजगदाशङ्खधरः स्मृतः । अच्युतो दण्डपद्मारिशङ्खहस्तश्चतुर्भुजः ॥ ४० ॥
जनार्दनः पद्मचक्रशङ्खदण्डश्चतुर्भुजः । उपेन्द्रः [1]शङ्खदण्डारि [2]पद्मायुधविभूषितः ॥ ४१ ॥
शङ्खचक्राब्जदण्डास्त्रः हरिः स्यात्कमलासन । कृष्णः शङ्खगदापद्मचक्रपाणिश्चतुर्भुजः ॥ ४२ ॥
दक्षिणं हस्तमारभ्य प्रादक्षिण्येन कारयेत् । मूर्तिचिह्नानि शङ्खादीन्यायुधानि विचक्षणः ॥ ४३ ॥
वासुदेवः पद्मनाभः नारायणजनार्दनौ । एतेषां वर्णभेदोऽस्ति न विशेषोऽस्ति चायुधैः ॥ ४४ ॥
पीताम्बरधराः सर्वाश्चतुर्विंशतिमूर्तयः । श्रीवत्सकौस्तुभाकल्पवनमालाविभूषिताः ॥ ४५ ॥
भोगार्थिनश्चेद्भित्तिस्थान् देवीभ्यां स्थापयेत्सह । विना ताभ्यां मोक्षकामाः स्थापयेयुर्यथाविधि ॥४६॥
आसनस्थानशयनयानादिषु यथा[3] विधि ।

## ब्रह्मादिमूर्त्यष्टकम्

अष्टौ वक्ष्ये परा मूर्तिस्तासु ब्राह्मी प्रशस्यते ॥ ४७ ॥
प्राजापत्या द्वितीया तु तृतीया वैष्णवी [4]मता । दैवी चतुर्थी तदनु मूर्तिरार्षी चतुर्मुख ॥ ४८ ॥
षष्ठी तु मानुषी ज्ञेया सप्तमी मूर्तिरासुरी । पैशाची मूर्तिरन्या स्यात्तासां लक्षणमुच्यते ॥ ४९ ॥

## ब्राह्मी

प्रथमाष्टभुजा तप्ततपनीयसमद्युतिः । भुजेषु मुख्यो वरदो दक्षिणेष्वितरे त्रयः ॥ ५० ॥
चक्रासिबाणैः [5]संयुक्तो वामे हस्तचतुष्टये । शङ्खं गदां तथा चर्म शार्ङ्गं कुर्याच्चतुर्मुख ॥ ५१ ॥
पीताम्बरधरो देवो वनमालाविभूषितः । मरीचिना च भृगुणा पूजितश्च महर्षिणा ॥ ५२ ॥

## प्राजापत्या

शङ्खकुन्देन्दुवर्णाभः पीतवासाश्चतुर्भुजः । शङ्खचक्रगदापाणिरभयेन विराजितः ॥ ५३ ॥
वनमालाधरः सौम्यः सनकेन सुपूजितः । सनत्कुमारेण च तथा मूर्तिरेषा प्रजापतेः ॥ ५४ ॥

## वैष्णवी

भिन्नाञ्जन [6]चयः सौम्यः शङ्खचक्रगदाधरः । पीताम्बरधरो देवो वनमालाविभूषितः ॥ ५५ ॥
वरदो दक्षिणो हस्तः स्वागताऽभयदोऽपि वा । वामेन स्पृष्टकटिभूः श्रीभूमिभ्यां सह स्थितः ॥ ५६ ॥
नारदेनाऽपि भृगुणा वैष्णवी मूर्तिरर्चिता ।

## दैवी

शङ्खचक्रगदापद्मं धारयन्तं चतुर्भुजम् ॥ ५७ ॥
श्यामलं पीतवसनं वनमालाविभूषितम् । अर्चितं ब्रह्मरुद्राभ्यां दैवी मूर्तिरसौ भवेत् ॥ ५८ ॥

---

1. म. पद्म. 2. म. शखायुध. 3. श्री. रुचि. 4. श्री. स्मृता. 5. श्री. म. संयुक्ता. 6. श्री. भिभः.

आर्षी

शुद्धस्फटिकसङ्काशा पीतवस्त्रा चतुर्भुजा । दक्षिणे ज्ञानमुद्रा च शङ्खचक्रगदाधरा ॥ ५९ ॥
श्रीवत्साङ्का [1]प्रसन्नास्या वनमालाविभूषिता । सनन्दसनकाभ्यां च पूजिता मूर्तिरारुषी ॥ ६० ॥

मानुषी मूर्तिः

मानुषी मूर्तिरधुना कथ्यते कमलासन । चतुरश्रायते धाम्नि दिव्ये भागे भुजद्वयम् ॥ ६१ ॥
शङ्खचक्रधरं सौम्यं स्थापयेन्मकुटोज्वलम् । देवस्य दक्षिणे पार्श्वे श्रियं देवीं प्रकल्पयेत् ॥ ६२ ॥
तस्य दक्षिणतो भागे बलभद्रं तु कारयेत् । दक्षिणे बलभद्रस्य प्रद्युम्नमपि कारयेत् ॥ ६३ ॥
देवस्य वामपार्श्वे तु अनिरुद्धं प्रकल्पयेत् । तस्य पार्श्वे तु वामे तु साम्बं कुर्याचतुर्मुख ॥ ६४ ॥
ब्रह्माणं दक्षिणे कुडये सव्ये तु विनतात्मजम् । स्थानके स्थानकाः प्रोक्ता आसीनेऽपि तथा भवेत् ॥६५॥
चतुर्भुजा तु कर्मार्चा द्विभुजा वापि सा भवेत् । उत्सवार्चा प्रतिकृतिः सर्वा चैव चतुर्भुजाः ॥ ६६ ॥
मानुषं वासुदेवस्य प्रोक्तं संक्षेपतो विधिः ।

आसुरी

आसुरी मूर्तिरसिता एकवक्त्रा चतुर्भुजा ॥ ६७ ॥
दंष्ट्राकरालवदना भ्रुकुटीकुटिलेक्षणा । मुख्ये करद्वये बाणं धनुरूर्ध्वेऽरिशङ्खकम् ॥ ६८ ॥
शार्ङ्गहस्तं ललाटान्तमुद्धरेद्बाणहस्तकम् । नाभ्यन्तं कटिसूत्रान्तं भङ्गत्रयसमन्वितम् ॥ ६९ ॥

पैशाची

पैशाची मूर्ति [2]राद्या तु खड्गकौमोदकी तथा । वरदाभयदं मुख्यं कालवर्णं करद्वयम् ॥ ७० ॥
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् । अष्टौ च मूर्तयः सर्वाः सर्वाभरणभूषिताः ॥ ७१ ॥
श्रीवत्सकौस्तुभोरस्काः वनमालाविभूषिताः ।

आसां प्रतिष्ठायाः फलम्

स्थापिता ब्रह्मणो मूर्तिः ब्रह्मभूयाय कल्पते ॥ ७२ ॥
प्राजापत्यप्रतिष्ठायां प्रजाभिर्वर्धते भृशम् । अन्ते प्रजापतिपदं लभते नात्र संशयः ॥ ७३ ॥
स्थापिता वैष्णवी मूर्तिरचिरान्मोक्षदा भवेत् । दैवी देवत्वफलदा सर्वकामसमृद्धिदा ॥ ७४ ॥
आर्षी मूर्तिर्महर्षित्वप्राप्तये भवति ध्रुवम् । शापानुग्रहसामर्थ्यमपि तस्य भविष्यति ॥ ७५ ॥
मानुषी मूर्तिरचिराद्यशसे महते भवेत् । त्रैलोक्यैश्वर्यसम्पच्च सर्वकालं भविष्यति ॥ ७६ ॥
आसुरीं मूर्तिमाराध्य रक्षसां दितिजन्मनाम् । भूतादीनां च सर्वेषामधिपत्यं समश्नुते ॥ ७७ ॥
पैशाचमूर्तियजने पिशाचासुरराक्षसाः । वश्या भवन्ति सर्वे च सर्वकामसमृद्धिदाः ॥ ७८ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे यानारूढविश्वरूपादिलक्षणं नाम षोडशोऽध्यायः ॥

---

1. श्री. प्रसन्नाभं. 2. श्री. रन्या.

# सप्तदशोऽध्यायः ।

## मत्स्यादिमूर्तिनिरूपणम्

श्रीभगवान्—

मत्स्यादिदशमूर्तीनां लक्षणं कथ्यतेऽधुना । ईषद्वै स्थूल[1]चित्राणि तैस्तैर्वक्त्रैर्युतानि च ॥ १ ॥

### मत्स्यमूर्ति.

तत्र मत्स्यस्य [2]कायश्च दैर्घ्याद्वै षोडशाङ्गुलम् । दशाङ्गुलं तु वैपुल्यान्मीनाख्यं परिकल्पयेत् ॥ २ ॥

[3]शूलं मत्स्याकृतिं कृत्वा शिलामृत्काष्ठजं तु वा । अर्धचित्रेण वा कुर्याच्चित्राभासेन वा पुनः॥३॥

समुद्रं तु लिखेद्भित्तौ [4]चित्रादीन् परिकल्पयेत् । पश्चायुधान् लिखेद्भित्तौ छत्रादीन् [5]परिकल्पयेत् ।।४।।

नारदेनापि मनुना समभ्यर्चितमादरात् । कर्मार्चादीनि बिम्बानि सौम्यवक्त्राश्चतुर्भुजाः ॥ ५ ॥

आसीना वा स्थिता वापि शङ्खचक्रगदाधराः ।

### कूर्ममूर्तिः

कूर्मवत्कूर्ममूर्तिं तु कल्पयेत्कमलासन ॥ ६ ॥

तपनीयनिभं कूर्मं विस्तारं द्वादशाङ्गुलम् । शिलामृत्काष्ठजं पद्मपीठे संस्थापयेत्प्रभुम् ॥ ७ ॥

आभासे वार्धचित्रे वा क्षीरोदमथनं लिखेत् । कच्छपेन्द्रस्य पृष्ठे तु मन्दरं पर्वतोत्तमम् ॥ ८ ॥

तस्य दक्षिणपार्श्वे तु वासुदेवं सनातनम् । मन्दरस्य गिरेरग्रे न्यस्तहस्तं जगद्गुरुम् ॥ ९ ॥

वामपार्श्वे गिरेस्तस्य ब्रह्माणं सह शङ्करम् । वासुकेः पूर्वभागं तु गृह्णन्त्यसुरराक्षसाः ॥ १० ॥

पुच्छभागं तु गृह्णन्ति वासुकेर्देवतागणाः । कर्मार्चादीनि बिम्बानि सौम्यवक्त्राश्चर्भुजाः ॥ ११ ॥

### वराहमूर्ति.

विष्णोर्महावराहस्य निर्माणमधुनोच्यते । नरवत्कण्ठपर्यन्तं वक्त्रसृष्टिर्वराहवत् ॥ १२ ॥

चतुर्भुजं शङ्खचक्रधारिणं स्फटिकप्रभम् । पीतवस्त्रं मुकुटिनं श्यामलाकृतिमेव वा ॥ १३ ॥

स तिर्यक् संस्थितं सूत्रे दैविके स्थापयेत्पदे । शयनं यानकं चैव वराहस्य तु नेष्यते ॥ १४ ॥

स्थापयेदेकबेरं तु शङ्खचक्रगदाधरम् । आसनेऽपि तथा रूपं ब्रह्मस्थाने ऋजुर्भवेत् ॥ १५ ॥

दिव्ये तु स्थानके चैव ऋज्वङ्गं नैव कारयेत् । उद्धृत्य धरणीं देवीं वामहस्त[6]स्य कूर्परे ॥ १६ ॥

कटिप्रदेशमालम्ब्य पाणिना दक्षिणेन तु । जिघ्रन् देव्याः स्तनं देवः श्रीवत्साङ्कः किरीटवान् ॥ १७ ॥

---

1. श्री. म. गात्राणि. 2. श्री. काय च 3 श्री. म. शूर्प 4. श्री. म. पद्मस्योपरि कल्पयेत्. 5. श्री. कल्पयेत् पुनः. 6. म. सकूर्परे.

कृताञ्जलिपुटा देवी श्यामवर्णा सुमध्यमा । कल्पनीया मही देवी देवे तिष्ठति पद्मज ॥ १८ ॥
आसीने तु तथासीना पुष्पहस्ता वसुन्धरा । वामे पार्श्वे प्रतिष्ठाप्य वराहवपुषो हरेः ॥ १९ ॥
[1]आरोपितव्था देवस्य वामोत्सङ्गे वसुन्धरा । आलिङ्गिता च हस्तेन वामेन प्रेक्षितानना ॥ २० ॥
कर्मार्चनादिप्रतिमा आसीना वा स्थिताऽपि वा । देव्या सह क्रोडवक्त्रास्सौम्यवक्त्राश्चतुर्भुजाः ॥२१॥

—नृसिहमूर्तिः—

नृसिंहमूर्तिर्बहुधा तत्र काचित्प्रदर्श्यते । वक्त्रं केसरिणो वक्त्रं [2]व्यात्तास्यं दंष्ट्रया युतम् ॥ २२ ॥
भ्रुकुटीकुटिलं भीमं त्रिणेत्रं मुकुटोज्वलम् । अङ्गान्तरं नरस्येव चतुर्भुजमुदायुधम् ॥ २३ ॥
[3]रक्तकञ्चुकसंयुक्तं श्रीवत्साङ्कविराजितम् । शुद्धस्फटिकसंकाशं शङ्खचक्रविराजितम् ॥ २४ ॥
पर्यङ्कबन्धसंयुक्तमासीनं सम्यगासने । प्रसार्य जानुनोर्हस्तौ मुख्यौ विस्तारिताङ्गुली ॥ २५ ॥
दम्भोलिभीमनखिनौ भागे दिव्ये प्रतिष्ठितम् । एकबेरविधानं चेदासीनो वा स्थितोऽपि वा ॥ २६ ॥
शङ्खचक्रगदापाणिः स्थितश्चेत् कमलासन । अथवा दैविके भागे सिंहविष्टरविष्ठितम् ॥ २७ ॥
श्रीभूमीभ्यां सहासीनं बन्धपर्यङ्कबन्धनम् । यद्वा भूमितले पादमेकं संस्थाप्य दक्षिणम् ॥ २८ ॥
अपरेण सुखासीनो विष्टरे विपुले दृढम् । यद्वा प्रसार्य जानूर्ध्वमुत्क्षिप्योपरि जानुनः ॥ २९ ॥
वामहस्तं प्रसार्यान्यहस्तं कृत्वाऽभयप्रदम् । दक्षिणं जानुनोऽधस्तात् स्थापयित्वा तथासने ॥ ३० ॥
श्रीभूमीसहितो दिव्ये तिष्ठन् भागे यथापुरम् । यद्वाष्टभुजसंयुक्तं नृसिंहं [4]परिकल्पयेत् ॥ ३१ ॥
चक्रं खड्गं च बाणं च अभयं दक्षिणे भुजे । पाञ्चजन्यं गदां शार्ङ्गं वामबाहुषु कारयेत् ॥ ३२ ॥
जानूपरि तथा वामं हस्तमेकं प्रसारयेत् । यद्वा भुजयुगं जानुद्वयस्योपरि कल्पयेत् ॥ ३३ ॥
अथवा षोडशभुजो नरसिंहः प्रशस्यते । चक्रं खड्गं सपरशुं शूलं बाणं तथाऽङ्कुशम् ॥ ३४ ॥
वज्रं च दक्षिणभुजप्रदेशेष्वितरेष्वपि । शङ्खं चर्म गदां शक्तिं शार्ङ्गं पाशं च तोमरम् । ३५ ॥
शिष्टौ करौ यथापूर्वं स्थापयेज्जानुनोर्द्वयोः । वामजानूर्ध्वकं कुर्यादधस्ता[5]दितरं पुनः ॥ ३६ ॥
उत्सङ्गे देवदेवस्य हिरण्यकशिपुं रिपुम् । नखैर्विदारितोरस्कं स्रवद्रुधिर [6]पिङ्गलम् ॥ ३७ ॥
रुधिरस्तोमसंभूत [7]सिराणां ग्रामसङ्कुलम् । कुर्याच्च दक्षिणे पार्श्वे विधिमन्यत्र शङ्करम् ॥ ३८ ॥
प्रह्लादं गरुडं चापि पार्श्वयोस्तत्र कारयेत् । स्वतन्त्रे नरसिंहे तु कर्मबिम्बानि कारयेत् ॥ ३९ ॥
चतुर्भुजं वा सर्वत्र चासीनं सुस्थितं तु वा । श्रीभूमीसहितं वापि रहितं वापि कारयेत् ॥ ४० ॥

---

1. म. आरोपिता वा. 2. श्री व्यालास्य. 3. श्री. म. रत्न. 4. श्री. सप्रकल्पयेत्.
5. म. दितरे. 6. म. पङ्किलम्. 7. म. हिरण्यं.

[1]कर्मार्चनादिप्रतिमां सौम्यवक्त्रां चतुर्भुजाम् ।

वामनमूर्तिः

वामनस्य हरेर्मूर्तिं बहुधा संप्रचक्षते ॥ ४१ ॥
वामनं वामनाकारं श्यामलं दण्डधारिणम् । द्विभुजं मेखलादामशोभितं शोभनाकृतिम् ॥ ४२ ॥
कौपीनाच्छादनधरं मृगाजिनधरं विभुम् । यज्ञोपवीतिनं काकपक्ष [2]संयुतकुन्तलम् ॥ ४३ ॥
ईषत्कुञ्चित [3]सव्याङ्घ्रिं दक्षिणेन ऋजु स्थितम् । दक्षिणेन तु हस्तेन याचमानं वसुन्धराम् ॥ ४४ ॥
शोभितं शोभनाकारं स्थितं वा शयनासनम् । * अथवा गरुडारूढं कल्पयेत् कमलासन ॥ ४५ ॥
एकबेरविधानं चेत् स्थापयेद्ब्रह्मणः पदे । बहुबेरविधानं तु त्रैलोक्यक्रमणोद्यतम् ॥ ४६ ॥
विष्णुं प्रकल्पयेद्दिव्ये भागेऽष्टभुजसंयुतम् । चतुर्भुजं वा बहुभिर्बाहुभिर्वा समन्वितम् ॥ ४७ ॥
तस्य दक्षिणपार्श्वे तु वामनं वामनाकृतिम् । तस्यापसव्ये दैत्येन्द्रं बलिं करकधारिणम् ॥ ४८ ॥
भुवनत्रयदातारं [4]सभार्यां सपुरोहितम् । वामपार्श्वे तु पक्षीन्द्रं मुष्टिना शुक्रघातिनम् ॥ ४९ ॥
वामभित्तौ विधातारमुपरिष्टादवस्थितम् । क्रममाणस्य देवस्य सव्याङ्घ्रिक्षालनोद्यतम् ॥ ५० ॥
पादोदकसमुद्भूतां गङ्गामाकाशगामिनीम् । तर्जन्या वामया चापि निर्दिशन्तं समुद्धृतम् ॥ ५१ ॥
चरणं सव्यमत्युच्चश्यामलं पीतवाससम् । शङ्खचक्रगदाखड्गधनुःपाशादिधारिणम् ॥ ५२ ॥
जाम्बवन्तं च भित्तौ तु भेरीताडनतत्परम् । देवर्षिगणसङ्घातान् कृताञ्जलिपुटान् स्थितान् ॥ ५३ ॥
भित्तौ कृत्वा ततः कर्माद्यर्चां चैव चतुर्भुजाम् ॥ ५४ ॥

भार्गवराममूर्तिः

कुर्याद्भार्गवरामस्य निर्माणमधुनोच्यते । आसीनं द्विभुजं शान्तं जटामुकुटधारिणम् ॥ ५५ ॥
परशुं सशरं चापं दक्षिणेतरहस्तयोः । धारयन्तं सुवर्णाभं ब्राह्मया लक्ष्म्या विराजितम् ॥ ५६ ॥
श्रीवत्सेनाङ्कितोरस्कं [5]सोपवीतोत्तरीयकम् । स्थितं वा कल्पयेद्देवमेकबेरं विधेः पदे ॥ ५७ ॥
बहुबेरे पदे दिव्ये देवीं वामे प्रकल्पयेत् । चतुर्भुजा च कर्मार्चा जामदग्न्येन वा समा ॥ ५८ ॥
भङ्गत्रयसमोपेतं त्रयस्त्रिंशत्सुलक्षणम् । यद्वा चतुर्भुजं कुर्याज्जामदग्न्यं चतुर्मुख ॥ ५९ ॥
शङ्खचक्रधरं शार्ङ्गशरहस्तं यथापुरम् ।

---

1 म. कर्मार्चाथवा कुर्यात् 2 श्री मण्डिल. 3. श्री वामाङ्घ्रि.

* एतदर्धश्लोकस्थाने "स्थितं शयनमासीनमथवा गरुडे स्थितम् ।" इत्यर्धश्लोकः श्री ग्रन्थे. दृश्यते

4. म. सभार्यं. 5. म. उपवीतो,

## श्रीराममूर्तिः

रामस्य राघवस्याऽथ लक्षणं वक्ष्यतेऽधुना ॥ ६० ॥

त्रिभङ्गं द्विभुजं [1]रम्यं श्यामवर्णं किरीटिनम् । श्रीवत्साङ्कं प्रसन्नाभं यद्वा रामं चतुर्भुजम् ॥ ६१ ॥

ऋजु स्थितं दक्षिणेन चरणेनेतरेण तु । कुञ्चितेनाऽङ्घ्रिणा स्तोकं शरशार्ङ्गधनुर्धरम् ॥ ६२ ॥

उद्धरेच्च ललाटान्तं वामहस्तं धनुर्धरम् । अन्तरालं मुखमितं शरहस्तं तु दक्षिणम् ॥ ६३ ॥

कटिसूत्रसमं कुर्यान्मुखमानं सगोलकम् । अन्तरालं भवेन्मुष्टेः कटिसूत्रस्य च द्वयोः ॥ ६४ ॥

अपराभ्यां च हस्ताभ्यां शङ्खं चक्रं च धारयेत् । मुखं दक्षिणतो [2]भङ्गं मध्यकायं तु [3]वामतः ॥

कट्यां दक्षिणतो [4]भङ्गः किञ्चिद्भङ्गत्रयं मतम् । कम्बुग्रीवं महोरस्कं त्रयस्त्रिंशत्सुलक्षणम् ॥ ६६ ॥

पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् । सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते ॥ ६७ ॥

बाहू नेत्रान्तरं चैव हनुर्नासा तथैव च । स्तनयोरन्तरं चैव पञ्चदीर्घं प्रशस्यते ॥ ६८ ॥

ग्रीवा प्रजननं पृष्ठं ह्रस्वे जङ्घे प्रशस्यते । सूक्ष्माण्यङ्गुलिपर्वाणि केशदन्तनखत्वचः ॥ ६९ ॥

इमानि पञ्च सूक्ष्माणि कथितानि मयाऽनघ । कक्षः कुक्षिश्च वक्षश्च घ्राणं स्कन्धो ललाटिका ॥ ७० ॥

[5]षडुन्नतमिदं प्रोक्तं सप्तरक्तमतः शृणु । पाणिपादतलं रक्तं नेत्राद्यन्तं नखानि च ॥ ७१ ॥

तालुजिह्वाधरोष्ठं च सप्तरक्ता इमे स्मृताः । स्वरः सत्वं च नाभिश्च त्रिगम्भीरं प्रशस्यते ॥ ७२ ॥

उरः शिरो ललाटश्च त्रिविस्तीर्णं प्रकीर्तितम् । एवं लक्षणसंयुक्तं सर्वलोकसुखावहम् ॥ ७३ ॥

कुर्याद्दाशरथिं रामं मानादित्रयसंयुतम् ।

## लक्ष्मणादीनां स्थितिः

लक्ष्मणं कारयेद्वामे तथा लक्षणलक्षितम् ॥ ७४ ॥

जानकीं दक्षिणे पार्श्वे देवीं वेदिसमुत्थिताम् । भरतं दक्षिणे भित्तौ ससुग्रीवविभीषणम् ॥ ७५ ॥

शत्रुघ्नं चाङ्गदं चैव हनूमन्तं च वामतः । दिव्ये भागे स्थितस्यैवं परिवारादिकल्पनम् ॥ ७६ ॥

भद्रासने समासीनं त्यक्त्वा तत्सशरं धनुः । अभयो दक्षिणो हस्तो वामस्तु वरदो भवेत् ॥ ७७ ॥

जानकी तु सुखासीना भवेद्दक्षिणपार्श्वतः । लक्ष्मणो वामपार्श्वे तु स्थितश्च रचिताञ्जलिः ॥ ७८ ॥

यद्वा महार्हशयने शयानं परिकल्पयेत् । पृष्ठतो मौलिपार्श्वे तु जानकी स्यात्सुखासना ॥ ७९ ॥

कुड्यस्थाः पूर्ववत्सर्वे कर्तव्या लक्ष्मणादयः । पवनात्मजमारूढो यानं वा सशरासनः ॥ ८० ॥

एकबेरविधाने तु राघवो ब्रह्मणः पदे । शरचापधरं कुर्यात् [6]स्थितं लक्षणलक्षितम् ॥ ८१ ॥

---

1. म. राम. 2. म. भाग. 3. म. वामन.. 4. म. भागः. 5. श्री. षडुन्नता इमे प्रोक्ताः सप्तरक्तान्यथ शृणु । 6. म. चरन्तं वा यथारुचि.

*अथवाऽभयदं हस्तं दक्षिणं दक्षिणेतरम् । कटिस्पृशं करं कुर्यात् वरदं वा यथारुचि ॥ ८२ ॥
दक्षिणोत्तरयो [1]र्भित्योः परिवारा यथापुरम् । रामस्य भूप्रदेशान्तं भरतं परिकल्पयेत् ॥ ८३ ॥
लक्ष्मणं च कपोलान्तं चुबुकान्तमथापि वा । शत्रुघ्नं कण्ठमध्यान्तं सर्वे चापशरान्विताः ॥ ८४ ॥
भङ्गादयश्च तद्वत्स्युः केशबन्धसमन्विताः । मुखद्विगुणमायाममध्यर्धं वा समुन्नतम् ॥ ८५ ॥
केश[2]बन्धो भवेदेषां श्रीवत्सरहितास्तथा । [3]वामं यष्टिधरं हस्तं दक्षिणं भरतस्य वा ॥ ८६ ॥
वामं देव्या [4]भुजे न्यस्तं स्वातन्त्र्ये परिकल्पयेत् । शत्रुघ्नो लक्ष्मणश्चापि स्वातन्त्र्ये भरतो यथा ॥ ८७ ॥
भरतः श्यामलाकारो लक्ष्मणः कनकप्रभः । शत्रुघ्नो रक्तवर्णाभः श्रीमल्लक्षणसंयुतः ॥ ८८ ॥
माण्डवी भरतस्य स्यादूर्मिला लक्ष्मणस्य तु । श्रुतकीर्तिर्भवेद्देवी शत्रुघ्नस्याम्बुजासन ॥ ८९ ॥
सीता श्रीरिव कर्तव्या कल्याणबहुलक्षणा । करण्डिका मौलिधरा कबरी [5]बालकैर्युता ॥ ९० ॥
बिभ्राणा वामहस्तेन सरसीरुहकुड्मलम् । ऊरुप्रदेशविश्रान्तवामेतरभुजाऽथवा ॥ ९१ ॥
[6]ऊरुप्रदेशविश्रान्तसव्यहस्त[7]सरोरुहा । सव्येतरेण बिभ्राणा रक्तकञ्चुकबन्धना ॥ ९२ ॥
हिरण्यवर्णा सीता स्यान्माण्डवी पाटलप्रभा । ऊर्मिला श्यामवर्णाभा श्रुतकीर्तिः सितप्रभा ॥ ९३ ॥
धम्मिल्लसंयुता देव्यो भरतादेश्चतुर्मुख । हनूमान्वा नराकारः कर्तव्यो हेमसन्निभः ॥ ९४ ॥
कुञ्चिताग्रमहावालं [8]प्रह्वकायमवस्थितम् । आस्यं पिधाय हस्तेन दक्षिणे नेतरेण तु ॥ ९५ ॥
वस्त्रप्रदेशमाच्छाद्य विनीतवदवस्थितम् । केशबन्धयुतं कुर्यादुच्छ्रायस्तस्य वक्ष्यते ॥ ९६ ॥
रामस्य बाहुपर्यन्तमुन्मानं त्र्यंशमेव वा । अर्धं वा पादमथवा यथाविभवमुन्नतिः ॥ ९७ ॥
सुग्रीवं वानराकारं रामबाहुसमुच्छ्रयम् । [9]प्राञ्जलिं वेत्रसहितं स्थितं मुकुटधारिणम् ॥ ९८ ॥
हारादिभूषणैर्युक्तं कुर्यात्कनकपिङ्गलम् । अङ्गदं वानराकारं राममानार्धमुन्नतम् ॥ ९९ ॥
कृताञ्जलिपुटं वेत्रक्षुरिकामौलिधारिणम् । केशबन्धयुतं वापि बन्धुजीवसमद्युतिम् ॥ १०० ॥
विभीषणं महाकायं [10]घोरं कालायसप्रभम् । दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ १०१ ॥
रक्ताक्षं मुकुटोपेतं कृताञ्जलिपुटं स्थितम् । रामस्य बाहुपर्यन्तं समुच्छ्रायं प्रकल्पयेत् ॥ १०२ ॥
कृताञ्जलिपुटं सौम्यं निषादाधिपतिं गुहम् । नील [11]नीरद संकाशं राममानार्धमुन्नतम् ॥ १०३ ॥
स्वातन्त्र्यं पारतन्त्र्यं च राघवस्योभयं भवेत् । [12]दिव्ये भोगेऽथवा ब्राह्मे गर्भगेहे स्थितो यदि ॥ १०४ ॥

---

* अय श्लोकः म. ग्रन्थे न दृश्यते.

1. श्री. भित्तौ. 2. म. बन्ध 3. म. काम. 4. म. भुजन्यस्त. 5. म. भारकै. 6. श्री. जानु. 7. श्री. म, सरोरुहम्. 8. श्री सव्य. 9. श्री. साञ्जलि. 10. म. घोरकालायस. 11. श्री. जीमत. 12. म. दिव्यभोगादये.

*स्वतन्त्रो राघवः प्रोक्तः पदे पूर्वोदिते यदि । चतुर्भुजो गर्भगेहे कल्पितः कमलासन ॥ १०५ ॥
पश्चाद्विमानशोभार्थं कल्पितः परवानयम् । स्वतन्त्रे राघवे बिम्बान् कर्माद्यर्थं प्रकल्पयेत् । १०६ ॥
अन्याँस्तत्सदृशं रामं लक्ष्मणं जनकात्मजाम् । सिंहासने सहैकस्मिन् प्रभया च परिष्कृतान् ॥१०७॥
यद्वा चतुर्भुजान् कुर्यात्कर्माद्यर्चां चतुर्मुख । दौवारिकौश्च स्वातन्त्र्ये कल्पयेद्द्वारपार्श्वयोः ॥१०८॥
नलं च दक्षिणे पार्श्वे जाम्बवन्तं तथोत्तरे । जाम्बवान् [1]स्वर्णवर्णाभो नलः शुक्लसमप्रभः ॥ १०९ ॥
क्षुरिकावेत्रहस्तौ च बद्धकल्याणकञ्चुकौ । नीलं सेनापतिं [2]कृत्वा विष्वक्सेनपदे न्यसेत् ॥ ११० ॥
[3]गुहो वा तत्र संस्थाप्यो विष्वक्सेनोऽथवा स्वयम् । रामस्य पुरतः कल्प्यः मारुतिर्मुखमण्डपे ॥१११॥
गरुडो वा यथापूर्वं परिवारान् प्रकल्पयेत् ।

बलराममूर्ति.

रामस्य बलभद्रस्य लक्षणं वक्ष्यतेऽधुना ॥ ११२ ॥
द्विभुजं धवलं दिव्ये भागेऽथ परिकल्पयेत् । मुसलं लाङ्गलं चैव प्रसव्येतरहस्तयोः ॥ ११३ ॥
बिभ्राणमथवा न्यस्तवामहस्तं कटिस्थले । दक्षिणाभयदं यद्वा चतुर्भुजमुदायुधम् ॥ ११४ ॥
हलं च दक्षिणे हस्ते वामे च मुसलायुधम् । धारयन्तं विभुं नीलवसनं शङ्खचक्रिणम् ॥ ११५ ॥
किरीटिनं बद्धकेशमथवा वामपार्श्वतः । रेवतीं कल्पयेद्देवीं दक्षिणे वा यथारुचि ॥ ११६ ॥
करण्डिकामकुटिनीमथवा कबरीधराम् । असितां पारतन्त्र्ये च स्वातन्त्र्ये च यथापुरम् ॥ ११७ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे मत्स्यादिमूर्तिलक्षणं नाम सप्तदशोऽध्यायः ॥

---

# अष्टादशोऽध्यायः ।

## श्रीकृष्णमूर्तिः

श्रीभगवान्—

यादवस्याऽथ कृष्णस्य निर्माणमधुनोच्यते । कल्याणलक्षणयुतं त्रिभङ्गं सिंहविष्टरे ॥ १ ॥
तिष्ठन्तं रुक्मिणीसत्यभामाभ्यां सहितं प्रभुम् । ईषत्कुञ्चितवामाङ्घ्रिं सुस्थितेतरमद्भुतम् ॥ २ ॥
मेघश्यामं विशालाक्षं पीतवस्त्रं चतुर्भुजम् । [4]देवीसव्यभुजन्यस्तवामहस्तसरोरुहम् ॥ ३ ॥

---

* अयं श्लोकः म. ग्रन्थे न दृश्यते.

1. म. रक्त. 2. म. चैव–श्री. चापि. 3. म. गुहश्च. 4. म. देवीभुजदृढन्यस्त.

अधोमुखं तु हस्ताग्रं नाभिसूत्र [1]समन्वितम् । वामेतरकरस्पृष्टक्रीडामुष्टिमनोहरम् ॥ ४ ॥
तत्करं कटिसूत्रान्त [2]मुदस्ते तु करद्वयम् । शङ्खचक्रधरं कुर्याद् द्विभुजं वा यथोदितम् ॥ ५ ॥
श्रीवत्साङ्कं प्रसन्नाभं वरेण्यं मकुटोज्वलम् । बद्धालक[3]धरं वापि भागे दिव्ये प्रकल्पयेत् ॥ ६ ॥
रुक्मिणीं दक्षिणे पार्श्वे सत्यभामामथोत्तरे । विनतानन्दनं वापि सत्यास्थाने प्रकल्पयेत् ॥ ७ ॥
आसीनं वा सुखं सार्धं देवीभ्यां सह विष्टरे । वामहस्तेन वरदं दक्षिणेनाभयप्रदम् ॥ ८ ॥
यद्वा शयीत नृपवत्पर्यङ्के शोभिते भृशम् । भोगीन्द्रशयने वापि महापर्यङ्कमण्डिते ॥ ९ ॥
पृष्ठतो मौलिपार्श्वे तु रुक्मिणीं कारयेत्सुधीः । सत्यभामा भवेत्पादसंवाहनसमुद्यता ॥ १० ॥
संवाहयन्त्यौ वा देव्यौ हस्ताभ्यां पादपङ्कजम् । ताक्ष्यारूढं चतुर्बाहुं बिभ्राणं शरकार्मुकम् ॥११॥
मुख्याभ्यामपराभ्यां च शङ्खं चक्रं चतुर्मुख । आरोप्य सत्यभामां वा वामोत्सङ्गे [4]चतुर्भुजम्॥१२॥
आरुह्य [5]यान्तं पक्षीन्द्रं द्विभुजं वा यथारुचि । यद्वार्जुनस्य सारथ्यं कुर्वाणं परिकल्पयेत् ॥ १३ ॥
[6]रथस्थितं चतुर्बाहुं प्रतोदप्रग्रहौ दधत् । वामहस्तेन मुख्येन दक्षिणेन करेण तु ॥ १४ ॥
कपिध्वजाय प्रह्वाय परविद्यामुदीरयन् । अपराभ्यां च हस्ताभ्यां शङ्खचक्रधरं प्रभुम् ॥ १५ ॥
किरीटिनं विशालाक्षं श्रीवत्साङ्कितवक्षसम् । द्विभुजं बद्धकेशं वा कुर्यात्कमलसंभव ॥ १६ ॥
पार्थं च प्राञ्जलिं प्रह्वं सेषुं सेषुधिकार्मुकम् । किरीटिनं श्यामवर्णं कल्पयेत्स्यन्दनस्थितम् ॥ १७ ॥
विश्वरूपं तु वा कुर्यात् केशवं केशिसूदनम् । बृन्दावनगतं कृष्णं गवामनुचरं प्रभुम् ॥ १८ ॥
ईषत्कुञ्चितवामाङ्घ्रिमितरेण ऋजु स्थितम् । गच्छन्तमपि गायन्तं वंशेन परमाद्भुतम् ॥ १९ ॥
ईक्षमाणं मनाक् सव्ये पार्श्वे पुष्पावतंसितम् । विचित्रपुष्पग्रथितं वनमालाविभूषितम् ॥ २० ॥
बर्हिबर्हैश्च रुचिरैर्वत्सदामविभूषणैः । भूषितं देवगन्धर्वसिद्धचारणसेवितम् ॥ २१ ॥
कदम्ब[7]माले वा मध्यं दिने [8]कृत्वा प्रतिष्ठितम् । व्यत्यासेन स्थितं पद्भ्यां वामेन ऋजुनास्थितम् ॥२२॥
दक्षिणप्रपदे[9]नान्यपृष्ठभागस्पृशा स्थितम् । गोभिः सवत्सैर्हरिणैः पक्षिभिश्च समावृतम् ॥ २३ ॥
ऋषिभिर्देवगन्धर्वैः किन्नरगैश्च सेवितम् । फणीन्द्रं कालियं यद्वा फणापञ्चकसंयुतम् ॥ २४ ॥
पुरतः पुरुषाकारं नागाकारं च पृष्ठतः । कृताञ्जलिं दुराधर्षमाक्रम्य शिरसि स्थितम् ॥ २५ ॥
वामपादेन गृह्णन्तं पुच्छं वामेन पाणिना । दक्षिणाभयदं [10]हस्तं नृत्यन्तं कारयेद् बुधः ॥ २६ ॥
अथवा कृतताटङ्कं कुर्वाणं नाट्यमद्भुतम् । महिषीं नागराजस्य भिक्षमाणां स्वकं पतिम् ॥ २७ ॥
कृताञ्जलिपुटां देवीं तत्पार्श्वे वेपितां स्थिताम् । रासमण्डलमध्यस्थं यद्वा कुर्याज्जगद्गुरुम् ॥ २८ ॥

---

1 म सम स्थितम्. 2. म. मुदस्ताच्च करद्वये. 3. म. भरं. 4 म. चतुर्भुजः. 5. म. यानं. 6. म. रथे. 7 श्री. म. मूले. 8. म. स्थित्वा परिष्कृतम्. 9. म. नाघ्रि. 10. म. चित्रं.

देव्योर्गृहीत्वा हस्ताभ्यां कराग्रं मध्यतः स्थितम् । नृत्यन्तं बहुमाहस्रगोपकन्याभिरावृतम् ॥ २९ ॥
नवनीताय नृत्यन्तं सव्येन ऋजुना स्थितम् । उद्धृत्य दक्षिणं पादं विपरीतमथापि वा ॥ ३० ॥
[1]कारयेद्वामहस्तं तु चिबुकान्तसमुच्छ्रयम् । अभीतिदं दक्षिणेन वरदं वा यथारुचि ॥ ३१ ॥
मध्यतः स्तननाभ्योश्च वरदो हस्त इष्यते । यादवेन्द्रेण कृष्णेन क्रीडया यद्यथाश्रितम् ॥ ३२ ॥
कल्पयित्वा [2]वपुस्तत्तदाराध्यं विभवार्थिभिः । एकबेरविधानं चेत् स्थापयेद्ब्रह्मणः पदे ॥ ३३ ॥
कर्मार्चादीनि बिम्बानि कल्पयेद्रघुवीरवत् । रुक्मिणीसत्यभामाभ्यां सह पीठे प्रकल्पयेत् ॥ ३४ ॥
रुक्मिणी कनकप्रख्या सत्या[3]न्या श्यामला भवेत् । करण्डिका मुकुटिनी यद्वा धम्मिल्लधारिणी ॥३५॥
सत्यभामा करे पद्मं धारयेद्दक्षिणे परम् । ऊरौ विश्रामयेदन्यौ [4]धारयेदन्यथाऽथवा ॥ ३६ ॥
यथोक्त [5]तरविन्यासकल्पनं कमलासन । बाल्येऽपि याया देवी स्यात्सा सा कल्प्या यथाविधि ॥३७॥

## कल्किमूर्तिः

निर्माणमधुना वक्ष्ये कल्किविष्णोर्महात्मनः । पिङ्गश्मश्रुं विवृत्ताक्षं रक्ताभं हयवाहनम् ॥ ३८ ॥
द्विभुजं चर्मवसनं खड्गखेटकधारिणम् । जटामुकुटसंयुक्तं [6]ब्राह्मलक्ष्म्या विराजितम् ॥ ३९ ॥
पैशाचे यानकं कुर्यात् दिव्ये भागे स्थितिर्भवेत् । यद्वा चतुर्भुजं कुर्यान्मुख्याभ्यां खड्गखेटकौ ॥४०॥
अपराभ्यां शङ्खचक्रे हस्ताभ्यां दधतं हरिम् । आसने खेटकं खड्गं न कुर्वीत कदाचन ॥ ४१ ॥
अभयं वरदं चैव करयुग्मं प्रकल्पयेत् । शयनं नेष्यते तस्य कल्किविष्णोर्महात्मनः ॥ ४२ ॥
एकबेरविधानं चेत्कल्पयेद्ब्रह्मणः पदे । आसीनं स्थानकं चैव भागे दिव्ये प्रकल्पयेत् ॥ ४३ ॥
तस्य दक्षिणपार्श्वे तु याज्ञवल्क्यं पुरोहितम् । नारदं दक्षिणे पार्श्वे भित्तिभूमिषु देवताः ॥ ४४ ॥
कल्पयेज्जङ्गमान् बिम्बान् [7]द्विजन्मानश्चतुर्भुजान् । अभयं वरदं चैव द्वौ भुजौ परिकल्पयेत् ॥४५॥
चतुर्भुजे शङ्खचक्रे द्वयोरपरयोर्भवेत् ।

## कर्मबिम्बसामान्यलक्षणम्

श्रीवत्सेनाङ्कितोरस्कान् जटामकुट[8]संयुतान् ॥ ४६ ॥
किरीटिनो वा कुर्वीत कर्मबिम्बाँश्च लोहजान् । विष्णोरंशावताराणां कर्मार्चाद्यास्तु कौतुकाः ॥ ४७ ॥
कल्पनीयाश्चतुर्हस्ता द्विभुजा वा यथारुचि । दशतालेन मीयन्ते [9]वराहाद्याश्च मूर्तयः ॥ ४८ ॥
बाह्याँश्चाभ्यन्तराँश्चैव परिवारान् प्रकल्पयेत् । आदिमूर्तेर्यथा तद्वन्न विशेषोऽस्ति [10]कश्चन ॥ ४९ ॥

---

1. म. प्रसारये. 2. म. वपुस्तद्व. 3. म च. 4. म कारयेत् अथवान्यथा. 5. म. कर. 6. म. ब्राह्म्य. 7. म. द्विभुजान्वा, 8. म. संयुत.. 9. श्री. वराहाश्चान्य. 10. म. कंचन,

### लक्ष्मीनारायणमूर्तिः

लक्ष्मीनारायणं कुर्याद् भुजाष्टकसमन्वितम् । यद्वा चतुर्भुजं शङ्खचक्राद्यायुधभूषितम् ॥ ५० ॥
वामभागे तु हस्ताभ्यां वरदं पङ्कजं तु वा । इतराभ्यां च हस्ताभ्यामभयं चक्रमेव वा ॥ ५१ ॥

### अभिन्ना लक्ष्मीनारायणमूर्तिः

वपुषो दक्षिणे भागे विष्णुर्वामे सरोरुहा । पीनस्तनतटो वामः श्रीवत्साङ्कस्तथेतरः ॥ ५२ ॥
वामे हेमनिभःश्यामो दक्षिणो भाग इष्यते । आसीनं वा शयानं वा गरुडारूढमेव वा ॥ ५३ ॥

### यज्ञमूर्तिः

स्थितं वा कल्पयेद्देवं यज्ञमूर्तिमतः शृणु । त्रिशीर्षं च त्रिपादं च चतुःशृङ्गं चतुर्मुखम् ॥ ५४ ॥
सप्तहस्तं जपातुल्यं वनमालाविभूषितम् । अभीतिदो मुख्यहस्तो दक्षिणोऽन्यो वरप्रदः ॥ ५५ ॥
पञ्चैतरकराश्च स्रुक्स्रुवाद्यायुधभूषिताः ।

### एकद्वित्र्यादिमूर्तिभेदः

एकमूर्तिर्वासुदेवो यद्वा नारायणः परः ॥ ५६ ॥
तौ द्विमूर्तिस्त्रिमूर्तिस्तु सत्यश्चाच्युतपूरुषौ । चतुर्मूर्तिर्वासुदेवो भवेत् सङ्कर्षणस्तथा ॥ ५७ ॥
प्रद्युम्नश्चानिरुद्धश्च पञ्चमूर्तिमतः शृणु । सत्याच्युतौ तथानन्तः वासुदेवश्च पूरुषः ॥ ५८ ॥
षण्मूर्तिरन्नाधिपतिः शक्तीशः कालनेमिजित् । त्रैलोक्यमोहनो यज्ञवराहश्चेति पञ्चमः ॥ ५९ ॥
शङ्खोदरो नृसिंहश्च सप्तमूर्तिरथोच्यते । चतस्रो वासुदेवादिमूर्तयः पूर्वमीरिताः ॥ ६० ॥
पूषादयस्तथा तिस्रः सप्तमूर्तिरुदाहृता । हयग्रीवो मुकुन्दश्च बभ्रुश्चैव वृषाकपिः ॥ ६१ ॥
शौरिश्च दाशार्हश्चैव वैकुण्ठः पुरुषस्तथा । अष्टमूर्तिरिति प्रोक्तो नवमूर्तिरथोच्यते ॥ ६२ ॥
चतस्रः कथिताः पूर्वं वासुदेवादयस्तथा । नारायणो हयग्रीवो विष्णुर्नृहरिसूकरौ ॥ ६३ ॥
षडन्नेशादयः प्रोक्ताः वासुदेवादिमूर्तयः । चतस्रो दशमूर्तिः स्यादादिमूर्तिरिमा दश ॥ ६४ ॥
स्यादेकादशमूर्तिः स्यात्प्रोक्ता द्वादशमूर्तयः । चतस्रो विंशतिश्चैव मूर्तयः पूर्वमीरिताः ॥ ६५ ॥

### पञ्चमूर्तिप्रतिष्ठाविधिः

पञ्चमूर्तिप्रतिष्ठानमधुना समुदीर्यते । स्थापयेद्वासुदेवाभ्यां मूर्तिं गर्भगृहे सुधीः ॥ ६६ ॥
दिव्ये भागेऽथवा ब्राह्मे बहिः प्राग्दिशि पूरुषम् । सत्यमूर्तिं दक्षिणस्यां प्रतीच्यामच्युतं तथा ॥ ६७ ॥
अनन्ताख्यमुदीचीने चलां वा यदि वाऽचलाम् । धाम्नोऽन्तर्वासुदेवः स्याच्चतुर्मूर्तिषु पूर्ववत् ॥ ६८ ॥
सङ्कर्षणं दक्षिणस्यां बहिर्दिशि निवेशयेत् । प्रद्युम्नं च प्रतीचीने कौबेर्यामनिरुद्धकम् ॥ ६९ ॥

[1]यां यां दिशमधिष्ठाय स्थिताः पूर्वोक्तमूर्तयः । तत्तद्दिगाभिमुख्येन कल्पयेत् कमलासन ॥ ७० ॥
द्वारं वातायनं वापि कुर्याद्भित्तिं न [2]कल्पयेत् । शङ्खचक्रगदायुक्ता मुख्यैरभयदा करैः ॥ ७१ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे मूर्तिभेदकथनं नाम अष्टादशोऽध्यायः ॥

---

# एकोनविंशोऽध्यायः ।

## —※ कर्माद्यर्चामूर्तिमानविधिः ※—

### तत्र बहुबेरमानम्

श्रीभगवान्—

कर्मार्चादिप्रतिकृतेःप्रकारः कथ्यतेऽधुना । कर्मार्चा चोत्सवार्चा च बल्यर्चा च तथैव च ॥ १ ॥
स्नानतीर्थोभयार्चा च स्नापोत्थानार्चया सह । प्रतिमाः षड् विधातव्याः पूजायामुत्तमा भवेत् ॥ २ ॥
तिसृभिर्मध्यमा ज्ञेया आद्यया चरमा भवेत् । बहुबेरे विधिरयं कथितः कमलासन ॥ ३ ॥

### एकबेरमानम्

एकबेरे तु कर्मार्चा स्नपनार्चा च नेष्यते । ध्रुवबेरसमुच्छ्राये विभक्ते दशधा सति ॥ ४ ॥
एकांशेन प्रतिकृतेः कर्मार्चायाः समुच्छ्रयः । द्वादशांशेन यद्वा स्यात् षोडशांशेन वा भवेत् ॥ ५ ॥
यद्वाष्टादशभागेन चतुर्विंशांशमेव वा । महाबेराङ्गुलापेक्षा यद्वा तस्याः समुन्नतिः ॥ ६ ॥
चतुर्विंशाङ्गुला यद्वा भवेदष्टादशाङ्गुला । षोडशाङ्गुलमाना वा यद्वा स्याद् द्वादशाङ्गुला ॥ ७ ॥
अष्टाङ्गुलाऽथवा यद्वा षडङ्गुलसमुच्छ्रया । चतुरङ्गुलमाना वा यद्वा मानाङ्गुलेन तु ॥ ८ ॥
पूर्वोक्ताङ्गुलमानानि कर्तव्यानि यथारुचि ।

### बल्यादिमूर्तिमानम्

बलितीर्थप्रतिकृतिः शयनोत्थानकौतुकम् ॥ ९ ॥
कर्मार्चासंमितोत्सेधः कथितः कमलासन । कर्मबिम्बसमुत्सेधस्त्रिगुणः परिशिष्टयोः ॥ १० ॥
स्नपनोत्सवकार्यार्थं बिम्बयोरुभयोरपि । भङ्क्त्वा त्रिधा चतुर्धा वा ध्रुवबेरसमुच्छ्रयम् ॥ ११ ॥
एकभागे नलोत्सेधं कुर्यादुत्सवकौतुके । उत्सवार्चातृतीयांशं तुर्यांशं वाऽम्बुजासन ॥ १२ ॥
कर्मकौतुकमानं स्याद् ब्रह्मार्चादेरयं क्रमः । एकबेरे तदर्धा तु तत्तुर्यांशक[3]मेव वा ॥ १३ ॥

---

1. म. या या. 2. श्री. कारयेत्. 3. श्री. मुच्यते.

उत्सवार्चातृतीयांशसमुत्सेधोऽथवा भवेत् ।

—स्थानयानासनबिम्बवदेव कर्मार्चा—

स्थानयानासनविधौ ध्रुवबिम्बं यथा [1]कृतम् ।। १४ ।।

कर्मार्चादीनि तद्वत्स्यात् ध्रुवे तु शयिते पुनः । तिष्ठेद्वासीत वा [2]कायं कर्माद्यर्चा चतुर्मुख ।।१५।।

—नित्योत्सवबिम्ब तिष्ठद्रूपमेव—

नित्योत्सवप्रतिकृतिः सर्वत्रैव स्थिता भवेत् ।

—स्थितबिम्बपीठमानम्—

अर्चायामं त्रिधा कृत्वा [3]पद्ममेकेन कल्पयेत् ।। १६ ।।

उपानहादिपश्वाङ्गयुक्तं वृत्तं सुखावहम् । चतुरश्रं मनोहारि विस्तारतुलितायति ।। १७ ।।

तृतीयभागविहितं प्रभाशङ्कद्वया[4]ङ्कितम् । पीठोत्सेधं त्रिधा कृत्वा पद्ममेकेन कल्पयेत् ।। १८ ।।

दलैर्द्वादशभिर्युक्तमष्टाभिर्वा यथारुचि । तावदूर्ध्वदलोपेतं मध्ये विपुलकर्णिकम् ।। १९ ।।

उपच्छदसमायुक्तमीषत्फुल्लाम्बुजाकृति । पाद[5]मानं दलायामं केवलं वा सरोरुहम् ।। २० ।।

पीठं [6]वा केवलं वापि सुषिरं नैव कारयेत् । स्थितस्य कौतुकस्येदं पीठनिर्माणमीरितम् ।। २१ ।।

—आसीनपीठमानम्—

आसीनस्यायतं वृत्तं चतुरश्रं यदायतम् । [7]प्रतिमार्धसमुत्सेधं [8]तत्तृतीयांशमेव वा ।। २२ ।।

पद्मं [9]बहुदलोपेतं मध्ये विपुलकर्णिकम् । [10]न कुञ्चितप्रसव्याङ्घ्रिरधस्ताल्लम्बितेतरः ।। २३ ।।

अध्यासीतासनं देवो यथोक्तं कमलासन । लम्बमानपदाधारं कमलं परिकल्पयेत् ।। २४ ।।

—श्रीभूम्योः सन्निवेशः—

श्रीर्दक्षिणे धरा वामे देव्यौ देवस्य कल्पयेत् । कर्मादिबिम्बषट्कं स्याच्छ्रीभूमिसहितं सदा ।। २५ ।।

—श्रीधरादेव्योरासनस्थितिविकल्पः—

एकस्मिन् विष्टरे स्यातां पृथग्वा वल्लभे उभे । वामं संक्षिप्य चरणमितरं लम्बयेदधः ।। २६ ।।

[11]श्रीर्धरा त्वन्यथासीना स्थिते देवे तथा स्थिता ।

—प्रभाया मानादि—

वृत्तां वृत्तायतां वापि प्रभां बिम्बानुसारतः ।। २७ ।।

---

1. म. कृति. 2. म. काम. 3. श्री. पीठ. 4. श्री. न्वितम्. 5. श्री यामं 6. श्री. वापि यथा कामं 7. श्री. पङ्कजं वापि उत्सेध. 8. म तृतीयाशकमेव वा. 9. श्री. अष्ट. 10. श्री. म. सकुंचित. 11. श्री. धरे त्वथवासीने.

कुर्यान्मनोहरां यस्मात्तेजोराशिः प्रभा मता । द्व्यङ्गुलं काण्डमानं स्यात्पुष्पक्षेत्रं तदर्धकम् ॥ २८ ॥
अर्धाङ्गुलं भवेत्क्षेत्रं काण्डं तदनुपूर्ववत् । वेत्रं तदनु भूयोऽपि ज्वालामालोपरि स्थिताः ॥ २९ ॥
अर्धाङ्गुलान्तरालाः स्युर्ज्वालाः पञ्चशिखास्तथा । त्रिशिखा वा यथायोगं दक्षिणावर्तशोभिताः ॥३०॥

—प्रभाया मीनादिमूर्तिकल्पनम्—

युग्मा वास्युरयुग्मा वा काण्डे काण्डे प्रकल्पयेत् । दशावतारमूर्तीर्वा मीनाद्याः केशवादिकाः ॥ ३१ ॥
प्रभायाः पार्श्वयोः पृष्ठे शङ्कुनालं प्रकल्पयेत् ।

—तोरणप्रभा—

बिम्बे यानादिरूढे तु कर्तव्या तोरणप्रभा । अन्तर्बहिश्च दार्ढ्यार्थं[1]मायनं तु निवेशयेत् ॥ ३२ ॥

—बिम्बप्रभासनानि लोहजान्येव—

बिम्बं प्रभामासनं वा लोहजं परिकल्पयेत् ॥ ३३ ॥

—लोहमूर्तिनिर्माणक्रमः—

द्रावयित्वा मधूच्छिष्टं प्रतिमां तेन कल्पयेत् । धान्यराशिं विनिक्षिप्य तदूर्ध्वे तिलतण्डुलम् ॥३४॥
चक्राब्जं तु लिखेत्तस्मिन्प्रागग्रान्निक्षिपेत्कुशान् । वस्त्रं च नूतनं तस्मिन् विस्तीर्य प्रतिमां क्षिपेत् ॥
प्राचीनशिरसं पश्चात् जुहुयादनले गुरुः । पुष्पैः समिद्भिर्लाजैश्च सर्पिषाष्टोत्तरं शतम् ॥ ३६ ॥
जुहुयान्मूलमन्त्रेण नृसूक्तेन चरुं पुनः । हुत्वैवं विधिनाचार्यः स्रग्वी कनकभूषणः ॥ ३७ ॥
संपाताज्येन संसिञ्चेत्प्रतिमां तत्वपद्धतिम् । ध्यायेत्तत्र शुभे लग्ने पूजयेन्मूलविद्यया ॥ ३८ ॥
यजमानो गुरुं पूज्य बहुभिस्तोषयेद्धनैः । ब्राह्मणान् विदुषो वित्तैर्बहुभिः परितोषयेत् ॥ ३९ ॥
स्थपतिः प्रतिमां कुर्यात् रथकाराभ्यनुज्ञया । मानोन्मानप्रमाणैस्तां प्रतिमां कारयेच्छुभाम् ॥ ४० ॥
मृदालेपं ततः कुर्याच्छिल्पशास्त्रानुसारतः ।

—लोहविकल्पः—

सुवर्णं रजतं ताम्रं [2]विशुद्धं लोहमुत्तमम् ॥ ४१ ॥
आदाय धान्यराश्यां तु पूर्ववन्न्यासकल्पनम् । पूर्ववच्चैव जुहुयादाचार्यश्चोदितक्रमात् ॥ ४२ ॥
द्रावयित्वा ततः शुद्धं लोहं न्यायसमार्जितम् । स्थपतिः प्रतिमां तेन कुर्याच्छास्त्रोक्तवर्त्मना ॥ ४३ ॥
लोहजां प्रतिमां चैवं कल्पयेत्परमात्मनः । स याति परमं स्थानं पुनरावृत्तिवर्जितम् ॥ ४४ ॥

---

1. म. मायसं. 2. श्री. त्रिविधं.

## प्रतिमाया हस्तादिवैकल्ये शान्तिः

प्रतिमाहस्तपादादिवैकल्ये शान्तिमाचरेत् । आचार्यो दानहोमाद्यैस्ततः शान्तिर्भविष्यति ॥ ४५ ॥
समादध्यादवयवान् विकलान् स्थपतिः पुनः ।

## चित्रार्धचित्रचित्राभासादिनिरूपणम्

चित्रं चाप्यर्धचित्रं च चित्राभासमिति त्रिधा ॥ ४६ ॥
कौतुकं तत्र दृश्यन्ते यस्मिन्नवयवाः स्फुटम् । सर्वे समन्ताच्चित्रं तु तद्विज्ञेयं चतुर्मुख ॥ ४७ ॥
हस्ताद्यवयवा यस्मिन् [1]उरोभागे [2]समीक्षितुम् । शक्यं नापरभागे तु तदर्धं चित्रमिष्यते ॥ ४८ ॥
रूपिता प्रतिमा या तु वर्णैरेव सितादिभिः । कुड्यादौ चित्रमाभासं तत्कौतुकमुदाहृतम् ॥ ४९ ॥
चित्रमुत्कृष्टमित्युक्तमर्धं मध्यममुच्यते । आभासमधमं विद्धि मन्दिरे वाथ वेश्मनि ॥ ५० ॥
स्थापयेद् ध्रुवबिम्बार्थं पूर्वालाभे यथोत्तरम् ।

## प्रतिमानां तालादिमानम्

अतः परं प्रवक्ष्यामि प्रतिमामान[3]लक्षणम् ॥ ५१ ।
एकादिदशपर्यन्तं संख्ययोपेयुषां भिदाम् । तालानामुत्तमादीनां रूपाविष्कृति [4]पूर्वकम् ॥ ५२ ॥
यत्किञ्चित्प्रतिमामानं विभज्य दशधा पुनः । एकं द्वादशधा भङ्क्त्वा [5]तत्रैकांशो[6]ऽङ्गुलः स्मृतः ॥५३॥
[7]अङ्गुलं चाष्टधा कृत्वा तत्रैकांशो यवः स्मृतः । तेनैवाङ्गुलमानेन अङ्गप्रत्यङ्गकल्पना ॥ ५४ ॥
द्वादशाङ्गुलकं मानं तालाख्यमिह कथ्यते । द्वादशाङ्गुलकस्तालो मुख्यश्चेति प्रकीर्तितः ॥ ५५ ॥
द्व्यङ्गुलं गोलकं ज्ञेयं कलेति व्यपदिश्यते । एकाङ्गुलं भवेन्मात्रा भागो मात्राचतुष्टयम् ॥ ५६ ॥
उत्तमाधममध्यानि तालानि कमलासन । एकादिदशपर्यन्तं संख्यया [8]च्छेदयन्ति च ॥ ५७ ॥
मीयते दशतालेन वासुदेवः सनातनः । नवार्धतालौ ब्रह्मेशौ नवतालेन देवताः ॥ ५८ ॥
अष्टार्धतालौ द्वारस्थाः कुमुदादिगणास्तथा । अष्टतालाँश्च मनुजान् पिशाचादींश्च सप्तकान् ॥ ५९ ॥
षट्तालान् कुब्जकान् विद्धि पञ्चतालाँस्तु वामनान् । चतुस्तालानि भूतानि त्रितालाः किन्नरास्तथा ॥६०॥
मत्स्या द्वितालका ज्ञेयास्तालेनैकेन पन्नगान् । दशतालं चतुर्विंशदङ्गुलीनां शतं भवेत् ॥ ६१ ॥
उत्तमं मध्यमं विंशत्कनिष्ठं षोडश स्मृतम् । नवतालं तु तच्छ्रेष्ठं यच्छतं द्वादशाधिकम् ॥ ६२ ॥

---

1 म. पुरोभागे. 2 श्री. म. समीक्षितम्. 3. म. मुत्तमम्. 4. श्री. पूर्ववत्.
5 श्री. त्यैकाशो. 6 म. यवः—श्री. ङ्गुलि. 7. श्री. अङ्गुलि. 8. म. भेदयन्ति.

अष्टाधिकं शतं मध्यं कनीयश्चतुरु[1]त्तमम् । अष्ट[2]तालं शतं श्रेष्ठं मध्यमं षण्णवत्यपि ॥ ६३ ॥
चतुर्थहीनमधममष्टतालं प्रकीर्तितम् । उत्तमादिक्रमोऽन्येषु सप्ततालादिषूह्यते ॥ ६४ ॥
चतुश्चतुर्विहीनं चेत्क्रमादङ्गुलिभिर्भवेत् । पूर्वं पूर्वं [3]यथोक्तं तत्त्रैविध्य[4]मवगम्यताम् ॥ ६५ ॥
त्रयो[5]दशार्धाङ्गुलिकं दशतालोत्तमे मुखम् । अर्धेनाङ्गुलिना हीनं मध्यमं संप्रचक्षते ॥ ६६ ॥
अर्धेनाङ्गुलिना हीनमेकैकमितरेष्वपि । ध्रुवायामुत्तमं तालमर्चायां मध्यमं भवेत् ॥ ६७ ॥
अधमं परिवाराणां सर्वेषां कमलासन ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे लोहजप्रतिमानिर्माणतालविभागो नाम एकोनविंशोऽध्यायः ॥

---

## विंशोऽध्यायः ।

### प्रतिमामानविधिः

श्रीभगवान्—

अतः परं प्रवक्ष्यामि प्रतिमामानमुत्तमम् । मानं प्रमाणमुन्मानं [6]इति मानं त्रिधा भवेत् ॥ १ ॥
*मानमुत्सेधमानं स्यादुन्मानं [7]सहनं मतम् । मानं च तिर्यगूर्ध्वं यत्तत्प्रमाणमिहोच्यते ॥ २ ॥
[8]तत्र प्रतिकृतेस्तावत्तदङ्गानां च कथ्यते । उत्सेधमानं मूर्धादि पादान्तमनुपूर्वशः ॥ ३ ॥
लब्धानां [9]देहतस्तावदङ्गुलीनां शतेन तु । चतु[10]र्विंशतिमानेन प्रतिमां परिकल्पयेत् ॥ ४ ॥
उष्णीषमङ्गुलिमितं केशान्तं त्र्यङ्गुलं [11]मतम् । [12]दृक्सूत्रान्तं तदारभ्य षट्त्रिंशद्यवसंमितम् ॥ ५ ॥
तद्वन्नासापुटान्तं स्यात्तद्वच्च चिबुकावधि । तेन केशान्तमारभ्य मुखमानं चतुर्मुख ॥ ६ ॥
अष्टोत्तरयवशतं चिबुकावयवावधि । गलमर्धाङ्गुलं सार्धं त्र्यङ्गुलं कण्ठमिष्यते ॥ ७ ॥
हिक्कासूत्रं समारभ्य हृदयान्तं [13]मुखे स्थितम् । ततः प्रभृति नाभ्यन्तं सार्धं [14]सत्रिदशाङ्गुलम् ॥८॥
ततः प्रभृति मेढ्रान्तं तद्वदुत्सेधमिष्यते । तन्मूलाज्जानुपर्यन्तं त्रिन्यूनं त्रिदशाङ्गुलम् ॥ ९ ॥
चतुरङ्गुलमुत्सेधं जानुमण्डलमिष्यते । [15]अक्षान्तं जानुनोऽधस्तादूरुतुल्यमितीरितम् ॥ १० ॥

---

1. म. त्तरम्. 2. म. ताली 3 म यथोक्तेन 4. म. मनुगम्यताम्. 5. श्री. दशाङ्गुलामानं. 6. श्री. परिमाणोपमानकम्.

* अत्र "लबमान षडैतानि मानानि कथायाम्यहम् ।" इति श्री ग्रन्थे एष अर्धश्लोकः अधिकतया दृश्यते. 7. श्री. नहन भवेत्. 8 श्री. तस्या . 9. श्री देहिना 10 श्री. विंशेन. 11. श्री. ततः. 12. म. तत्सूत्रान्तं—श्री. दिक्सूत्रान्तं. 13. श्री. मुखोन्नतम्. 14 श्री. तु. 15. म अष्टान्त.

ततस्तालान्तमुत्सेधं चतुरङ्गुलसंमितम् । देहाङ्गुलानि यावन्ति दश तालेऽभिपूजिते ॥ ११ ॥

विभज्य तावन्त्युक्तानि मध्यमे श्रूयतां क्रमः । त्रयोदशाङ्गुलं वक्त्रं त्रिस्थानं च तदङ्गुलम् ॥ १२ ॥

षड्विंशत्यङ्गुलोत्सेधमूरुमानमुदाहृतम् । तद्वज्जङ्घासमुत्सेध [1]मुत्तरेणेतरत्समम् ॥ १३ ॥

अधमे दशताले तु मुखं शतयवं मतम् । त्रिस्थानं [2]तावदेव स्यादूरुर्यवशतद्वयम् ॥ १४ ॥

जङ्घा च तत्समो[3]त्सेधा मुख्येनान्यत्समं मतम् । विंशद्यवशतं पादद्राघिमा कमलासन ॥ १५ ॥

[4]अङ्गुष्ठं वेदमात्रं स्यात्तदायामा च तर्जनी । एकत्रिंशद्यवायामा मध्यमाङ्गुलिरिष्यते ॥ १६ ॥

त्रिंशद्यवाऽनामिका स्यात्कनिष्ठा त्र्यङ्गुलाऽपि च । यवैश्च पञ्चभिर्युक्ता पार्ष्णी च चतुरङ्गुला ॥ १७ ॥

हिक्का [5]तयोरधोबाहुरङ्गुली सप्तविंशतिः । ततश्च मणिबन्धान्तं षड्विंशत्यङ्गुलायतम् ॥ १८ ॥

यवद्वयेन च युतं मणिबन्धात्तलं पुनः । मध्यमाङ्गुलिमूलान्तं पञ्चाशद्यवसंमितम् ॥ १९ ॥

पञ्चाङ्गुलमथाङ्गुष्ठं तर्जनी तद्वदायता । षड्यवैश्चाधिकायामा मध्यमा तु षडङ्गुला ॥ २० ॥

आयता षड्यवैश्चापि तत्समाऽनामिका [6]मता । कनिष्ठाङ्गुष्ठतुलिता मांसलग्न[7]नखावधि ॥ २१ ॥

एकाङ्गुला नखायामा शिष्टा षड्यवसंमिता । बाहुवच्चोपबाहुः स्याच्चतुरङ्गुल[8]मायतः ॥ २२ ॥

चतुर्यवं चोर्ध्वकण्ठं नालं पञ्चाङ्गुलायतम् । लिङ्गं पञ्चाङ्गुलायामं मुष्कं तु चतुरङ्गुलम् ॥ २३ ॥

सार्धाष्टाङ्गुलिविस्तारं ललाटं तदनन्तरम् । द्वादशाङ्गुलविस्तारं बालचन्द्रसमा[9]कृति ॥ २४ ॥

ततस्तु कर्णयोर्मध्यं सार्धं सत्रिदशाङ्गुलम् । दशाङ्गुलमधस्तस्य विस्तारं चिबुकस्य तु ॥ २५ ॥

सपादं द्व्यङ्गुलं पूर्णं चापतुल्याकृतिर्भवेत् । मूलमध्याग्रविस्तारो ग्रीवायाः क्रमशो भवेत् ॥ २६ ॥

नवाङ्गुलं तथैकोनं सार्धं सप्ताङ्गुलिस्तथा । हिक्का[10]स्ततोरधो बाहुमूलयोरन्तरं भवेत् ॥ २७ ॥

यवैश्चतुर्भिर्विस्तीर्णं सचत्वारिंशदङ्गुलम् । [11]कक्षयोर्मध्यविस्तारस्त्र्यङ्गुलः सार्धविंशतिः ॥ २८ ॥

[12]अष्टादशाङ्गुलं मानं स्तनयोरपि चान्तरम् । षोडशाङ्गुलविस्तारं तुन्दमध्यमुदाहृतम् ॥ २९ ॥

अष्टादशा[13]ङ्गुला श्रोणीरधरोदरमिष्यते । कटिप्रदेशविस्तारस्त्र्य[14]ङ्गुलः सार्धविंशतिः ॥ ३० ॥

ऊरुमूलस्य विस्तारः सार्धं सत्रिदशाङ्गुलम् । अग्रमेकाङ्गुलं सार्धद्व्यङ्गुलं मध्यमिष्यते ॥ ३१ ॥

---

1. श्री. मुत्तमेनै. 2. श्री. तद्वदेव. 3. श्री. त्सेध 4. श्री. अङ्गुष्ठे. 5. श्री. तयोर्ह्यधो. 6. म. स्मृतम्. 7. श्री. नखायतिः. 8. श्री. मायतम्. 9. श्री. कृति.. 10. श्री. स्तह्यधो. 11. श्री. अक्षयो. 12. श्री. अष्टादशाङ्गुलमितं. 13. श्री. ङ्गुलं. 14. श्री. ङ्गुलं.

द्व्यङ्गुलो मूलविस्तारो लिङ्गस्य समुदाहृतः । विस्तीर्णं त्र्यङ्गुलं मूलं मध्यमर्धाधिकं पुनः ॥ ३२ ॥
विस्तीर्णमग्रमुष्कस्य द्वात्रिंशद्यव[1]संमितम् । विस्तीर्णमेकादशभिरङ्गुलैरूरुमध्यमम् ॥ ३३ ॥
अग्रं दशभिरेतस्य विस्तीर्णं कमलासन । नवाङ्गुलं जानुचक्रं पार्श्वमर्धेन्दुसन्निभम् ॥ ३४ ॥
मूलं नवाष्टौ मध्यं स्याज्जङ्घाग्रं सार्धसप्तकम् । विस्तीर्णो नलकाभागः सार्धैश्च चतुरङ्गुलैः । ३५ ॥
अङ्घ्रिमूलस्य विस्तारस्त्र्यङ्गुलः सचतुर्यवः । सार्धपञ्चाङ्गुलं मध्यमग्रं सार्धषडङ्गुलम् ॥ ३६ ॥
सार्धमष्टाङ्गुलं मूलं बाहू सप्ता[2]ङ्गुलौ पुनः । [3]मध्याग्रे तुल्य[4]विस्तारे प्रकोष्ठा[5]वयवः पुनः ॥ ३७ ॥
सार्धेन सप्तभिर्मूले विस्तीर्णं सार्धपञ्चभिः । मध्ये चतुर्भिरग्रे स्यान्मणिबन्धस्य तूच्यते ॥ ३८ ॥
पञ्चाङ्गुलार्ध[6]सहितः तद्वत्करतलं स्मृतम् । अङ्गुष्ठे मूलविस्तारो द्व्यङ्गुलो मध्य[7]माङ्गुलिः ॥ ३९ ॥
सषड्यवं तु मुष्ट्यग्रं [8]अङ्गुलेनैव संमितम् । तर्जन्या मूलविस्तारो नवभिः संमितो यवैः ॥ ४० ॥
मध्यमेकाङ्गुलं सप्तयवमग्रमुदाहृतम् । मूलं दशयवं मध्यं मध्यमाया यवा नव ॥ ४१ ॥
अग्रमेकाङ्गुलं प्रोक्तमितरा तर्जनीसमा । मूलमष्टौ कनिष्ठाया यवाः सप्तैक[9]मध्यमा ॥ ४२ ॥
षड्यवाङ्गुलमग्रेभ्यः पादोना नखविस्तृतिः । मध्ये कर[10]तले रेखा मध्यमामूलमुत्थिता ॥ ४३ ॥
कनिष्ठामूलमारभ्य रेखा मध्यमगा भवेत् । मध्यमाङ्गुलितर्जन्योर्निर्मातव्या विचक्षणैः । ४४ ॥
अङ्गुष्ठमूलमारभ्य तर्ज[11]न्यन्तश्च मध्यमा । तयोश्च रेखयोर्मध्ये तर्जनीमूलगामिनी ॥ ४५ ॥
रेखा कल्प्या यथाशास्त्रं शास्त्राभिज्ञेन शिल्पिना । ललाटस्य च विस्तारः सपादद्व्य[12]ङ्गुलो भवेत् ॥
तस्याधस्ताद्भ्रुवौ कल्प्यौ चत्वारिंशद्यवायुतौ । मध्ये यवेन विस्तीर्णे यूकाग्रे चापसन्निभे ॥ ४७ ॥
तयोर्मध्यं नवयवं अष्टादशयवायतम् । चक्षुःकनीनिकायामो विस्तारश्च यवः स्मृतः ॥ ४८ ॥
अङ्गुलं श्वेतबिम्बस्य विस्तारं कृष्णमण्डलम् । यवोनमङ्गुलं ज्योतिस्तन्मध्ये यवसंमितम् ॥ ४९ ॥
यूकमाना तु तन्मध्ये दृष्टिः पक्ष्मावली पुनः । ऊर्ध्वा[13]समन्विता सार्धत्र्यङ्गुला दशभिर्यवैः ॥ ५० ॥
विस्तीर्णा तु यवायामा विस्तारस्तु तदर्धकः । अशीतिः पक्ष्मरोमाणि वक्राग्राण्यसितानि च ॥५१॥
द्व्यङ्गुलं चक्षुषोर्मध्यं मध्यं च श्रुत्यपाङ्गयोः । चत्वारिंशद्यवं कर्णविस्तारो द्व्य[14]ङ्गुलोभवेत् ॥५२॥

---

1. म. संयुतम्. 2. म. ङ्गुल. 3. श्री. मध्याग्रौ. 4. श्री. विस्तारौ. 5. म. वयव.
6. श्री. सहितौ. 7. म. ङ्गुलम्. 8 श्री. अङ्गुलेन समन्वितम्. 9 म. मध्यमम्. 10. म. तला.
11. श्री. न्याश्चैव. 12. म. ङ्गुला. 13. श्री. म. समायता. 14. म. ङ्गुल.

ऊर्ध्वं कर्णस्य चायामः सहार्धचतुरङ्गुलः । नालं पञ्चाङ्गुलमितं [1]विस्तारः षड्[2]यवः पुनः ॥ ५३ ॥
पश्चाच्चतुर्यवा नाली नालतुल्यं चतुर्मुख । श्रवणस्य च पिप्पल्याः मध्यगतं चतुर्यवम् ॥ ५४ ॥
त्रिवक्त्रकर्णपिप्पल्या गल्ल[3]पात्रमिव स्थितम् । बन्धनं त्र्यङ्गुलं रन्ध्रं नेत्रसूत्र[4]समुन्नतम् ॥ ५५ ॥
नासिकामूलमध्याग्रविस्तारः कथ्यते क्रमात् । अङ्गुलं [5]चाङ्गुलं सार्धद्व्यङ्गुलं सचतुर्यवम् ॥ ५६ ॥
अङ्गुलेनोन्नतं मूलं तेन सार्धेन मध्यमम् । द्वाभ्यां यवाभ्यां मूलेन द्व्यङ्गुलेनाग्रमुन्नतम् ॥ ५७ ॥
षड्यवं सुषिरं तस्य पुटमध्यं चतुर्यवम् । पुटपार्श्वस्य विस्तारो द्वियवः परिकीर्तितः ॥ ५८ ॥
उत्सेधोऽर्धाङ्गुलस्तस्य नासिका तिलपुष्पवत् । उत्तरोष्ठायतं सार्धं चतुरङ्गुलमिष्यते ॥ ५९ ॥
विस्तारोऽर्धाङ्गुलस्तस्य परं सार्धाङ्गुलायतम् । विस्तीर्णमङ्गुलं तस्य पाली चैकयवा मता ॥ ६० ॥
चिबुकोष्ठौ दशयवौ विस्तारायामसंमितौ । [6]गुल्फं पादाङ्गुलोत्सेधं दर्पणोदरसन्निभम् ॥ ६१ ॥
विस्तीर्णावयवौ तुल्यौ राजदन्तौ चतुर्यवौ । द्वात्रिंशद्दशनाः कल्प्याः यथा शास्त्रोक्तवर्त्मना ॥ ६२ ॥
जिह्वा षडङ्गुलायामा विस्तीर्णा त्र्यङ्गुलाभवेत् । रेखात्रयाङ्किता ग्रीवा हिक्कासूत्रात्स्तनस्थितिः ॥६३॥
एकादशाङ्गुलं वृत्तं द्व्यङ्गुलं स्तनमण्डलम् । चतुर्यवं चूचुकं स्यात् स्तनमण्डलमध्यगम् ॥ ६४ ॥
चतुर्यवं नाभिगतं दक्षिणावर्तमिष्यते । [7]अध्यर्धमङ्गुलं वृत्तमक्षमर्धाङ्गुलोन्नतम् ॥ ६५ ॥
उष्णीषात्पृष्ठकेशान्तमेकाधिकदशाङ्गुलम् । उष्णीषात्पार्श्वकेशान्तं द्वादशाङ्गुलमानकम् ॥ ६६ ॥
कर्णयोरन्तरं विद्यात् सार्धं सत्रिदशाङ्गुलम् । मूलमध्याग्रभागेषु पृष्ठग्रीवा यथाक्रमम् ॥ ६७ ॥
विस्तीर्णा नवभिः सार्धैरङ्गुलैर्नवभिस्तथा । अष्टाभिश्च भवेत्तस्या अधस्तात्ककुदस्थितिः ॥ ६८ ॥
आयामोत्सेधविस्तारैः ककुदं तच्चतुर्यवम् । षट्त्रिंशदङ्गुलं बाह्वोर्मध्यं विस्तारपृष्ठतः ॥ ६९ ॥
षड्विंशतिश्चाङ्गुलानां कक्षयोरन्तरं भवेत् । पृष्ठमध्यस्य विस्तारो ब्रह्मन् सप्तदशाङ्गुलः ॥ ७० ॥
विस्तीर्णा पञ्चविंशत्या श्रोणीपार्श्वौ तथाङ्गुलैः । कटिप्रदेशविस्तारः षड्विंशत्यङ्गुलो भवेत् ॥ ७१ ॥
षट्त्रिंशदङ्गुलं मध्ये ककुदस्य कटे[8]स्तथा । द्व्यङ्गलोन्नतमेतस्य स्फिचौ तन्मध्यमङ्गुलम् ॥ ७२ ॥
[9]अङ्गुलं स्तनयोर्मूलं मध्यं सप्ताङ्गुलं भवेत् । अग्रं त्र्यङ्गुलविस्तारमूर्वोर्मूलादिषु त्रिषु ॥ ७३ ॥
भवेत्क्रमेण विस्तारः सार्धः सत्रिदशा[10]ङ्गुलः । द्वादशाङ्गुलयुक्तः स्यात् तथैव द्वादशाङ्गुलः ॥ ७४ ॥

---

1. म विस्तारं. 2. म. यवं. 3 म पत्र 4. म सम मतम्. 5. म. द्वचङ्गुलं.
6. श्री. म. गल. 7. श्री. म. अर्धार्ध. 8. श्री. स्थिता. 9. म. अष्टाङ्गुलस्तयोर्मूलं. 10. म. ङ्गुलम्.

जान्वष्टाङ्गुलविस्तारं सार्धमष्टाङ्गुलं भवेत् । जङ्घामध्यं सुविस्तीर्णं नालिका चतुरङ्गुला ॥ ७५ ॥
चतुर्यवाधिका चैव गुल्फश्च चतुरङ्गुलः । विस्तारमानं त्रिगुणं सर्वेषां सहनं मतम् ॥ ७६ ॥
अभीतिदो वा वरदो मुख्यो वामेतरः करः । स्तनसूत्रसमं कार्यं अङ्गुल्यग्रं करस्य तु ॥ ७७ ॥
तयोर्भवेदन्तरालं द्वादशाङ्गुलमब्जज । अङ्गुष्ठतर्जनीमध्ये सनालं कमलं भवेत् ॥ ७८ ॥
वरदे कमलाकारं लिखेत्करतलोदरे । अधोमुखे वामहस्ते मुख्ये कुर्याद् गदां शुभाम् ॥ ७९ ॥
चतुस्तालायतां मूले स्थूलामग्रे कृशामृजुम् । त्र्यङ्गुलं मूल[1]सहनमग्रे [2]सहनमङ्गुलम् ॥ ८० ॥
द्व्यङ्गुलं सार्धमितरद्गदामध्यं चतुर्मुख । कटिप्रसव्यं करयोरन्तरं द्व्यङ्गुलं भवेत् ॥ ८१ ॥
कटिस्पृशं करं कुर्यात्प्रसव्यं गदया विना । उद्धरे[3]द्बहु सीमान्तमूर्ध्वहस्तौ धृतायुधौ ॥ ८२ ॥
बाहुप्रकोष्ठयो[4]र्मध्यं मूलमष्टाङ्गुलं भवेत् । मध्यं दशाङ्गुलमितमग्रमानं मुखं स्मृतम् ॥ ८३ ॥
ऊर्ध्वे हस्तद्वयाङ्गुष्ठे सहानामिकया नतम् । तर्जनीमध्यमाभ्यां तु [5]धारयन्तं तथाम्बुजम् ॥ ८४ ॥
चक्रं सुदर्शनं वृत्तं द्वादशाङ्गुलमानकम् । अष्टाङ्गुलमरक्षेत्र द्व्यङ्गुला चक्रपिण्डिका ॥ ८५ ॥
तद्बत्स्यान्नेमिवलयं चतुर्ज्वालासमन्वितम् । नाभावुभयतो ज्वाला त्रिशिखावर्तशोभिता ॥ ८६ ॥
अध्यर्धद्व्यङ्गुलोत्सेधा विस्तीर्णा[6]र्धाङ्गुलाधिका । अराणि यवतुल्यानि नेत्रतुल्यानि वा पुनः ॥ ८७ ॥
अष्टौ द्वादश वा षड्वा षड्ज्वालं शङ्खमिष्यते । विस्तारोऽष्टाङ्गुलस्तस्य द्वादशाङ्गुलमायतम् ॥ ८८ ॥
प्रदक्षिणावर्तयुतं ज्वालाग्रं शङ्खचक्रयोः । केशान्तेन समं यद्वा नेत्रसूत्रेण तत्समम् ॥ ८९ ॥
सार्धाङ्गुलान्तरादूर्ध्वं जानुनी द्व्यङ्गुलान्तरे । जङ्घयोर्विंशतियवमन्तरालं प्रशस्यते ॥ ९० ॥
अक्षयोस्त्र्यङ्गुलं मध्यं तयोः सप्ताङ्गुलं भवेत् । चरणाङ्गुष्ठयोर्मध्यं नवाङ्गुलमुदाहृतम् ॥ ९१ ॥
ऋजुस्थितस्य चरणं शय्यायां ऋजुदक्षिणम् । इतरत्कुञ्चितं सप्तविंशत्यङ्गुलमन्तरम् ॥ ९२ ॥
अङ्गुष्ठयोर्गुल्फमध्यं चतुरङ्गुलमिष्यते । जान्वन्तरालमुदितं सार्धं सत्रिदशाङ्गुलम् ॥ ९३ ॥
सव्येतरकरं [7]मौलेरग्रान्तं विनिवेशयेत् । प्रसारयेद्वामहस्तं आजानु कमलासन ॥ ९४ ॥
दक्षिणे कमलं वामे गदां हस्ते प्रकल्पयेत् । भिद्यते प्रतिमा भङ्गैस्त्रिभिरेतैश्चतुर्मुख ॥ ९५ ॥
अभङ्गसमभङ्गाभ्यां अतिभङ्गेन चैव हि । शिरोमध्ये नासिकाग्रे आस्यमध्ये गलस्य च ॥ ९६ ॥
मध्ये च हृदये नाभौ मध्ये लिङ्गस्य [8]वामतः । भागे षडङ्गुले चोरौ वामे मध्ये च गुल्फयोः ॥ ९७ ॥

---

1. श्री. म. नहन. 2. श्री. म नहन. 3. श्री. बाहु. 4. म. मध्ये. 5. म. धार्यं चक्रं. 6. श्री. र्धाधिकाङ्गुला. 7. म. मूले अग्रान्त. 8. म. वामनः.

लम्बयेत् सूत्रमाभङ्गं [1]भिन्ना च प्रतिमा मता। †" यथोक्त प्रतिमामानादूना वा त्रिभिरङ्गुलैः ॥ ९८॥
शिखामणिगतं सूत्रं वामपूरितमध्यगम् । वामे ललाटे मकरे वामे वामे च चक्षुषी ॥ ९९॥
नाभौ मध्ये नलकयोर्मध्ये च यदि लम्बयेत् । समभङ्गविशिष्टा सा न्यूनैषा चतु[2]रङ्गुलैः ॥" १००॥
मूर्ध्नि वामे ललाटे च वामनेत्रस्य मध्यगम् । आस्यमध्ये तथा नाभौ दक्षिणे गुल्फमध्यगम् ॥१०१॥
सूत्रं प्रलम्बयेदेवं अतिभङ्गा तु सा मता । न्यूना पञ्चाङ्गुलैरेषा प्रतिमा पूर्वमानतः ॥ १०२ ॥
अतिभङ्गः [3]शयानायाः प्रशस्तो रामकृष्णयोः ।

## किरीटादीना मानम्

सहजानां [4]भूषणादि किरीटानां चतुर्मुख ॥ १०३ ॥
वक्ष्यामि मानमधुना यथातथमनुक्रमात् । ‡ चतुर्विंशाङ्गुलायामं यद्वा पञ्चदशाङ्गुलम् ॥ १०४ ॥
मूलमध्याग्र [5]सहनं किरीटस्य यथाक्रमम् । त्रिंशता सप्तभिर्द्वाभ्यां एकेनापि तथाङ्गुलैः ॥ १०५ ॥
तस्य मध्ये चतुर्दिक्षु पूरितानि तथाङ्गुलैः । तस्य मध्ये चतुर्दिक्षु पूरितानि प्रकल्पयेत् ॥ १०६ ॥
शोभयेच्च महारत्नैरग्रे चैकशिखा[6]मणिम् । चतुर्दशाङ्गुलोत्सेधं कल्पयेत् केशबन्धनम् ॥ १०७ ॥
मूलपट्टं किरीटस्य विस्तीर्णं द्व्यङ्गुलं भवेत् । एकाङ्गुलममुष्याग्रं त्र्यङ्गुलं च शिखामणिः ॥ १०८॥
पद्ममष्टदलं कुर्यादधस्ताच्च शिखामणेः । द्विगोलकायतं [7]चित्रैरन्यैरपि च शोभयेत् ॥ १०९ ॥
शिरसः पृष्ठभागे स्याच्छिरश्चक्रं तु चक्रवत् । विनाकृतं तु ज्वालाभिः पद्मं यद्वा यथारुचि ॥११०॥
[8]प्रकल्प्यं मध्यतो दाम चक्रे गोलकमायतम् । [9]सहनं द्व्यङ्गुलं तस्य नालं स्याद्गोलकायतम् ॥१११॥
मकरं गोलकोत्सेधं कुर्यादष्टाङ्गुलायतम् । तद्वक्त्रात्सुमनो [10]दाम निःसृतं बालचन्द्रवत् ॥ ११२ ॥
द्व्यङ्गुलं कर्णसुमनः कर्णदाम च लम्बयेत । हारं त्र्यङ्गुलविस्तारमग्रयोर्नेत्रबन्धनम् ॥ ११३ ॥
मुक्ताविभूषितं मध्ये महारत्नपरिष्कृतम् । कुर्याच्च दक्षिणे वक्षस्स्थले श्रीवत्समङ्गुलम् ॥ ११४ ॥
अर्धाधिकं त्रिकोणं च तन्मध्ये कमलालयाम् । द्विहस्तामुद्यदम्भोजधारिणीं श्रियमद्भुताम् ॥११५॥
अपराभ्यां च हस्ताभ्यां वराभयसमन्विताम् । किरीटहारकेयूरसर्वाभरणभूषिताम् ॥ ११६ ॥
[11]कुर्याद्गोलकविस्तारं मुखे पञ्चाङ्गुलायतम् । त्रिगुणं ब्रह्मसूत्रं स्यान्नाभेश्चापि प्रदक्षिणम् ॥ ११७ ॥

---

1. म. भिन्नौ † एते पञ्च अर्धश्लोकाः श्री ग्रन्थे न सन्ति. 2. म ङ्गुलम्.
3 म शयानस्य. 4 श्री किरीटादि भूषणाना.

‡ चतुर्विंशाङ्गुलायाम किरीटमथवा भवेत् । अष्टादशाङ्गुलायाम यद्वा पञ्चदशाङ्गुलम् ॥ इति श्री ग्रन्थे दृश्यते. 5 श्री नहन 6. म. मणि 7 म. चित्रे. 8. म प्रकल्प 9. श्री. नहनं. 10. म. नाम 11 म. कुर्यात् गोलक.

एकाङ्गुलं चोत्तरीयं नेत्रबन्धेन बन्धयेत् । विस्तीर्णं द्व्यङ्गुलं मध्ये [1]त्वग्रमेकाङ्गुलं भवेत् ॥ ११८ ॥
मुक्तादामपरिष्कारं [2]सर्वाभरणभूषितम् । कुक्षिबन्धनमाश्रय्यं नेत्रबन्धेन योजयेत् ॥ ११९ ॥
मुक्तादाम च केयूरं कुर्या[3]त्पूरितसन्निभम् । सप्ताङ्गुलैश्च विस्तीर्णं नानारत्नपरिष्कृतम् ॥ १२० ॥
गुलिकाङ्गुलविस्तीर्णा आयता द्व्यङ्गुलेन च । गुलिकानां त्रयं कुर्यान्नेत्रबन्धेन बन्धयेत् ॥ १२१ ॥
सर्वरत्नपरिष्कारान् वलयाँस्त्रीन् प्रकल्पयेत् । एकाङ्गुलपरीणाहान् कटकैश्चोपशोभितान् ॥ १२२ ॥
सौवर्णस्याङ्गुलीयानि बद्धानेकमणीनि च । परिणाहो भवेत्तेषां द्वियवस्त्रियवोऽपि वा ॥ १२३ ॥
मध्यमा[4]मङ्गुलिं नैव मण्डयेदङ्गुलीयकैः । त्र्यङ्गुलः कटिसूत्रस्य विस्तारो रत्नशोभितः ॥ १२४ ॥
तन्मध्ये मकरी चैव पञ्चाङ्गुलसमायता । चतुरङ्गुलविस्तारा दंष्ट्राकुटिलमाननम् ॥ १२५ ॥
वृत्ताक्षं भ्रुकुटीयुक्तमास्यनिःसृतमौक्तिकम् । कुर्यान्मौक्तिकदामानि त्रीण्यागुल्फं प्रकल्पयेत् ॥
पादाकल्पं त्रिकटकं द्व्यङ्गुलं परिणाहतः । नूपुरं च तथा कुर्यात्किङ्किणीजालमण्डितम् ॥ १२७ ॥
[5]वस्त्रं च पीत[6]पूर्वं तदागुल्फं पार्श्वलम्बितम् । कल्पयेद्वनमालां तु नानापुष्पसमुज्वलाम् ॥ १२८ ॥
नानारत्नमयीं वापि यद्वा केवलपङ्कजाम् । [7]कर्णतश्चरणं यावल्लम्बयेदद्भुताकृतिम् ॥ १२९ ॥
अथवा वल्लिकाकारां नाहतश्चतुरङ्गुलाम् । प्रद्योतनसहस्राभं द्योतमानं च कौस्तुभम् ॥ १३० ॥
लम्बयेदुरसि स्वच्छ [8]मिन्दिरासोदरं मणिम् । रूपस्याभरणानां च नियमः संप्रदर्शितः ॥ १३१ ॥
न ह्यशेषेण रूपं मे प्रति[9]कर्माणि वा पुनः । निर्मातुं भवता शक्यं किमुतान्यैः कुशिल्पिभिः ॥ १३२ ॥
तथापि शास्त्रा[10]ण्यालोच्य तज्ज्ञैः [11]शास्त्रं विमृश्य च । न्यूनातिरेकरहितं बिम्बं कुर्याद्यथातथम् ॥ १३३ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे प्रतिमामानविधिर्नाम विंशोऽध्यायः ॥

## एकविंशोऽध्यायः ।

### श्रियादिदेवीमूर्तिमानम्

श्रीभगवान्—

अथ श्रियादिदेवीनां निर्माणविधिरुच्यते । दशतालादिना येन तालमानेन [12]कल्प्यते ॥ १ ॥
देवो देव्यः श्रियाद्यास्तु कल्पनीयाश्चतुर्मुख । तदनन्तरतालेन नाधिकेन समेन वा ॥ २ ॥

1. म त्वग्रे. 2. श्री. सर्वरत्नपरिष्कृतम्, 3. श्री. तत्र पृथूदरम्. 4. म. मङ्गुलिकं. 5. म. तद्वस्त्र. 6. म. मूर्विहमागुल्फ. 7. म. कण्ठ. 8. म. मन्दिरा. 9. म. कर्मणि, 10. म. ण्यालोड्य. 11. म. सह. 12. श्री. कल्पितः.

यावन्त्यो याश्च यन्माना: श्रियादेः शूलयष्टयः । तन्मानास्ताश्च तावत्यः कथ्यन्ते संप्रति क्रमात् ॥ ३ ॥

पञ्चतालमितायामा वंशयष्टिश्चतुर्मुख । विस्तारस्त्र्यङ्गुलो मूले सह षड्भिर्यवैरपि ॥ ४ ॥

मध्यतस्त्र्यङ्गुलः सार्धस्त्र्यङ्गुलः पुनरग्रतः । चतुर्दशाङ्गुलो मध्ये [1]मूले पञ्चदशा[2]ङ्गुलः ॥ ५ ॥

नाहोग्रे वंशयष्टेः स्यात् सार्धं सत्रिदशाङ्गुलम् । चतुरश्रः सुवृत्तो वा दण्डः कल्प्यश्च शिल्पिभिः ॥ ६ ॥

अङ्गुलैः सप्तविंशत्या वक्षोदण्डः समायतः । विस्तारो [3]मध्यमस्तस्य त्र्यङ्गुलः षड्यवाधिकः ॥ ७ ॥

अङ्गुलैर्दशभिर्नाहः सह पञ्चभिरङ्गुलैः । किंशुकस्येव मुकुलं तस्याग्रे द्वे प्रकल्पयेत् ॥ ८ ॥

बाहुमूलं चतुर्विंशत्यङ्गुलायाममिष्यते । त्र्यङ्गुलार्धाधिकोमूलविस्तारस्तस्य कल्प्यते ॥ ९ ॥

त्र्यङ्गुलो मध्यविस्तारः तस्याग्रं द्व्यङ्गुलं भवेत् । अष्टादशाङ्गुलायामः प्रकोष्ठस्तस्य मूलतः ॥ १० ॥

विस्तारस्त्र्यङ्गुलो मध्ये द्व्यङ्गुलः स चतुर्यवः । द्व्यङ्गुलोऽग्रे तयोर्मूलशूलयोः सुषिरं भवेत् ॥ ११ ॥

आयामः कटिदण्डस्य भवेत्पञ्चदशाङ्गुलः । विस्तारो मध्यमस्तस्य त्र्यङ्गुलः सह षड्यवः ॥ १२ ॥

[4]सहनं मध्यतस्तस्य भवेत्पञ्चदशाङ्गुलम् । षडङ्गुलः पार्श्वयष्टेः परिणाहः प्रकीर्तितः ॥ १३ ॥

पार्श्वदण्डौ कटीवक्षःशूलयोर्विनियोजयेत् । षड्विंशत्यङ्गुलायाममुरश्शूलमुदाहृतम् ॥ १४ ॥

त्र्यङ्गुलो मूलविस्तारः तस्याग्रं द्व्यङ्गुलं भवेत् । विस्तीर्णं द्व्यङ्गुलं मध्यं शूलस्य च चतुर्यवम् ॥ १५ ॥

[5]पुरुशूलसमायामं जङ्घाशूलं प्रकल्पयेत् । सुषिरं च तयोर्मूलमग्रं मिथुनमेतयोः ॥ १६ ॥

अनुक्तपरिणाहानां त्रिगुणं [6]सहनं मतम् । त्रयोदशविधं शूलं कृत्वा पूर्वोक्तमानकम् ॥ १७ ॥

जलाधिवासाद्यखिलं कुर्याच्छ्रीस्थापने यथा । स्वातन्त्र्ये पारतन्त्र्ये च रत्नन्यासपुरःसरम् ॥ १८ ॥

शूलादिस्थापयेद्रज्जुवेष्टनादि यथापुरम् । कुर्यादावर्णलेपान्तं [7]मानाद्यथ निदर्श्यते ॥ १९ ॥

उत्सेधमङ्गुलशतं विंशमास्थाय कथ्यते । उष्णीषमङ्गुलमितं त्र्यङ्गुलं च शिरो भवेत् ॥ २० ॥

सार्धं त्रिभिर्यवैरक्षिसूत्रान्तं चतुरङ्गुलम् । सङ्गमात् पुटसूत्रान्तं तद्वदम्भोरुहासन ॥ २१ ॥

चिबुकान्तं पुटादर्वाक् सपादचतुरङ्गुलम् । चतुरङ्गुलमाना स्याद् [8]ग्रीवा हिक्कागुणात्ततः ॥ २२ ॥

त्रयोदशाङ्गुलमितं स्तनसूत्रान्तमीरितम् । अतो नु नाभिसीमान्तं भवेत्पञ्चदशाङ्गुलम् ॥ २३ ॥

श्रोणी षडङ्गुलायामा योनिः सार्धाङ्गुलित्रयम् । कटिमानं भवेत्सार्धं त्र्यङ्गुलं चोरुरायता ॥ २४ ॥

अङ्गुलैः पञ्चविंशत्या सार्धैर्जङ्घा च तत्समा । सार्धं च त्र्यङ्गुलं जानुस्तद्वदक्षतलावधि ॥ २५ ॥

---

1. श्री. मूल 2. श्री. ङ्गुलम्. 3. श्री. मध्यतः. 4. श्री नहन. 5. श्री. ऊरुमूलं. 6. श्री. नहन. 7. म. मानान्यथ. 8. म. श्रीवा.

*"विस्तारोऽष्टाङ्गुलस्तस्य द्वादशाङ्गुलमायतम्। प्रदक्षिणावर्तयुतं ज्वालाग्रं शङ्खचक्रयोः ॥ २६ ॥
केशान्तेन समा यद्वा यद्वा सूत्रेण तत्समम्। सार्धान्तरांशुनापूर्वा गुञ्जानि द्व्यङ्गुलान्तरे ॥ २७ ॥
जङ्घयोर्विंशतियवमन्तरालं प्रचक्षते। अक्षयोस्त्र्यङ्गुलं मध्यं स्तनयोः सप्तमाङ्गुलम् ॥ २८ ॥
चरणाङ्गुष्ठयोर्मध्यं नवाङ्गुलमुदाहृतम्"। [1]अक्षात्परतरं तालमङ्गुष्ठं त्रिभिरङ्गुलैः ॥ २९ ॥
अर्धेन चायतं [2]द्वे च तर्जनी स्याद्यवाधिका। यवोना मध्यमान्ये द्वे यवहीने यथाक्रमम् ॥ ३० ॥
पार्ष्णिपार्श्वपरिच्छेदो भवेच्च चतुरङ्गुलः। गुल्फं तथा परिमितं [3]तद्विंशत्यङ्गुलायतम् ॥ ३१ ॥
हिक्का[4]न्तयोरधो बाहुः सहार्धैकोनविंशतिः। अङ्गुलानि प्रकोष्ठं स्या[5]त्तदायामः षडङ्गुलः ॥ ३२ ॥
तद्वच्च मध्यमा शिष्टा सार्ध[6]पञ्चदशाङ्गुला। दशाङ्गुलं शिरोमानं विस्तारोऽष्टाङ्गुलो भवेत् ॥ ३३ ॥
ललाटस्य पुरोनु स्यादशीतियवसंमितम्। अष्टाशीतियवं मानं तदनन्तरमिष्यते ॥ ३४ ॥
आयामः श्रवणस्य स्याद् द्वात्रिंशद्यवसंमितः। नालायामस्तथाचोर्ध्वं [7]पिप्पल्या द्वियवो मतः ॥
नालस्य मूलविस्तारः षड्यवैस्तुलितो भवेत्। अग्रं चतुर्यवं ग्रीवा मूलं चैव षडङ्गुलम् ॥ ३६ ॥
सार्धं [8]पञ्चाङ्गुलाधाग्रं स्कन्धं च द्व्यङ्गुलं भवेत्। [9]हिक्कान्तयोरधोर्बाह्वोर्मूलं द्वात्रिंशदङ्गुलम् ॥ ३७ ॥
अष्टादशाङ्गुलमुरस्तनयोरपि मण्डलम्। अङ्गुलैः पञ्चदशभिः परिच्छिन्नं यथातथम् ॥ ३८ ॥
नवाङ्गुलं च विस्तारं उत्सेधश्चापि [10]तादृशः। द्वादशाङ्गुलविस्तारस्तनयोर्मध्यमिष्यते ॥ ३९ ॥
कृष्णमण्डलविस्तारो द्व्यङ्गुलं चतुरानन। नाहस्तु कुक्षिमध्यस्य स्यात् त्रयस्त्रिंशदङ्गुलः ॥ ४० ॥
श्रोणीमध्यपरीणाहः सप्तपञ्चदशाङ्गुलः। कटिमध्यपरीणाहो विंशत्या सैकयाङ्गुलैः ॥ ४१ ॥
षट्त्रिंशदङ्गुलो नाहस्तथा स्यादूरुमूलयोः। त्रिंशदङ्गुलनाहस्तु भवेदूर्वोस्तु मध्यमः ॥ ४२ ॥
चतुर्भिः सहविंशत्या जानुनाहस्तथाङ्गुलैः। [11]सहनं जङ्घयो[12]रेकविंशत्यङ्गुलमिष्यते ॥ ४३ ॥
द्वाविंशत्यङ्गुलः सार्धो नाहमध्ये च जङ्घयोः। सहनं जङ्घयोरग्रं भवेदेकादशाङ्गुलम् ॥ ४४ ॥
एकादशाङ्गुलं चाक्षवृत्तमण्डलनाहनम्। एकाङ्गुलं चाक्षवृत्तं मध्यमं [13]सहनं मतम् ॥ ४५ ॥

---

* 26, 27, 28. 28½ श्लोका —म ग्रन्थे न दृश्यन्ते.

1. म. अक्षा उरस्स्थलन्नाल 2. म. तद्वत्. 3. म षड्यवत्य 4 म. ततो. 5. म ताला. 6. म. पञ्चाङ्गुला यथा. 7. म, पिप्पली 8 म पञ्चाङ्गुल चाग्र स्कन्धान्त 9. म. हिक्का ततोरधोर्मूलंबाह्वोः. 10. म. तादृशम्. 11. म. नहनं. 12 म. रग्र भवेदेकादशाङ्गुलम्.

44, 45 श्लोकौ—म. ग्रन्थे न दृश्यते. 13. श्री, नहन.

षडङ्गुलं तलाग्रं स्यादुत्सेधश्चतुरङ्गुलः। द्व्यङ्गुलोऽङ्गुष्ठविस्तारस्तर्जन्येकाङ्गुला भवेत् ॥ ४६ ॥
मध्यमादितराङ्गुल्यो यवहीनाः क्रमात्पुनः। अङ्गुष्ठनखविस्तारस्त्र्यङ्गुलः परिकीर्तितः ॥ ४७ ॥
तर्जनी पादहीना स्यात्क्रमादन्या यवोन्नताः। अष्टादशाङ्गुलं मध्यं मूलं बाह्वोस्त्रयाधिकम् ॥ ४८ ॥
प्रकोष्ठमूल[1]सहनं भवेत्पञ्चदशाङ्गुलम्। द्वादशाङ्गुल[2]मध्यान्तं मणिबन्धो नवाङ्गुलः ॥ ४९ ॥
विस्तीर्णं तालमध्यर्धं चतुरङ्गुलमिष्यते। अङ्गुष्ठमूलमध्यर्धमङ्गुलं नखमङ्गुलम् ॥ ५० ॥
निःसृतं त्रियवं प्रोक्तं पर्वद्वयसमन्वितम्। तर्जन्यङ्गुलविस्तारः सहाष्टांशांगुलो भवेत् ॥ ५१ ॥
सपादाङ्गुलविस्तारा मध्माङ्गुलिरिष्यते। अष्टसप्तयवैः शिष्टैस्त्रिपर्वा च चतुष्टयी ॥ ५२ ॥
पार्श्वकेशान्तमुष्णीषादारभ्य स्याद्दशाङ्गुलम्। आरभ्य पार्श्वकेशान्तात्सपादद्व्यङ्गुले भ्रुवौ ॥ ५३ ॥
षडङ्गुला यथा भ्रूः स्याद्यवमध्याग्र[3]यूकका। अन्तरालं नवयवं भ्रुवोस्त्र्यङ्गुलमीक्षणम् ॥ ५४ ॥
अङ्गुलायामविस्तारा वेदितव्या कनीनिका। यवोनमङ्गुलं कृष्णं ज्योतिर्यूकप्रमाणकम् ॥ ५५ ॥
परितः कृष्णबिम्बस्य अङ्गुलं श्वेतमण्डलम्। मध्यतोऽङ्गुलविस्तारं नयनं शूर्पमीनवत् ॥ ५६ ॥
ऊर्ध्वपक्ष्मायता सार्धत्र्यङ्गुला पादविस्तरा। त्र्यङ्गुलायाममितरद्विस्तारो यवसंमितः ॥ ५७ ॥
अशीतिः पक्ष्मरोमाणि [4]शतानि कुटिलानि च। द्व्यङ्गुलं चक्षुषोर्मध्यं नासिकामूलमङ्गुलम् ॥ ५८ ॥
विस्तीर्णमुन्नतं [5]वापि मध्यमध्यर्धमङ्गुलम्। अग्रं द्व्यङ्गुलमध्यर्धं षड्यवं सुषिरं भवेत् ॥ ५९ ॥
चतुर्यवं तयोर्मध्यं पुटपार्श्वं चतुर्यवम्। अपाङ्गात्कर्णमूलान्तं चत्वारिंशद्यवं मतम् ॥ ६० ॥
द्व्यङ्गुलः कर्णविस्तारो विवरं च चतुर्यवम्। चतुरङ्गुलमध्यर्धमोष्ठमुत्तरमायतम् ॥ ६१ ॥
यवविस्तारमधरमेकाङ्गुलसमायतम्। द्व्यङ्गुलं चैव विस्तारं चिबुकं द्व्यङ्गुलायतम् ॥ ६२ ॥
आपीडा [6]नासिकायुक्ता करण्डमुकुटान्विता। कर्णिका मणिकेयूरकटकत्रयहारिणी ॥ ६३ ॥
रत्न [7]कूर्पासरशनापुष्पाम्बर[8]परिष्कृताः। स्तनबन्धतुलाकोटी सर्वाभरणभूषिता ॥ ६४ ॥
लज्जाभङ्गेन देवस्य पार्श्वे वामेतरे स्थिता। हस्तेन वारिजं फुल्लं वामेन किल बिभ्रती ॥ ६५ ॥
ऊरुप्रदेशविश्रान्तसव्येतरकराम्बुजा। यद्वान्यथाहस्तयोः स्यान्निष्टप्तकनकप्रभा ॥ ६६ ॥
आसनेऽभयदो हस्तो दक्षिणो वरदोऽपरः। दक्षिणे पद्ममथवा सव्यः कटकमुद्रितः ॥ ६७ ॥
पारतन्त्र्ये विधिरयं स्वातन्त्र्ये तूच्यते यथा। चतुर्भुजां जघन्याभ्यां हस्ताभ्यामब्जधारिणीम् ॥ ६८ ॥

1. श्री. नहन. 2. म. मध्यार्धं. 3. श्री. यूष्णिका. 4. श्री. म. शितानि. 5. म. चापि. 6. म. वासिका. 7. म. कार्पास. 8. म. परिष्कृताम्.

शङ्खचक्रधरां वापि मुख्याभ्यां वरदायिनीम् । अभीतिदां च कोटीरधारिणीं भयवर्जिताम् ॥ ६९ ॥
वसुन्धराह्वयां देवीं द्विहस्तां [1]कनकप्रभाम् । दक्षिणाभयदामन्यहस्तेन वसुदायिनीम् ॥ ७० ॥
गृहीतदाडिमफलां यद्वा वामकरेण वा । चिन्तारत्नं धारयन्तीं हेमसिंहासने स्थिताम् ॥ ७१ ॥
वामपादेन संस्पृष्टनिधिकुम्भामलङ्कृताम् । कल्पकानोकहच्छायां समाश्रित्य स्थितां तथा ॥ ७२ ॥
वामे पार्श्वे महीं देवीं द्विहस्तां श्यामलप्रभाम् । स्तनबन्ध[2]विहीनां वा कुण्डलापीडवर्जिताम् ॥ ७३ ॥
सुस्थिताम् सव्यपादेन चान्येन स्तोककुञ्चिताम् । पुष्पं दक्षिणहस्तेन धारयन्तीं शुचिस्मिताम् ॥ ७४ ॥
ऊरुप्रदेशविश्रान्तवामहस्तामलङ्कृताम् । सोत्तरीयां यथायोगं स्वातन्त्र्ये [3]श्रीतनूं विदुः ॥ ७५ ॥
* योगलक्ष्मीस्तु श्रीवत्सं भोगलक्ष्मीर्द्विपार्श्वयोः । वीरलक्ष्मीस्तु वै शेषं पृथग्भवनकल्पनम् ॥ ७६ ॥
रतिः सरस्वती तुष्टिर्देव्यो देवस्य दक्षिणे । रतिः सिन्दूरसंकाशा स्फटिकाभा सरस्वती ॥ ७७ ॥
हरितालनिभा तुष्टिः [4]श्रीवदाभरणादयः । पारतन्त्र्ये विधिरयं स्वातन्त्र्ये तूच्यते विधिः ॥ ७८ ॥
रत्यादयश्चतुर्हस्ता मुख्यौ स्यातां रतेः करौ । वरदाभयदावन्यौ पाशाङ्कुशधरौ पुनः ॥ ७९ ॥
मुख्यौ हस्तौ सरस्वत्या दक्षिणो ज्ञान[5]मुद्रितः । विज्ञानपुस्तकं वामे जघन्ये दक्षिणे करे ॥ ८० ॥
अक्ष[6]सूत्रधरं वामे सर्वे वज्रादयः स्थिताः । तुष्टेश्च पूर्ववन्मुख्यौ जघन्यौ शङ्खमम्बुजम् ॥ ८१ ॥
कीर्तिः प्रीतिश्च शान्तिश्च वामे देवस्य संस्थिताः । [7]वामाङ्घ्रयः सुस्थिताः स्युरीषदन्येन कुञ्चिताः ॥८२॥
ऊरुप्रदेशविश्रान्ता वामाः पुष्पधराः परे । कीर्तिः स्फटिकवर्णाभा नीलाभा प्रीतिरिष्यते ॥ ८३ ॥
शान्तिः श्यामनिभा चैव सर्वालङ्कारशोभिता । पारतन्त्र्ये विधिरयं स्वातन्त्र्ये चापि पूर्ववत् ॥ ८४ ॥
स्थिते देवे स्थिता देव्यः आसीना वा यथारुचि । आसीनेऽपि तथैव स्युः स्वातन्त्र्ये सिंहविष्टरे ॥८५॥
पद्मासनस्थाः [8]सर्वास्ताः प्रशस्ताः स्वस्तिकासने । पद्मासना च पद्मा स्यात् श्रीस्तु स्यात्सिंहविष्टरे ॥ ८६ ॥
[9]पूर्वादौ तु दले पद्मे वासुदेवादिमूर्तयः । आग्नेयादौ दले भूयः चत्वारः श्वेतकुञ्जराः ॥ ८७ ॥
शङ्खपद्मनिधीशानावधस्तात्पादपार्श्वयोः । अन्योन्यमुखमालोक्य स्थितौ लम्बोदरौ तथा ॥ ८८ ॥
भूम्यादयो बहिर्देव्यो दिक्ष्वष्टावष्टसु स्थिताः । इन्द्रादयोऽथ दिक्पाला देवीनां च बहिः स्थिताः ॥८९॥
वलयेषु चतुर्षु स्युश्चतस्रो वेत्रपाणयः । स्त्रियः स्थिताः [10]परिष्कारैः सर्वैरेव परिष्कृताः ॥ ९० ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे [11]बिम्बलक्षणं नाम
एकविंशोऽध्यायः ॥

---

1. म. श्यामल. 2 म. विहीनैषा कुण्डिला. 3. श्री. म. श्रीसमानता.
* श्लोकः—76. म. ग्रन्थे न दृश्यते 4 म. प्राग्वदा. 5. म मुद्रिका. 6, म. सूत्रालंकां.
7. म. वामाङ्घ्रिभिः. 8, म. सर्वेषां प्रशस्तं स्वस्तिकासनम्. 9. म. पूर्वादिषु च सर्वेषु.
10. म. परिवारैः. 11. म. श्रियादिलक्षणं नाम.

# द्वाविंशोऽध्यायः ।

## परिवाराणां रूपवर्णादिनिरूपणम्

श्रीभगवान्—

रूपं वर्णं तथाकल्पं हस्तमुद्रां तथैव च । हस्तसंख्यां यथायोगमन्यच्चापि [1]चतुर्मुख ॥ १ ॥

[2]अथवा परिवाराणां प्रवक्ष्यामि [3]यथातथम् ।

### हयग्रीवः

हयग्रीवं चतुर्बाहुं शुद्धस्फटिकसन्निभम् ॥ २ ॥

अश्ववक्त्रं मुकुटिनं धौतवस्त्रोत्तरीयकम् । मुख्येनैकेन वरदं दक्षिणेनेतरेण तु ॥ ३ ॥

विज्ञानपुस्तकधरं जघन्ये च करद्वये । [4]अक्षसूत्रं च शङ्खं च बिभ्राणं सुपरिष्कृतम् ॥ ४ ॥

कल्पयेत्पुरुषाकारं अनन्तं च किरीटिनम् । भोगिभोगे सुखासीनं पृष्ठतः फणमण्डलैः । ५ ॥

उन्नमद्भिः कृतच्छायं चतुर्हस्तं सितप्रभम् । यद्वा तु श्यामलो वर्णः अनन्तस्य प्रकीर्त्यते ॥ ६ ॥

[5]प्रकल्पयेन्मुख्यहस्तं वरदं वामहस्तकम् । गदाधरं कटीदेशमवलम्ब्याथवा स्थितम् ॥ ७ ॥

जघन्याभ्यां च हस्ताभ्यां शङ्खचक्रधरो भवेत् ।

### गरुडः

गरुडं कनकप्रख्यं नीलनासाग्रसंयुतम् ॥ ८ ॥

दक्षिणेतरविस्तीर्णं विचित्रपृथुवक्षसम् । दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ ९ ॥

करण्डिकामुकुटिनं सर्वाभरणभूषितम् । विचित्रकञ्चुकधरं भुजगेन्द्रैरलङ्कृतम् ॥ १० ॥

हृदि पुष्पाञ्जलिधरं स्थितमासीनमेव वा । [6]दक्षिणेतरयोरेकपादयोः कुञ्चितं भवेत् ॥ ११ ॥

[7]पृष्ठतोऽन्यो यथायोगं यद्वा पद्मासनं भवेत् ।

### सूर्यः

मार्ताण्डं द्विभुजं रक्तं रक्ताम्बरधरं स्थितम् ॥ १२ ॥

पृष्ठभागे शिरश्चक्रं स्थाने विपुलमण्डलम् । बिभ्राणं कमलद्वन्द्वं हस्ताभ्यां च किरीटिनम् ॥ १३ ॥

उरःप्रदेशे विपुले स्यमन्तकमहामणिम् । आसीनं वा सुखं [8]बिम्बे पद्मेऽष्टदलसंयुते ॥ १४ ॥

### सोमः

पूर्वादौ वारिजदले मेषप्रभृति[9]राशिभिः । सेवितं कल्पयेत्सोमं द्वाभ्यां कुमुदधारिणम् ॥ १५ ॥

---

1. म. यथातथम्. 2. म. अधुना. 3. म चतुर्मुख. 4. श्री. म कुण्डिकामक्षसूत्र च. 5. श्री. म. कल्पयेदभय मुख्य. 6. म. दक्षिणोत्तरयोरेक 7. म पृष्ठतोऽन्य, 8. म. पीठे. 9. म. राशयः.

काम:

कामं रक्तनिभं रक्तप्रसवाम्बरधारिणम् । हस्ताभ्यामैक्षवं चापं बिभ्राणं सुमनःशरान् ॥ १६ ॥
चतुर्भुजं चतुर्वक्त्रं जटामुकुटधारिणम् । वरदाभयप्रदं मुख्यहस्ताभ्यामन्यहस्तयोः ॥ १७ ॥
कुण्डिकामक्षसूत्रं च बिभ्राणं च सुखासनम् ।

गजानन:

गजाननं चतुर्बाहुं लम्बकुक्षिं सितप्रभम् ॥ १८ ॥
करण्डिकामुकुटिनं लम्बयज्ञोपवीतिनम् । वामहस्तेन मुख्येन सङ्गृहीतमहाफलम् ॥ १९ ॥
इतरेण तु हस्तेन भग्नदन्तपरिग्रहम् । अपराभ्यां च हस्ताभ्यां पाशाङ्कुश[1]धरं प्रभुम् ॥ २० ॥

षण्मुख:

षण्मुखं च चतुर्बाहुं दाडिमीकुसुमप्रभम् । [2]वराभयप्रदौ मुख्यौ जघन्यौ शक्तितोमरौ ॥ २१ ॥
कल्पयेच्छ्यामलं [3]कान्त्यां चतुर्भिर्बाहुभिः क्रमात् । गदाधरामभयदां शङ्खचक्रवरायुधाम् ॥ २२ ॥
हारकेयूरमकुटनूपुरादिविभूषिताम् । *अथवाष्टभुजां दुर्गां दक्षिणे दोश्चतुष्टये ॥ २३ ॥
अभीतिशरनिस्त्रिंशचक्रमण्डलमण्डिताम् । वामे गदाधनुःखड्गशङ्खायुधधरां वराम् ॥ २४ ॥
अथवा द्वादशभुजां विशेषः समुदीर्यते । दक्षिणे परशुं शूलं वामे पाशाङ्कुशौ तथा ॥ २५ ॥
[4]घण्टेति पञ्चपूर्वाणि यद्वा [5]द्वादशबाहुकाम् । अनुक्तमायुधं कल्प्यं भुजेऽन्यस्मिँश्चतुष्टये ॥ २६ ॥
द्वात्रिंशदपि वा [6]हस्ताः शस्त्रं [7]मूह्यं [8]तु चोदितम् ।

धनद:

लम्बोदरं महाकायं कल्पयेद्धनदं ततः ॥ २७ ॥
निष्टप्तकनकप्रख्यं वरदं दण्डिनं तथा ।

धनदस्य परिवारा:

तस्य दक्षिणतः पार्श्वे जृम्भलो मणिभद्रकः ॥ २८ ॥
कल्प्यः शङ्खनिधिं चैव [9]वामे पार्श्वे तु कल्पयेत् । नलकूबरमम्भोजनिधिं च [10]शिबिकुण्डलम् ॥ २९ ॥
जृम्भलो हेमवर्णाभो मणिभद्रो मणिप्रभः । नलकूबरनामासौ श्यामवर्णः प्रकीर्तितः ॥ ३० ॥

---

1. श्री. वरायुधम्. 2. म. वरदाभयदौ. 3. श्री. म. कन्यां.

* वामे करे धनु.खेटचक्रशक्त्यायुध परम् । अत्र एष अर्धश्लोकः–म. ग्रन्थे. अधिकतया दृश्यते.

4. श्री. म. शिष्टानि पूर्वरूपाणि. 5. श्री. म. षोडश. 6. म. हस्तां. 7. म. मुख्यं. 8. म. प्रचोदिताम्.
9. म. वामपार्श्वे प्रकल्पयेत्. 10. म. शुभ.

शिविः कुण्डलवान् रक्तः सर्वेऽभीतिवरप्रदाः ।

रुद्रः

रुद्रं त्रिनेत्रमरुणं जटामुकुटधारिणम् ॥ ३१ ॥
चतुर्भुजं नीलकण्ठमिन्दुरेखाविभूषितम् । वैयाघ्रचर्मवसनं सर्वाभरणभूषितम् ॥ ३२ ॥
कराभ्यामपि मुख्याभ्यां वरदाभयद स्थितम् । अपराभ्यां च हस्ताभ्यां बिभ्राणं परशुं मृगम् ॥ ३३ ॥

क्षेत्रपालः

क्षेत्रपालं चतुर्बाहुं करण्डिमुकुटोज्वलम् । दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ ३४ ॥
वामे करे दण्डधरं मुख्ये वामेतरे करे । दधानं तर्जनीमुद्रां पाशाङ्कुशममुख्ययोः ॥ ३५ ॥

विष्वक्सेनः

विष्वक्सेनं चतुर्बाहुं श्यामवर्णं किरीटनम् । लम्बोदरं च मुख्येन करेणाभयदायिनम् ॥ ३६ ॥
[1]दक्षिणेन प्रसव्येन समालम्ब्य[2]कटिं स्थितम् । आसीनमपराभ्यां च हस्ताभ्यां शङ्खचक्रिणम् ॥ ३७ ॥
अथवा पूर्वकरयोर्गदामेकत्र कल्पयेत् । अन्यत्र तर्जनीमुद्रां यद्वा दक्षिणहस्तयोः ॥ ३८ ॥
गदां मुख्ये जघन्ये तु शङ्खं च परिकल्पयेत् । * मुख्येऽभीतिरमुख्ये तु चक्रमन्यत्र हस्तयोः ॥ ३९ ॥
शङ्खचक्रधरं यद्वा स्थितं मुख्ये करद्वये । बिभ्राणं क्षुरिकां वेत्रं कृताञ्जलिपुटं स्थितम् ॥ ४० ॥

विष्वक्सेनमहिषी

[3]देवीं च विष्वक्सेनस्य वामपार्श्वे प्रतिष्ठिताम् । नाम्ना पुष्पधरां कुर्यात्कमलामिव लक्षिताम् ॥ ४१ ॥

ब्राह्म्यादिमूर्तयः

ब्राह्म्यादि मातरः सर्वा ब्रह्माद्यात्मीय शक्तयः । रूपवर्णायुधादीनि ब्रह्मादीनां भजन्ति ताः ॥ ४२ ॥

वीरभद्रः

रुद्ररूपी वीरभद्रस्तासां [4]पश्चात् स्थितो भवेत् ।

विनायकः

प्राग्भागे विघ्नराट्[5]तासामग्रं चापि भुजद्वयाम् ॥ ४३ ॥
पार्श्वतः स्थितयोः सख्योर्न्यस्य स्कन्धे स्थितं भवेत् ।

---

1. म, दक्षिणेनाथसव्येन. 2. म. कटिस्थलम्. * एष अर्धश्लोकः लुप्तः—म. ग्रन्थे.
3. म. विष्वक्सेनस्य देवीं च कुर्यात् पुष्पधराह्वयाम् । श्रीमल्लक्षणसंयुक्तां तस्य वामे प्रतिष्ठिताम् ॥ एतच्छ्लोक स्थाने. एष श्लोकः दृश्यते म. ग्रन्थे. 4. श्री. पार्श्वं. 5. म. तासा श्रियं,

अजोमुखाः

[1]आसन्नप्रसवा पार्श्वेऽजामुखाः पुरुषाः स्थिताः ॥ ४४ ॥

दिव्यायुधधरा[2]ह्यष्टौ स्वचिह्नाङ्कितमस्तकाः । चक्री मुसलवान् शङ्खी खड्गीचैव गदाधरः ॥ ४५ ॥

शार्ङ्गी पद्मी तथा वज्री नराकारा द्विपाणयः । दक्षिणे तर्जनीमुद्रा वामः कट्यवलम्बितः ॥ ४६ ॥

आदित्याः

आदित्या द्वादश तथा तद्रूपादि दिनेशवत् । द्विहस्ता वसवः सर्वे करण्डमुकुटान्विताः ॥ ४७ ॥

पितरः

दण्डिनस्तोमरधराः पितरश्च द्विपाणयः । दण्डायुधा वामहस्ते दक्षिणाऽभयदाश्च ते ॥ ४८ ॥

विश्वेदेवाः

करण्डिकामुकुटिनो विश्वेदेवाश्च तादृशाः ।

सप्तर्षयः

* "अत्रिर्भृगुश्च कुत्सश्च वसिष्ठो गौतमस्तथा ॥ ४९ ॥

काश्यपश्चाङ्गिराश्चैव एते सप्तर्षयः स्मृताः" । सप्तर्षयः करे सर्वे बिभ्राणा ज्ञानपुस्तकम् ॥ ५० ॥

विज्ञानमुद्रामन्यत्र जटामकुटधारिणः । लक्ष्म्या विराजिता ब्राह्म्या रुद्रस्त्वेकादश स्मृताः ॥ ५१ ॥

विष्णुपारिषदाः

कुमुदाद्यास्तु विष्णु[3]पारिषदेश्वराः । करैश्चतुर्भिर्बिभ्राणाः शङ्खचक्रगदास्तथा ॥ ५२ ॥

दक्षिणे तर्जनीमुद्राः पीतवस्त्राः किरीटिनः ।

उपेन्द्रादयः

उपेन्द्राद्यष्टकं चापि द्विहस्तमरिशङ्खकम् ॥ ५३ ॥

विश्वादयश्च द्विभुजा गदाखड्गास्त्र[4]धारिणः । करण्डिकामकुटिनः सर्वाभरणभूषिताः ॥ ५४ ॥

अश्विनौ

अश्विनौ सदृशौ रक्तौ सुधाकलशधारिणौ । करण्डिकामकुटिनौ द्विहस्तौ भूषितौ भृशम् ॥ ५५ ॥

इन्द्रादिदिक्पालाः

श्यामः किरीटी द्विभुजो वासवो वज्रदक्षिणः । [5]वामावलम्बितकटिः सर्वाकल्पपरिष्कृतः ॥ ५६ ॥

ज्वालामण्डलमध्यस्थो ज्वलनो द्विभुजो भवेत् । वरदः शक्तिहस्तश्च करण्डिमकुटोज्वलः ॥ ५७ ॥

---

1. म. आसने तु प्रपा. 2. म. चाष्टौ * एतौ द्वौ अर्धश्लोकौ म. ग्रन्थे न दृश्यते.
3. म. पारिषदो वराः. 4. म. पाणयः. 5. म. वामेनालम्बित,

*वैवस्वतश्च द्विभुजः किरीटी मेचकच्छविः। दक्षिणाभयदो दण्डी निर्ऋतिर्भीमदर्शनः ॥ ५८ ॥
दंष्ट्राकरालवदनो भ्रुकुटीकुटिलेक्षणः। दक्षिणोऽभीतिरुत्खड्गो करण्डिमुकुटोज्वलः ॥ ५९ ॥
वरुणः श्यामलः पाशहस्तो वामेऽभयप्रदः। करण्डिमकुटश्चैव वायुर्धूम्रो द्विबाहुकः ॥ ६० ॥
अङ्कुशो दक्षिणे हस्ते वामः कट्यवलम्बनः। मरुतो वायुना तुल्याः सोमः सोमवदिष्यते ॥ ६१ ॥
ईशानो रुद्रवत्कल्प्यः तेषां वाहन [1]मुच्यते।

## ब्रह्मादीनां वाहनानि

हंसो विधाता रुद्रस्य वृषः सूर्यस्य घोटकः ॥ ६२ ॥
मकरः शूर्पकारातेः शक्तिपाणेश्च बर्हिणः। दुर्गायाः केसरी प्रोक्तो विघ्नराजस्य मूषिकः ॥ ६३ ॥
नरो यक्षाधिराजस्य शुनासीरस्य कुञ्जरः। अग्नेर्मेषः कृतान्तस्य [2]लुलायो वाहनं [3]भवेत् ॥ ६४ ॥
पिशाचो निर्ऋतेर्यानं मकरो वरुणस्य तु। प्राणस्य हरिणः प्रोक्तः स एव मरुतामपि ॥ ६५ ॥

## मूलपरिवारबेरयोर्मानभेदः

उच्छ्रायं मूलबेरस्य चतुर्धा विभजेत्ततः। [4]तत्रैकभागमुच्छ्रायं परिवारेषु कल्पयेत् ॥ ६६ ॥
मानाङ्गुलेन वा यद्वा देहलब्धाङ्गुलेन वा। अष्टाङ्गुलसमुच्छ्रायं द्वादशाङ्गुलमेव वा ॥ ६७ ॥
द्विगुणं वा यथायोगमुच्छ्रायं परिकल्पयेत्। स्थाने मूलप्रतिकृतेः परिवाराश्च ते स्थिताः ॥ ६८ ॥
आसीनाश्चासने तस्य शय्यायां शयनं विना। आसीना वा स्थिता वापि [5]कामचाराश्चतुर्मुख ॥ ६९ ॥
प्रलम्बफलकायामघनविस्तार[6]निर्णयम्। कथ्यते पञ्चतालं स्यादायामो घनमङ्गुलम् ॥ ७० ॥
अर्धायामं च विस्तारं कुर्यात्तत्सुकृतं यथा। प्रतिमायास्तदङ्गानां कौटिल्यार्जवसिद्धये ॥ ७१ ॥
लम्बमानं यदु[7]च्छिष्टं तदर्धं कमलासन। शिखामण्यादिसुषिरमनेकं तत्र कल्पयेत् ॥ ७२ ॥
सूत्राणि सुषिरैस्तैस्तैर्लम्बयेच्च [8]पृथक् स्वयम्। जानीयादार्जवं तेन प्रत्यङ्गमविचारयन् ॥ ७३ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे [9]परिवारविधिर्नाम द्वाविंशोऽध्यायः ॥

---

* 58, 59. श्लोकौ. म ग्रन्थे न स्त.

1. म. मिष्यते. 2. म. महिषो. 3. म. मतम्. 4. म. त्रिष्वेक. 5. म. परिवारा, 6. म. निर्णयः. 7. म. दृष्ट. 8. म. दृढतस्स्वयम्. 9. म. परिवारदेवतालक्षणं.

# त्रयोविंशोऽध्यायः ।

## पूजोपकरणानि

श्रीभगवान्:—

आराधनोपकरणं तस्य लक्षणमेव [1]वा । उच्यते संप्रति ब्रह्मन् श्रूयतां तदशेषतः ॥ १ ॥
लोहजान् दीपिकास्तम्भान् चतुर्हस्तसमुच्छ्रयान् । त्रिहस्तानेकहस्तान्वा द्विहस्तान् वा यथा[2]बलम् ॥२॥
ताम्रजान् वा राजतीयानयुग्मैः स्नेहधारणैः । युग्मैर्वा[3]वृत्तिविस्तीर्णैर्बहुश्रैर्वा परिष्कृतान् ॥ ३ ॥
स्नेहधाराग्रतः [4]क्लृप्तपद्मकोशैरलङ्कृतान् । कुर्यादर्घ्यादिपात्राणि सौवर्णानीतराणि वा ॥ ४ ॥
राजतान्युभयाभावे शुद्धताम्रमयानि वा । पैशाचलोहवर्ज्यानि यथावित्तानुसारतः ॥ ५ ॥
व्याकोशपङ्कजाभानि चक्राद्यङ्गानि मध्यतः । प्रस्थमानावरद्रव्यपूरयोग्यान्तराणि च ॥ ६ ॥
शङ्खशुक्तिस्वभावानि यद्वा पात्राणि कल्पयेत् । नैवेद्यपात्राणि तथा सौवर्णानीतराणि वा ॥ ७ ॥
[5]रजतस्योभयाभावे शुद्धताम्रमयानि वा । हविर्द्रव्यप्रमाणानि वृत्तानि परिकल्पयेत् ॥ ८ ॥
दर्वीं हस्तायतामग्रमूलयोर्मण्डलाकृतिम् । पानीयपात्रं सौवर्णमथवा [6]कलधौतजम् ॥ ९ ॥
वृत्तायतं सुवृत्तं वा भवेदायतमेव वा । [7]प्रस्थमात्रप्रमाणाम्भःपूरयोग्यान्तरां [8]शुभाम् ॥ १० ॥
पादमानानुसारेण पादुके रैमये शुभे । यद्वा [9]रौप्यमये ताम्रमये वा पादसन्निभे ॥ ११ ॥
तदाधारं च तल्लोहं वृत्तं मध्ये कृताम्बुजम् । पादाव[10]नेजनजलग्रहणं पात्रमद्भुतम् ॥ १२ ॥
[11]त्रिपाद्वृत्तं सरोजाभं हैमं राजतमेव वा । ताम्रं सचक्रचरणमपि वा पावनं सताम् ॥ १३ ॥
आचामवारिग्रहणपात्रमुत्तमलोहजम् । सरोजकर्णिकाकारं कुर्याददभुतदर्शनम् ॥ १४ ॥
कङ्कतं [12]कनकं रूप्यमपि वाष्टाङ्गुलायतम् । षडङ्गुलायतं यद्वा तदर्धाङ्गुलविस्तृतम् ॥ १५ ॥
[13]विंशत्या दशनैर्युक्तं भवेदुभयतो मुखम् । यद्वा षोडशभिर्दन्तैरष्टाभिर्वा त्रियङ्गुलम् ॥ १६ ॥
सौवर्णमञ्जनक्षोदभाजनं पुंमृगा[14]कृति । सिंहाकारं भवेद् यद्वा हंसाकारमथापि वा ॥ १७ ॥
शिरोबिलं शलाका च द्वादशाङ्गुलमायता । अष्टाङ्गुला वा सौवर्णी भवेदुभयतोमुखा ॥ १८ ॥
मुखं च केसरफलप्रतिमं संहतं भवेत् । दर्पणं प्रतिमा[15]यानं तदर्धं वा सुशोभनम् ॥ १९ ॥
वृत्तं कांस्यं महारत्नखचितं वा यथावसु । पादयुक्तमयुक्तं वा मुखमानमथापि वा ॥ २० ॥

---

1. श्री. म. च. 2. म. रुचिम्. 3. म वृत्त. 4. म क्षिप्ते. 5 श्री म. राजतान्यु. 6. म. कालधौतजीम्. 7. म. प्रस्थावर. 8 म. शुभम् 9 म रूप्यमये 10. श्री. सेवन. 11. म. त्रिवृत्त वा. 12. श्री. करक. 13. म. विशभिर्दशनै. 14. म. कृतिम् 15. श्री. मानं,

कार्तस्वरमयी वृत्ता राजती [1]वाथ पावनी । अरत्निमानविस्तारा मध्येऽष्टदलसंयुता ॥ २१ ॥
प्रतिपद्मदलं मध्ये [2]सुषिराणि शतं भवेत् । कर्णिकायां केसरेषु [3]विष्टरेषु शतं भवेत् ॥ २२ ॥
अष्टोत्तरशतं भूयः पर्यन्तदलमध्यतः । खचितं च महारत्नैरेवं धारासहस्रकम् ॥ २३ ॥
धाराष्टकेन संयुक्तमभिषेकाय कल्पयेत् । बिम्बानुगुणमानं वा तालमाना[4]वरान्तकम् ॥ २४ ॥
† अथ वक्ष्यामि संक्षेपात् पताकालक्षणं द्विज । अष्टतालायतं वस्त्रं दशतालायतं तु वा ॥ २५ ॥
आयामसमविस्तीर्णक्षौमं कार्पासजं तु वा । सुश्लक्ष्णं शोभनाकारं नानावर्णविचित्रितम् ॥ २६ ॥
विधाय सूत्रमार्गेण चतुरश्रं पुरा समम् । विभज्य कोणसूत्राभ्यां पूर्वभागं तु लोपयेत् ॥ २७ ॥
दक्षिणोत्तरपाश्चात्यैर्भागैरेकसितां नयेत् । तस्याः पश्चिमपार्श्वे तु यष्टिं संस्कृत्य योजयेत् ॥ २८ ॥
‡ व्याकोचपङ्कजाकारं शुद्धमुत्तमलोहजम् । आढकापूरमानाम्भः पूरयोग्यमहाबिलम् ॥ २९ ॥
हस्तदीर्घजलस्रावी पार्श्वमानोपशोभितम् । कल्पयेदपरं स्नानपात्रं मुक्तापरिष्कृतम् ॥ ३० ॥
यद्वा शङ्खनिभाकारमग्रतो जलनालकम् । धूपपात्रं सरोजाभं सुवर्णादिविनिर्मितम् ॥ ३१ ॥
[5]हस्तमानान्तरालं स्यान्नालयुक्तं त्रिपाद् द्विपात् । पादयोरपि तत्तत्स्यादुत्सेध[6]श्चतुरङ्गुलः ॥ ३२ ॥
अनेकसुषिरं तस्य विधानं सहजं भवेत् । अथवा विकसत्पद्मसदृशाकारशोभितम् ॥ ३३ ॥
इन्दुनालं [7]तथाऽङ्घ्रौ च दण्डाग्रे सुप्रतिष्ठितम् । दीपपात्रं [8]तथा नालमध्ये कुमुदकुड्मलम् ॥३४॥
वर्त्याधारैः शतेनापि युक्तमष्टभिरेव वा । विंशत्या [9]वाष्टभिश्चैव द्वाभ्यां वा दशभिश्च [10]तत् ॥३५॥
[11]अष्टभिर्वा यथाशक्ति कल्पयेच्छिल्पवित्तमः । शब्दब्रह्ममयी घण्टा हस्तोत्सेधप्रमाणिका ॥ ३६ ॥
ब्रह्माण्डगोलकाकारः सौराष्ट्रा[12]वयवो भवेत् । अधोमुखस्तालमानविस्तारोत्सेधसंमितः ॥ ३७ ॥
प्रदीपतुल्यसंस्थानस्तीक्ष्णाभ्यान्तरतालुकः । तालोनदण्डमूले स्यादग्रे सुस्थितपक्षिराट् ॥ ३८ ॥
चक्राग्रं पङ्कजाग्रं वा घण्टैषा परिकीर्तिता । नालबन्धाश्चतस्रोऽन्या घण्टाः प्रतिदिशं कृताः ॥ ३९ ॥
एतस्यामेव घण्टायां यद्वा वित्तानुसारतः । नीराजनक्रिया[13]पात्रं हेमादिद्रव्यनिर्मितम् ॥ ४० ॥
त्रितालायतविस्तीर्णा वृत्ता मध्यसरोरुहा । नव वा सप्त वा पञ्च तिस्रश्चैकापि वा भवेत् ॥ ४१ ॥
बलिपात्रं चतुस्तालं हेमादिद्रव्यनिर्मितम् । वृत्तं वा चतुरश्रं वा बह्वश्रं वा यथारुचि ॥ ४२ ॥
मध्यतोऽष्टदलाम्भोजमथवा षोडशच्छदम् । [14]द्वादशच्छदसंयुक्त[15]मपि वा परिकल्पयेत् ॥ ४३ ॥

1. श्री. वा यथावसु. 2. श्री. सुषिराणा. 3 श्री. विष्टराणा. 4. म. वरात्तरम्.
† श्लोका.—25, 26, 27, 28 म. ग्रन्थे न दृश्यन्ते. ‡ शखपद्मादिबिंबाना लाञ्छचमानावरान्तरम् । इति अर्धश्लोक. म. ग्रन्थे एतत्स्थाने दृश्यते. 5. म. हस्तमानायत काल. 6. म. श्री. श्चतुरङ्गुलम्. 7. म. नघ्रि. 8. म. ततो. 9. म. चाष्ठ. 10. म. यत्. 11. म. अष्टाभि. 12. म. वयवा. 13. म. पात्रो. 14. म. द्वात्रिंशत्. 15. म. मथवा.

मुक्तातपत्रं धवलं शशिबिम्बसमप्रभम् । सितातपत्राणि तथा [1]बर्हिपत्रमयानि च ॥ ४४ ॥
*आतपत्राण्यनेकानि हैमदण्डानि पद्मज । व्यजनानि च भूयांसि कल्याणानि महान्ति च ॥ ४५ ॥
चामराणि च शुभ्राणि रत्नकल्पमयानि च । चतुष्कमेक [2]दम्भानि पूजाङ्गानि यथायथम् ॥ ४६ ॥
कल्पयेन्नागतिलका दलपात्रं च रैमयम् । अरत्निमानविस्तीर्णं तन्मानोत्सेधदण्डकम् ॥ ४७ ॥
सपर्याविष्टरं ब्रह्मन् हस्तमानोन्नतं शुभम् । यद्वा न्यूनसमुत्सेधं [3]यद्वा वित्तानुसारतः ॥ ४८ ॥
अरत्निमात्रविस्तारं तन्मानायाम[4]कल्पनम् । सिंहपादयुतं यद्वा हस्तिपादचतुष्टयम् ॥ ४९ ॥
शार्दूलपादमथवा हेमरत्नपरिष्कृतम् । चतुरश्रं मध्यक्लृप्तसरसीरुहचित्रितम् ॥ ५० ॥
स[5]चक्रं पीठसहितं मार्गयुक्तं सगात्रकम् । यद्वा चक्रविनिर्मुक्तं मार्गे हस्तैः परिष्कृतम् ॥ ५१ ॥
तपनीयमयं यद्वा रजतादिविनिर्मितम् । दारुजं वा मणिच्छिन्नं स्वर्ण[6]पट्टैर्विनिर्मितम् ॥ ५२ ॥
स्नानासनं च पूर्वोक्तविस्तारोत्सेध[7]संमितम् । द्विगुणं चायतं क्लृप्तं मकरास्याम्बुनालकम् ॥ ५३ ॥
चतुरङ्गुलपर्यन्तं तालोत्सेधविराजितम् । [8]कुर्याच्च पूर्ववत्तस्य दर्शनीयमनुत्तमम् ॥ ५४ ॥
अलङ्कारासनं चापि पूर्वोक्तचरणैर्युतम् । द्विगुणायामविस्तारं हेमरत्न[9]विभूषितम् ॥ ५५ ॥
पादहीनं चतुस्तालविस्तारं द्विगुणायतम् । घनं च द्व्यङ्गुलं तस्य भोजनासनमीरितम् ॥ ५६ ॥
यात्रासनं च विस्तीर्णं द्विहस्तं ह्रस्वपादकम् । द्विगुणं चायतं तस्य [10]नालं तालोन्नतं भवेत् ॥ ५७ ॥
यानविष्टर[11]नालस्य मध्ये द्वारं प्रकल्पयेत् । अवतारकथोपेतं हेमरत्नपरिष्कृतम् ॥ ५८ ॥
आसनानि यथोक्तानि लोहजानि चतुर्मुख । दारुजानि यथालाभं कल्पयेच्छिल्पवित्तमः ॥ ५९ ॥
यद्वासनानामायामो विस्तारश्चो[12]न्नतिस्तथा । अर्चाप्रमाणानुगुणं कल्पयेदिति निर्णयः ॥ ६० ॥
यात्रासनं रथं वापि कुर्याद्वित्तानुसारतः । सितासितारुणा मिश्रान् दुकूलपरिकल्पितान् ॥ ६१ ॥
ध्वजान् कार्तस्वरमयैर्दण्डै[13]श्चापि विराजितान् । वाहनानि च देवानां दण्डाग्रे परिकल्पयेत् ॥ ६२ ॥
[14]प्लाक्षान् वा वैणवान् दण्डान् केवलान् परिकल्पयेत् । जलद्रोणीं कटाहं च हेमादिद्रव्यनिर्मितम् ॥
अगाधमभिषेकार्थं देवस्य परिकल्पयेत् । नानाविधानि वाद्यानि वीणादीनि च कल्पयेत् ॥ ६४ ॥
अर्घ्यपाद्यादिपात्राणां पात्रमानानुसारतः । चरणानि सुवर्णादिद्रव्यक्लृप्तानि [15]कारयेत् ॥ ६५ ॥

**इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे पूजोपकरणलक्षणं नाम त्रयोविंशोऽध्यायः ॥**

---

1. म. बर्ह. *इतः त्रय. अर्धश्लोका. म ग्रन्थे न दृश्यन्ते. 2 म. सबाध. 3 म. यथा. 4. म. कल्पितम्. 5. म. चक्र. 6. म. पद्मपरिष्कृतम्. 7. म सयुतम्. 8. म. चरण. 9. म. परिष्कृतम्. 10. म, साल 11. म सालस्य 12. म. उन्नत. 13. म. परिकल्पितान्. 14. म. लाक्षिकान्. 15. म. कल्पयेत्

# चतुर्विंशोऽध्यायः ।

आचार्यलक्षणाङ्कुरार्पणादि

श्रीभगवान्—

आचार्यलक्षणं ब्रह्मन् कथयामि यथातथम् । आदौ तु ब्राह्मणो विद्वान् पञ्चरात्रपरायणः ॥ १ ॥
सर्वदोषविनिर्मुक्तमशेषगुणभाजनम् । आचार्यं वरयेत्पूर्वं तदधीना हि सिद्धयः ॥ २ ॥
न्यूनातिरेकनिर्मुक्तकल्याणावयवः शुचिः । कल्याणहस्तः श्रुतवान् वृत्तवान् शीलवानपि ॥ ३ ॥
आम्नाये छन्दसि तथा ब्राह्मणो धर्मवत्सलः । पञ्चकालविधानज्ञः तत्कर्मनियतः क्षमी ॥ ४ ॥
जितेन्द्रियः प्रभुः श्रीमान् ऊहापोहविचक्षणः । षट्कर्मकृत् षडध्वज्ञः षडङ्गविदलोलुपः ॥ ५ ॥
षोडशन्यासचतुरः सौम्यः सिद्धान्तभेदवित् । ऋजुर्दयावान् ब्रह्मज्ञः सत्यवाक् शिष्ट[1]संमितः ॥ ६ ॥
व्याख्याता धृतिमानार्यः पूर्वभाषी प्रियंवदः । स्मितपूर्वाभिभाषी च सात्विको न्यायवित्तमः ॥ ७ ॥
दर्शनीयो युवा वादी वादेषु च विचक्षणः । [2]कुशाग्रीयमतिः शान्तः [3]नीतिज्ञो देशकालवित् ॥ ८ ॥
अनसूयो जितद्वन्द्वः समः सर्वेषु जन्तुषु । व्यसनाभ्युदये [4]शश्वदेकरूपः सदन्वयः ॥ ९ ॥
मितभाषी ध्यानपरो द्वादशाक्षरचिन्तकः । मानसाराधनपरः पञ्चरात्रपरायणः ॥ १० ॥
स्वतन्त्रो वृद्धसेवी च रूपवानपि चास्तिकः । अब्रह्मनिन्दकः सर्वस्मृतिमान् कीर्तिमानपि ॥ ११ ॥
सर्वापवादनिर्मुक्तः सर्वकल्याणलक्षणः । सर्वशास्त्रार्थवेत्ता च दीक्षितश्चक्रमण्डले ॥ १२ ॥
गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथवा भवेत् । अधिकारी भवेदेषु यथोक्तगुण[5]भाजनम् ॥ १३ ॥
आचार्यत्वे तथार्त्विज्ये तादृशानेव भूसुरान् । गुणैः सर्वैः समुदितान् कर्मनिर्वहणक्षमान् ॥ १४ ॥
वरयेद् गुरुणा सार्धं यजमानः [6]प्रयत्नवान् । वटुर्युवा समो वृद्धश्चतुर्धा परिकथ्यते ॥ १५ ॥
*द्वयोर्विभागितः सम्यक् सविभागश्च कथ्यते । वर्षात् षोडशकादर्वाक् वटुरित्यभिधीयते ॥ १६ ॥
वटुर्युवा समो वृद्धो योग्यो नित्यार्चनाविधौ । नैमित्तिके साङ्कुरे तु समः श्रेष्ठतमेन वा ॥ १७ ॥
समये यजमानस्तु गां भुवं काञ्चनं तथा । नालिकेरं च कर्मादावाचार्याय प्रदापयेत् ॥ १८ ॥
ऋत्विजः षोडश ब्रह्मन् यद्वाष्टौ चतुरोऽपि वा । आचार्येण यथोक्तेन ऋत्विग्भिश्च यथोदितैः ॥१९॥
स्थापयेन्मन्दिरे विष्णुं यजमानः प्रयत्नवान् । सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥ २० ॥
अन्यथा चेद्धरिं धाम्नि स्थापयेन्मूढचेतनः । नैवेष्टं फलमाप्नोति म्रियते चाचिरात्स्वयम् ॥ २१ ॥
न च धाम [7]चिरस्थायि न च राष्ट्रं नराधिपः । न सन्निधत्ते भगवान् न च प्रीणाति चेज्यया ॥२२॥

---

1. म. समत . 2. म. कुशाग्रमति. 3 म कृतज्ञो 4 म. चैव क्षमबुद्धिरमत्सरः 5. श्री. भाजनः. 6. श्री. समाजयन्. *इत. 18 श्लोकपर्यन्त म. श्री. इति द्वयोर्ग्रन्थयोः न दृश्यते ।. 7. म. स्थिर.

नैवाधिकारी सन्यासी ब्राह्मणोऽप्युक्तलक्षणः। इतरेऽपि त्रयो वर्णाः यजने वाधिकारिणः ॥ २३ ॥
न कुण्डगोलौ नैवान्ये भवेयुरनुलोमजाः । कर्माधिकारिणो नैव व्रात्या [1]वै ब्रह्मयोनयः ॥ २४ ॥
नैतेषामधिकारोऽस्ति सूतादीनां चतुर्मख ।

## अङ्कुरार्पणम्

प्रतिष्ठाकर्मणः पूर्वमङ्कुरारोपणं भवेत् ॥ २५ ॥
न कर्म फलदं ब्रह्मन् अङ्कुरारोपणं विना । तस्मादारभ्यमाणेषु प्रतिष्ठादिषु कर्मसु ॥ २६ ॥
प्रागेव वापयेद्बीजान् अङ्कुरार्थं यथाविधि । द्वादशाहे नवाहे वा सप्ताहे पञ्चमेऽहनि ॥ २७ ॥
तृतीयेऽहनि वा कुर्यात् कर्मारम्भदिनं प्रति । पालिकासु शरावेषु घटिकासु च वापयेत् ॥ २८ ॥
अङ्कुराणि प्रशस्तानि पात्रेषु त्रिविधेष्वपि । साङ्गुलं हस्तमुत्सेधं पालिकानामथाननम् ॥ २९ ॥
षोडशाङ्गुलविस्तारं बिलं सप्ताङ्गुलं भवेत् । *पादपीठस्य विस्तारमधश्चैवाङ्गुलं भवेत् ॥ ३० ॥
उन्मत्तकुसुमाकारं वक्त्रमम्भोजसन्निभम् । द्वाविंशाङ्गुलमायामो घटिकानां प्रकीर्तितः ॥ ३१ ॥
घटिकाः पञ्चवक्त्राः स्युस्तन्मध्ये तु घटाकृतिः । षडङ्गुलं च विस्तीर्णं एतेषां मध्यमं मुखम् ॥३२॥
चतुष्टयं चतुर्दिक्षु चतुरङ्गुलमाननम् । विंशत्यङ्गुलमुत्सेधं विस्तारं द्वादशाङ्गुलम् ॥ ३३ ॥
शरावेषु विजानीयात् यद्वा मानं यथावसु । हेमादिलोहजाः सर्वाः मृण्मया वा यथावसु ॥३४॥
षट्त्रिंशत्पालिकाश्चैव षट्त्रिंशद्घटिकास्तथा । शरावाश्चापि षट्त्रिंशदेवमष्टोत्तरं शतम् ॥ ३५ ॥
उत्तमा क्लृप्तिरुदिता जघन्या क्लृप्तिरुच्यते । प्रत्येकं षोडश ग्राह्या भवेयुर्द्वादशापि वा ॥ ३६ ॥
अष्टौ वा स्युश्चतस्रो वा शरावघटपालिकाः । सर्वार्थे पालिका यद्वा षोडशाष्टौ यथाबलम् ॥ ३७ ॥
चतस्रो वा ततस्तासु मङ्गलाङ्कुरकल्पना । अयुग्मा मानुषे कार्या दैवे युग्मास्तु पालिकाः ॥३८॥
अङ्कुरावापनस्थाने मण्डपं परिकल्पयेत् । शुभे विविक्तेऽभिमते देशे वै देशिकोत्तमः ॥ ३९ ॥
चतुर्दिक्षु चतुर्द्वारं चतुर्वेदनमालिकम् । दर्भमालापरिक्षिप्तं मुक्तादामविराजितम् ॥ ४० ॥
[2]वितानक्षौमविस्तारं गोमयालिप्तभूतलम् । प्रदीपमालावितमक्षतैश्चापि [3]सर्वतः ॥ ४१ ॥
सुधाचूर्णैश्च धवलैश्चित्रिताभ्यन्तरस्थलम् । मण्डपं कल्पयित्वैवं गृह्णीयात्तत्र मृत्तिकाम् ॥ ४२ ॥
खनित्रं क्षालयित्वाद्भिराच्छाद्य नववाससा । †विष्वक्सेनमथो वापि वैनतेयमथापि वा ॥ ४३ ॥
सुमनोभिरलङ्कृत्य ऋत्विग्भिर्वाहयेद् गुरुः । गजस्कन्धं रथं वाश्वमारूढो वाहको नयेत ॥ ४४ ॥

---

1. म. ब्राह्मणयोनयः. * एष अर्धश्लोकः नदृश्यते. म. ग्रन्थे. 2. म. वितत.
3. म. सहितः. श्री. सर्वशः. † म. ग्रन्थे एष अर्धश्लोकः न दृश्यते.

छत्रध्वजपताकाभिः सार्धमङ्कुरभाजनैः । त्रिविधैर्मङ्गलैस्तूर्यैरपि चोद्घोष्य सर्वतः ॥ ४५ ॥
भक्तैर्भागवतैः सार्धं यतिभिर्मुनिभिस्तथा । निष्क्रम्य शाकुनं सूक्तं [1]पाठयन् बह्वृचानपि ॥ ४६ ॥
प्राचीमुदीचीं वा दूरां दिशं गत्वा मनोहरे । शुचौ देशे मृदं शुद्धां खनित्रेण समुद्धरेत् ॥ ४७ ॥
अस्त्रमन्त्रेण धरणीं संप्रोक्ष्य प्रथमं गुरुः । महीसूक्तेन संस्पृश्य ध्यायन्नेकाग्रचेतसा ॥ ४८ ॥
मूर्तिं देवस्य वाराहीं अभ्यर्च्य कुसुमैर्ध्रुवम् । अस्त्राम्बुना प्रोक्षितेन पुष्पैरभ्यर्चितेन च ॥ ४९ ॥
खनित्रेण खनेद्भूमिं प्राङ्मुखः क्रोडविद्यया । लोहजे भाजने मृत्स्नां वेत्रजे वाथ भाजने ॥५०॥
गृहीत्वा मूलमन्त्रेण वेष्टयित्वा च वाससा । प्रत्यग्रेण तथा नद्या वालुकान् [2]गोमयाँस्तथा ॥ ५१ ॥
गोकुलात्पूर्ववत्पात्रे गृहीत्वाच्छाद्य चांशुकैः । याने गजे हये वापि समारोप्य गुरुः स्वयम् ॥५२॥
ऋत्विग्भिः सहितैः सूक्तमधीयानैश्च शाकुनम् । श्रीसूक्तं भूमिसूक्तं च तूर्याण्यपि च घोषयेत् ॥ ५३ ॥
गत्वा प्रदक्षिणं ग्रामं प्रविशेन्मण्डपं ततः । आचार्यो मूर्तिपाश्चैव नूतनक्षौमवाससः ॥ ५४ ॥
सोत्तरीयाः स्वलङ्काराः सोष्णीषाः साङ्गुलीयकाः । सुरभीकृतसर्वाङ्गाः स्रग्विणो मृष्टकुण्डलाः ॥ ५५ ॥
† श्वेतया मृत्स्नया सम्यक् परिक्षिप्तोर्ध्वपुण्ड्रकाः । पवित्रपाणयः स्नाताः प्राणायामपरायणाः ॥५६॥
कृताचामाः कृतन्यासाः जप्तमन्त्रा यथातथम् । तदर्थमर्थयित्वा तु यजमानसमन्विताः ॥ ५७ ॥
भगवन्तं जगद्योनिं पूजयित्वा विधानतः । संप्रोक्ष्य पालिकाक्षेत्रमद्भिः शुद्धाभिरञ्जसा ॥ ५८ ॥
चन्दनार्द्राणि सूत्राणि स्फालयेयुरनुक्रमात् । प्रागायतानि प्रथमं ऋजूनि द्वादश स्फुटम् ॥ ५९ ॥
तथोदगायताग्राणि दश पञ्च च कल्पयेत् । आशास्वष्टासु मध्ये च शरावघटपालिकाः ॥ ६० ॥
द्वादश द्वादश स्थाप्याः शतमष्टोत्तरं तथा । आग्नेये नैर्ऋते भागे तथा याम्ये च पालिकाः ॥ ६१ ॥
घटिका वारुणे ब्राह्मे तथा पौरन्दरेऽपि च । ‡ शरावा मारुते सौम्ये रौद्रे चापि यथाविधि ॥६२॥
प्रागायतानि नव वा सूत्राणि परिकल्पयेत् । द्वादशैवेतराणि स्युः शरावघटपालिकाः ॥ ६३ ॥
अष्टौ च चत्वारिंशच्च यद्वा सूत्राणि कल्पयेत् । नवैव द्विप्रकाराणि षट्त्रिंशत्पालिकादयः ॥ ६४ ॥
प्रागायतानि नव वा उदीचीनायतानि षट् । चतुर्विंशतिपात्राणि यद्वा प्रागायतानि च ॥ ६५ ॥
चत्वारि सूत्राण्यन्यानि पञ्च द्वादशकल्पने । सर्वार्थपक्षे प्रथमे पञ्चैव द्विविधान्यपि ॥ ६६ ॥
यद्वेन्दुकुम्भपरितः पालिकाः षोडश स्थिताः । द्वादशापि तथैवाष्टौ चतस्रो वा दिशं प्रति ॥ ६७ ॥
सूत्रपात्रेषु सर्वत्र प्रत्यक् सोमघटस्थितिः । शक्त्यपेक्षं पालिकानां पक्षभेदः प्रदर्शितः ॥ ६८ ॥

---

1. म. श्री पाठयेत् 2 म गोमय † श्लोक. 56 श्री ग्रन्थे नास्ति.
‡ द्वौ अर्धश्लोकौ (62, 62½.) म. ग्रन्थे न स्तः.

प्रक्षाल्य विष्णुगायत्र्या शरावघटपालिकाः । सहदेवी च दूर्वा च सार्धमश्वत्थपल्लवैः ॥ ६९ ॥
कण्ठेषु पालिकादीनां बन्धनीयाश्चतुर्मुख । कुशकाशतृणैस्तेषां [1]बिलमूलानि पूरयेत् ॥ ७० ॥
बिलानि प्रथमं मृद्भिः वालुकाभिरनन्तरम् । करीषचूर्णैरुपरि समृद्धं पूरयेद्बिलम् ॥ ७१ ॥
पादेषु पालिकादीनां शालीन् व्रीहीनथापि वा । आढकं वा प्रस्थं वा तदर्धं वा तिलतण्डुलान् ॥ ७२ ॥
प्रतिपादं विनिक्षिप्य चतुरश्रमथापि वा । वृत्तं विस्तारयेत्पूर्वं [2]पालिकादीन् ततः क्रमात् ॥ ७३ ॥
न्यसेत्पादेषु धान्येषु मन्त्रैरेतैर्यथाक्रमम् । स्थाने यथोक्ते घटिकाः पारमेष्ठ्या तु विद्यया ॥ ७४ ॥
पुरुषाख्येन मन्त्रेण पालिकास्तदनन्तरम् । शरावान् विश्वमन्त्रेण प्राङ्मुखो वाप्युदङ्मुखः ॥ ७५ ॥
ब्रह्मादीशानपर्यन्तं न्यासस्तेषामनुक्रमात् । वासोभिर्वेष्टयेत्सर्वान् प्रत्येकं मूलविद्यया ॥ ७६ ॥
प्रतिव्यूहं तु वा शक्तौ छादयेद्वाससोपरि । स्थाने पश्चात्तु सर्वेषां सोमकुम्भं निवेशयेत् ॥ ७७ ॥
धान्यराशौ यथापूर्वमावेष्ट्य नववाससा । गन्धोदकेन संपूर्णे तस्मिन् रत्नानि[3]विन्यसेत् ॥ ७८ ॥
नीवाराः शालयो मुद्गाः श्यामाकाश्च प्रियङ्गवः । यवास्तिलाश्च गोधूमाः ये चान्ये याज्ञिका मताः ॥७९॥
तेषां बीजानि निक्षिप्य पात्रे महति नूतने । तत्पात्रं मूर्ध्नि विन्यस्य तूर्यघोषपुरःसरम् ॥ ८० ॥
परीत्य मन्दिरं पात्रं शालिद्रोणार्ध[4]शोभिते । प्राग्देशे पालिकादीनां निवेश्य सुसमाहितः ॥ ८१ ॥
†पयोभिः क्षालयेद्धान्यबीजानि विविधानि च । प्रच्छाद्य नववस्त्रेण पुण्याहं कारयेत्पुनः ॥ ८२ ॥
‡शङ्खभेर्यादिनादेन वादयित्वा दिशो दश । ध्यात्वा च पालिकादीनामधिदेवाननुक्रमात् ॥ ८३ ॥
घटिकानां विधातारं पालिकानां जनार्दनम् । ईशानं च शरावाणां ध्यात्वाऽभ्यर्च्य यथाविधि ॥८४॥
तोरणानि ध्वजाँश्चैव द्वारकुम्भाँश्च देशिकः । कुमुदादिगणाँश्चैव समभ्यर्च्य यथाविधि ॥ ८५ ॥
अर्चयेत्पालिकादीनामधिदेवाननुक्रमात् । सोमकुम्भे ततः सोमं [5]यजेदावाह्य च स्वयम् ॥ ८६ ॥
*निवेद्य पायसं हव्यं जुहुयात् सर्पिषा शतम् । [6]चतस्रः समिधश्चैव मूलमन्त्रेण मन्त्रवित् ॥ ८७ ॥
चरुं पुरुषसूक्तेन पूर्णाहुत्यन्तमाचरेत् । घृतेन सोममन्त्रेण जुहुयाच्छतमाहुतीः ॥ ८८ ॥
संपाताज्येन संस्पृश्य स्पर्शमन्त्रेण पालिकाः । संपाताज्यावशेषं च बीजपात्रे विनिक्षिपेत् ॥ ८९ ॥

---

1 म बलि. 2 म लिखेत् पद्म तिलोपरि 3 म. निक्षिपेत्. 4 म. तण्डुले.

† एतच्छलोकस्थाने—प्रच्छाद्य नववस्त्रेण सोमकुम्भे समाह्वयेत् ।
अर्घ्यादिभि. समभ्यर्च्य पुण्याह कारयेत् पुन ।। इति श्री ग्रन्थे दृश्यते.

‡ विश्वमन्त्रेण सपूज्य पालिकादीन् तत क्रमात् । इति अर्धश्लोक. श्री. ग्रन्थे दृश्यते

5. श्री यजेदावाहित पुन .

* निवेद्य पायसान्न वा शुद्धान्न वा यथारुचि । अग्नि ससाद्य विधिवत् सोममन्त्रेण देशिकः ।।
बीजाना साधनार्थन्तु जुहुयात् सर्पिषा शतम् ।। इति श्री· ग्रन्थे पाठ दृश्यते 6. श्री. तत्सङ्ख्यया,

सोममन्त्रं शतं [1]वारं जप्त्वा विप्राभ्यनुज्ञया । † मुहूर्ते शोभने बीजान् वापयेत्पालिकादिषु ।। ९० ।।
ब्रह्मादीशानपर्यन्तं द्वादशाक्षरविद्यया । आचार्यानुमताश्चान्ये वैष्णवा ध्यानमास्थिताः ।। ९१ ।।
आवपेयुरमी तूष्णीं सिञ्चेत्कुम्भस्थवारिभिः । पिधानैश्छादयेत्सर्वं दद्याद्दिक्षु [2]बलिं ततः ।। ९२ ।।
रक्षिभ्यः कुमुदादिभ्यो बलिं दद्याद्दिवानिशम् । यजेत सोमं तत्कुम्भे [3]पायसेन दिवानिशम् ।। ९३ ।।
‡ दीपांश्चारोपितान् रक्षेदनिर्वाणान् यथा तथा । द्विजेन्द्रान् तोषयेदिष्टैः ताम्बूलैः सुमनःफलैः ।। ९४ ।।
गुरुं च तोषयेद्वित्तैः यजमानः प्रयत्नवान् । सद्यो वा धान्यबीजानि यथोक्तविधिना वपेत् ।। ९५ ।।
हरिद्रावारिभिः सिञ्चेदङ्कुराण्यभिवृद्धये । * सोमकुम्भजलेनापि नित्यं सिञ्चेत पालिकाः ।। ९६ ।।
अङ्कुरेषु च पीतेषु शुक्लेषु च [4]तथा शुभम् । विद्याद् [5]ऋजुं प्ररूढेषु विपरीतेषु चाशुभम् ।। ९७ ।।
कर्मार्थमङ्कुराण्यादौ यः समारोपयेद् गुरुः । स एव कर्म कात्स्न्र्येन कुर्यात् प्राज्ञोऽपि नेतरः ।। ९८ ।।
अनुज्ञया वा तत्पुत्रः शिष्यो वा तत्समाचरेत् । ऋत्विजो वापि तत्कर्म यद्यशक्तो गुरुर्भवेत् ।। ९९ ।।

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे आचार्यलक्षणाङ्कुरार्पणविधिर्नाम चतुर्विंशोऽध्यायः ।।

---

# पञ्चविंशोऽध्यायः ।

## प्रतिष्ठोपकरणानि

श्रीभगवान्—

अथातः संप्रवक्ष्यामि प्रतिष्ठा[6]विधिमुत्तमम् ।

## मुख्यकालनिरूपणम्

अयनं [7]चोत्तरं मुख्यं जघन्यं दक्षिणायनम् ।। १ ।।
स्थापनं ध्रुवबेरस्य मुख्य एव सदेष्यते । जङ्गमस्थापने मुख्ये जघन्ये [8]चापि वा भवेत् ।। २ ।।
माघमासे भाद्रपदे प्रतिष्ठां मासि वर्जयेत् । गुरावस्तंगते शुक्रे [9]व्यतिपाते च वर्जयेत् ।। ३ ।।
सङ्क्रान्तौ दुर्दिने चैव ग्रहणे सोमसूर्ययोः । परस्ताच्च पुरस्ताच्च षोडशाहनि वर्जयेत् ।। ४ ।।

---

1. श्री. जप्त्वा पुण्याह कारयेत्तत..

† इतः पूर्वं अधोनिर्दिष्टः श्लोकः श्री ग्रन्थे अधिकतया दृश्यते.

उभाभ्यामपि हस्ताभ्यां घृतारोपणमाचरेत् । आचार्यस्स्वस्थमनसः विप्राणामभ्यनुज्ञया ।।

2. श्री सम. 3 श्री. सायप्रातः हविर्दिशेत् ‡ यावत्कर्मावसान तु तावत्कुर्याद्दिवानिशम् ।। इति श्री. ग्रन्थे अधिकतया दृश्यते. * एषः अर्धश्लोकः म. ग्रन्थे लुप्तः.

4. श्री. यथा ऋज. 5. श्री. शुभं. 6 श्री. काल. 7. श्री. चोत्तरे. 8. श्री. वायने. 9. श्री. व्यती,

22

अतिचारे तथा[1]माने पर्वयुग्मयुते तथा । अप्रशस्तेषु योगेषु [2]काणस्थूणा[3]न्धभेषु च ॥ ५ ॥
एवमादिषु चान्येषु गर्हितेषु न कल्पयेत् । राज्ञो राष्ट्रस्य चान्यस्य ग्रामस्य च गुरोस्तथा ॥ ६ ॥
यजमानस्य धिष्ण्यस्य शुभेष्वनुगुणेषु च । तिथिनक्षत्रवारेषु मुहूर्तेषु शुभेषु च ॥ ७ ॥
प्रथमा च द्वितीया च पञ्चमी च त्रयोदशी । तृतीया सप्तमी षष्ठी द्वादश्येकादशी तथा ॥ ८ ॥
दशमी पूर्णमासी च शुक्लपक्षे शुभास्त्विमाः । कृष्णे तु पञ्चमी यावत्तिथयः संप्रकीर्तिताः ॥ ९ ॥
त्रिषूत्तरेषु रेवत्यामश्विन्यां रोहिणीषु च । पुष्ये पुनर्वसौ चापि हस्ते च श्रवणे तथा ॥ १० ॥
देवस्य स्थापनं कुर्याद्विष्णोरभ्युदयावहम् । सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ॥ ११ ॥
एते सौम्यग्रहाः प्रोक्ताः प्रशस्ताः स्थापनंप्रति । सैंहिकेयार्कवाराश्च रक्तो वा स्थापने परे॥१२॥
राशौ तृतीये षष्ठे वा स्थिताश्चेत् शुभशंसिनः । द्वितीये च तृतीये च तथा पञ्चमषष्ठयोः ॥ १३ ॥
सप्तमे नवमे चैव राशौ चैकादशे पुनः । स्थितः सुखकरश्चन्द्रः षट्सप्तदशमस्थितः ॥ १४ ॥
भयकृद्भार्गवो ज्ञेयश्चन्द्रः क्रूरैर्निरीक्षितः । अतिथौ वान्यकालेषु न प्रशस्तश्चतुर्मुख ॥ १५ ॥
बहुनात्र किमुक्तेन सह मौहूर्तिकैर्गुरुः । स्थापनं देवदेवस्य कुर्यात् [4]कालेऽभिपूजिते ॥ १६ ॥

## अधिवासमण्डपस्थानम्

प्रासादस्याग्रतः कुर्यादधिवासनमण्डपम् । प्रथमावरणे कुर्यात् द्वितीयावरणेऽपि वा ॥ १७ ॥
तृतीयावरणे वापि देशे योग्यावकाशके । आशास्वष्टास्वभिमते देशे मण्डपकल्पनम् ॥ १८ ॥
विस्तीर्णं दशभिर्हस्तैस्तावद्भिश्चायतं करैः । चतुर्दिक्षु चतुर्द्वारं मण्डपं परिकल्पयेत् ॥ १९ ॥

## कुण्डकल्पनम्

तन्मध्ये पञ्चहस्ता स्याद्वेदी हस्तसमुच्छ्रुता । चतुरश्रेष्टकचिता कुण्डानि परितस्ततः ॥ २० ॥
वेदिकायास्त्रिताले तु समानि विषमाणि वा । चतुरश्रं चतुर्विंशदङ्गुलं भूतलं खनेत् ॥ २१ ॥
विस्तारायामसदृशं परितः खातभूतलम् । द्व्यङ्गुलं तद्बहिः कल्प्यं मेखलात्रयमैष्टकम् ॥ २२ ॥
कुण्डस्य प्रकृतेरर्वाक् चत्वारो मेखलास्तु वा । कुण्डप्रकृतिरुच्छ्रायमङ्गुलानां च विंशतिः ॥ २३ ॥
अधस्तादुन्नता तस्य षोडशाङ्गुलमेखला । *तालोत्सेधमिता पूर्वा मध्यमाष्टाङ्गुलोन्नता ॥ २४ ॥
तदर्धेनोच्छ्रिताचान्या विस्तारश्चतुरङ्गुलः । सर्वासां सात्विकीचाद्या मध्यमा राजसी मता॥ २५ ॥
अन्या च तामसी ज्ञेया तदन्या त्रिगुणात्मिका । पश्चिमे प्रकृतेरूर्ध्वे योनिः पञ्चदशाङ्गुला ॥२६॥

---

1. श्री. मासे. 2. म गण्ड. 3. श्री. न्धकेषु. 4. श्री. म काला

* नार्पयेत्कुण्डकोणेषु योनिन्ता तत्र वित्तम्. । एष अर्धश्लोक श्री. ग्रन्थे अधिकतया दृश्यते.

आयता मूलमारभ्य विस्तीर्णा क्रमशो भवेत्। अङ्गुलैर्दशभिः षड्भिः चतुर्भिर्द्व्यङ्गुलेन च॥ २७॥
एकेन चाग्रे कल्प्यैव मेखलोपरि शोभना। योनिवत्सन्निवेशेन पिप्पलच्छदवद्भवेत्॥ २८॥
क्रमेण निम्ना प्रत्यक्स्था कुण्डस्याग्रे निवेशिता। अग्रे च योनेर्नालं स्याच्चतुरङ्गुलमायतम्॥ २९॥
त्र्यङ्गुलं [1]सहनं मूले मुखे चैव षडङ्गुलम्। काहलाकारवत् [2]कुर्यात् यमस्य दिशि वा भवेत्॥ ३०॥
योनिर्होता यदि भवेदुदीचीनमुखः स्वयम्। विना वा जुहुयाद्योनिं मोक्षाय त्वरते यदि॥ ३१॥
कुण्डमाने द्विहस्तादौ मेखलादि च तादृशम्। यद्वैकमेखलं कुण्डं कर्ता स त्वरितो यदि॥ ३२॥
कुण्डार्धं कोणभागार्धं द्वयं तेनैव संमितम्। सूत्रमारभ्य कुण्डस्य मध्यं दक्षिणतो दिशि॥ ३३॥
स्थापयित्वा पुरः पश्चात्सूत्रार्धं भ्रामयेत्ततः। अर्धचन्द्रवदेतेन कुण्डमाविष्कृतं भवेत्॥ ३४॥
कुण्डार्धादवशिष्टं यत्कोणे तस्यार्धमेव च। कुण्डार्धं च द्वयं तेन संमितं सूत्रमायतम्॥ ३५॥
तत्कुण्डमध्ये संस्थाप्य स्थापयेद्दिक्षु सर्वतः। वृत्तकुण्डं भवेत्तेन सन्निविष्टं सरोजवत्॥ ३६॥
दलानि मेखलास्थाने कल्पयेद् द्वादशाष्ट वा। विभज्य पञ्चधा कुण्डं बहिर्भागं द्वयायतम्॥ ३७॥
सूत्रं कुण्डस्य मध्ये तु स्थापयित्वाथ पार्श्वयोः। गमयेत्सूत्रपातान्तं त्रिकोणं तेन कल्पयेत्॥ ३८॥
संविभज्याष्टधा कुण्डं भागेनैकेन वर्धयेत्। उभाभ्यामपि भागाभ्यां तस्मान्मध्यं प्रगृह्य च॥ ३९॥
लाञ्छयेत् षट्सु कोणेषु तत्र षट्सूत्रपातनम्। कृत्वा तत्र भवेत्कुण्डं षट्कोणं कमलासन॥ ४०॥
चतुर्विंशतिभागं तु कृत्वा क्षेत्रं पुरोदितम्। एकभागं बहिः पश्चात् सर्वत्रैव निवेशयेत्॥ ४१॥
मध्यात्कोणाद्गृहीत्वैवं पश्चात्तद्दिक्षु लाञ्छयेत्। ततस्तत्सूत्रसंयोगात् अष्टकोणं भवेत्स्फुटम्॥ ४२॥
पञ्चकोणविभागेन सूत्रपातो विधीयते। [3]पश्चाद्दशाङ्गुलं सूत्रं कोणे [4]कोणे तु पातयेत्॥ ४३॥
कोणान्तराणि कुर्वीत अष्टादशभिरङ्गुलैः। सूत्रये[5]त्पूर्वदिक्सूत्रं पञ्चकोणेषु पातयेत्॥ ४४॥
दशाङ्गुलं मध्यमं तु भ्रामयेत्समसूत्रकम्। दशाङ्गुलं तथा योनिं कुर्यादश्वत्थपत्रवत्॥ ४५॥
यादृग्विधं भवेत्कुण्डं तादृगेव तु मेखला। योनिं सर्वेषु कुण्डेषु कल्पयेत्कमलासन॥ ४६॥
योनिकुण्डेन योनिः स्यात् पद्मकुण्डेन पङ्कजम्। पद्मं कुण्डेषु सर्वेषु खातमध्ये प्रकल्पयेत्॥ ४७॥
पूर्वोक्ते तु दलस्थाने अराणि परिकल्पयेत्। चक्रकुण्डं भवेत्तेन पद्मकुण्डं [6]तदेव तु॥ ४८॥
ततोऽङ्गुलिवशाद्वा कुर्यात्कुण्डानि पद्मज। पूर्वदिक्चापकुण्डं च पश्चिमे ज्यां प्रकल्पयेत्॥ ४९॥
चतुर्विंशाङ्गुलं सूत्रं विस्तारायामसंयुतम्। चतुरश्रसमायुक्तं चतुरश्रं विधीयते॥ ५०॥
षष्ट्यङ्गुलं भवेच्चापं ज्या तु षट्त्रिंशदङ्गुला। चापकुण्डं भवेदेवं द्वात्रिंशत्यङ्गुलं पुनः॥ ५१॥

---

1. श्री. नहन. 2. श्री. कार्यं. 3. श्री. सप्त. 4. श्री. कोणेषु. 5. श्री. दष्ट. 6. म. तथैव.

पातयेत् त्रिगुणेनैव त्रिकोणं विद्यते स्फुटम् । पश्चादशाङ्गुलं सूत्रं मध्यतो भ्रामयेत्ततः ॥ ५२ ॥

वृत्तकुण्डं भवेदेवं पद्मकुण्डं तदेव तु । पद्मं पद्म[1]समाकारं कर्णिकादलसंयुतम् ॥ ५३ ॥

यथावृत्तप्रमाणं हि तथा पद्मस्य लक्षणम् ।

चतुष्कुण्डादिविधिः

चतुरश्रं भवेत्कुण्डं वेद्याः प्राचीनभूतले ॥ ५४ ॥

कुण्डं दक्षिणतो विद्यादर्धचन्द्रसमाकृति । वृत्तं तु पश्चिमे देशे उत्तरे कमलाकृति । ५५ ॥

यद्वा त्रिकोणं तत्र स्यात् चतुष्कुण्डं प्रकल्पयेत् । इन्द्रेशानान्तरे पद्मं यद्वा च चतुरश्रकम् ॥ ५६ ॥

प्राक् [2]प्रत्यक् कमलं कुण्डं पञ्चकुण्डविधौ भवेत् । दिश्यग्नेर्योनिकुण्डं स्यात् त्रिकोणं [3]तु त्रिचक्षुषः ॥५७॥

सप्तकुण्डविधानोऽयं प्रकारः कमलासन । चतुरश्रं भवेत्प्राच्यां अग्नेर्दिशि भगाकृति ॥ ५८ ॥

चापाकृति यमस्य स्यात् षडश्रं निर्ऋतेर्भवेत् । वरुणस्य भवेद्वृत्त पञ्चाश्रं मातरिश्वनः ॥ ५९ ॥

त्रिकोणं नरवाहस्य ईशानस्याष्टकोणकम् । चतुरश्रस्य कुण्डस्य प्राग्देशे कमलाकृति ॥ ६० ॥

नवकुण्डविधौ क्लृप्तिरियं विषयवह्निषु । समवह्निषु पूर्वादिदिक्षु कुण्डं क्रमाद्भवेत् ॥ ६१ ॥

चतुरश्रं ततश्चापं वृत्तं कोणत्रयान्वितम् । चतुष्कुण्डविधाने स्यात् षट्कुण्डे तूच्यते विधिः ॥ ६२ ॥

चत्वारि पूर्ववत्कृत्वा दिश्यग्नेर्योनिकल्पनम् । षडश्रं दिशि कुण्डं स्यात्षडर्धनयनस्य तु ॥ ६३ ॥

अष्टकुण्डे त्वष्टदिक्षु कुण्डान्यष्टौ यथाक्रमम् । चतुरश्रं भगाकारं चापाकारं षडश्रकम् ॥ ६४ ॥

वृत्तं पञ्चाश्र[4]मुदितं त्रिकोणं चाष्टकोणकम् । त्रीणि त्रीणि च कुण्डानि यद्वा दिक्षु प्रकल्पयेत् ॥ ६५ ॥

कमलं च त्रिकोणं च दिक्षु कुण्डस्य पार्श्वयोः । कल्पयेच्च चतुर्दिक्षु द्विषट्केऽग्निविधिर्भवेत् ॥ ६६ ॥

मूर्तिसंख्यानुगुणमग्निकल्पनम्

पञ्चमूर्तिप्रतिष्ठायां नवाग्निं परिकल्पयेत् । पञ्च वा सप्त वा वह्निं चतुर्मूर्तौ तु कल्पयेत् ॥ ६७ ॥

अष्ट षड्वाऽथ चतुरः कल्पयेज्जातवेदसः । अथवा [5]द्वादशाप्यग्नीन् कल्पयेत्कमलासन ॥ ६८ ॥

एकमूर्तौ वीतिहोत्राः युग्माः स्यु[6]रथ वेतरे ।

प्रपानिर्माणम्

प्रपायां वेदिमथवा महत्यां कमलासन ॥ ६९ ॥

षोडशस्तम्भपरमां प्रपां यद्वा प्रकल्पयेत् । तिरस्करिण्या परितश्छादयेन्मण्डपान्तरम् ॥ ७० ॥

---

1. श्री. म. समं कार्यं. 2. श्री. भवेत्. 3. म. त्रिषु. 4 श्री. मुदिष्ट. 5. म. द्वादशान् वह्नीन्. 6. श्री. रथ चेतरे.

*द्वाराणि दिक्षु चत्वारि प्रपायाः परिकल्पयेत्। स्नानमण्डपमैशान्यां दिशि [1]तस्य प्रकल्पयेत् ॥ ७१ ॥
स्नानवेदी च तत्र स्यात् प्राग्भागे हस्तसंमिता। द्विहस्ता वा त्रिहस्ता वा हस्तमात्रसमुच्छ्रया ॥ ७२ ॥
यद्वा तालसमुत्सेधा चतुरश्रा मनोहरा। *दिग्भागे जलकुल्या तु सौम्ये निम्ना मनोहरा ॥ ७३ ॥

होमसाधनानि

स्रुक्स्रुवौ लक्षणोपेतौ होमार्थं परिकल्पयेत्। पालाशीं खादिरीं वापि स्रुचं यद्वाऽन्यवृक्षजम् ॥७४॥
याज्ञीयां कल्पयेच्छिल्पी [2]जुहूदण्डसमायताम्। [3]हेमादिलोहजां वापि दारुजां वापि भूषिताम् ॥७५॥
द्वितालसंमितां वापि साङ्गुलां कमलासन। त्रिधा विधाय तां भूयस्तृतीयेंऽशे द्विधा कृते ॥ ७६ ॥
उपर्यंशं पुनः कुर्यात् पञ्चधा चतुरंशकैः। भवेत्स्रुचोऽग्रं तन्मूलं विस्तारेण षडङ्गुलम् ॥ ७७ ॥
अग्रमेकाङ्गुलं क्रोडवक्त्रवत्परिकल्पयेत्। पञ्चांशेनावशिष्टेन भागेन गलकल्पनम् ॥ ७८ ॥
गलं द्व्यङ्गुलविस्तारमुभयोस्तस्य पार्श्वयोः। अर्धाङ्गुलं भवेन्निम्नं विस्तारायामतत्समम् ॥ ७९ ॥
त्यजेदंशमशेषेण सूत्रपाताद्बहिः स्थितम्। गलस्याधोऽवशिष्टांशो वृत्तो वा चतु[4]रश्रकः ॥ ८० ॥
विस्तारायामसदृशं स्याद्वृतं तस्य मध्यतः। वृत्तं तृतीयभागेन संमितं शोभनाकृति ॥ ८१ ॥
गाधं विस्तारसदृशं गर्तस्य परिकीर्त्यते। गर्तबाह्यं त्रिधा कृत्वा प्रथमेऽष्टदलस्थितिः ॥ ८२ ॥
मध्यमेंशे चतुर्धा तु विभजेन्नाभिमण्डलम्। प्रथमे परिकल्प्यं स्यादम्भोरुहनिकेतनम् ॥ ८३ ॥
द्वाभ्यां तु मध्यमांशाभ्यां षडरं द्विगुणं तु वा। अवशिष्टेन भागेन नेमिमण्डलकल्पनम् ॥ ८४ ॥
शङ्खाश्चतुर्षु कोणेषु चतुरश्रप्रकल्पने। यवोन्नता बहिः कार्या मेखला च चतुर्यवा ॥ ८५ ॥
आरभ्य गर्तमग्रान्तं विवरं सर्पिषो भवेत्। सरोजपृष्ठसदृशं पृष्ठभागं प्रकल्पयेत् ॥ ८६ ॥
कूर्मपृष्ठसमं यद्वा चतुरश्रं सपीठिका। अधस्ताद् द्विगुणस्तस्य दण्डायामं प्रचक्षते ॥ ८७ ॥
तद्दण्डमष्टधा कृत्वा मूलभागेन कल्पयेत्। अधस्तात्कुम्भमर्धेन शिष्टेनोपरि पङ्कजम् ॥ ८८ ॥
मूलं प्रकल्पयेदेवं पद्मे दण्डः प्रतिष्ठितः। आधारं वा विना दण्डो वलयैस्त्रिभिरङ्कितः ॥ ८९ ॥
वृत्तोऽथवा तदर्धाश्रस्तदग्रमपि पङ्कजम्। त्रिभिर्वा वलयैर्युक्तं नाहनं चाङ्गुलं भवेत् ॥ ९० ॥
स्रुवं च हस्तमानं स्यात्तदग्रं द्व्यङ्गुलं भवेत्। [5]वासिकापुटवद्वर्तद्वययुक्तं सुवृत्तकम् ॥ ९१ ॥
गर्तमर्धाङ्गुलं निम्नं विस्तीर्णं चार्धमङ्गुलम्। अङ्गुलेनावशिष्टेन परितो [6]गोलकल्पनम् ॥ ९२ ॥
बिलयोः पृष्ठभागे तु मध्यरेखा यवोन्नता। अयुग्मवलयं कण्ठे यवमात्रोन्नतं शुभम् ॥ ९३ ॥

* नक्षत्रचिह्नितौ द्वौ अर्धश्लोकौ म. ग्रन्थे. लुप्तौ. 1 श्री. तत्र. 2. श्री. बाहु. 3. श्री. स्वर्णादिः 4. म. रश्रवः. 5. श्री. म. नासिका. 6. श्री. गल.

दण्डं च परिशिष्टेन गोलाङ्गुलाकृतिर्भवेत् । मूलं द्व्यङ्गुलविस्तीर्णं लोहतो दारुजोऽपि वा ॥ ९४ ॥

—स्रक्स्रुवाद्यर्थे वर्ज्य दारु—

स्फुटितं सक्रिमिं भिन्नमूर्ध्वशुष्कं सकोटरम् । स्वयं निपतितं वृक्षं स्रक्स्रुवार्थे परित्यजेत् ॥ ९५ ॥
स्वीकुर्याच्चेत्प्रमादेन भूयान् दोषः प्रसज्यते ।

—मण्डपद्वाराद्यलङ्कारः—

द्वारेषु मण्डपस्य स्यात्तोरणानां चतुष्टयम् ॥ ९६ ॥
अश्वत्थोदुम्बरवटप्लक्षैः प्रागादि[1]तोरणैः । एकेन वा यथोक्तेन अलाभे चन्दनद्रुमः ॥ ९७ ॥
सप्तहस्तायताः पादाः पञ्चहस्तायतापि वा । अयुग्मैरायताः पादाः हस्तेनार्धेन पट्टिका ॥ ९८ ॥
त्रीणि त्रीणि च शूलानि तोरणं तोरणं प्रति । शूलानि च द्वितालानि नाहश्चाष्टाङ्गुलो भवेत् ॥ ९९ ॥
पट्टिकापादनहनं द्वाविंशत्यङ्गुलं भवेत् । [2]वृत्तान् वा चतुरश्रान् वा पादाँश्च परिकल्पयेत् ॥ १०० ॥
कलशं दक्षिणावर्तं शङ्खचक्रं ध्वजं तथा । पटहं कार्मुकं नागं तेषु पादेषु कल्पयेत् ॥ १०१ ॥
कारयेन्मङ्गलान्यष्टौ फलकेषु यथातथम् । लोहजेष्वथवा यज्ञवृक्षजेषु यथावसु ॥ १०२ ॥
द्वाविंशत्यङ्गुलायामं तदर्धेन च विस्तृतम् । फलकं द्व्यङ्गुलघनं पीठे पीठे प्रतिष्ठितम् ॥ १०३ ॥
फलकेषु [3]लिखेत्तत्र श्रीवत्साद्य[4]ष्टमङ्गलम् । श्रीवत्सं पूर्णकुम्भं च भेरीं दर्पणमण्डलम् ॥ १०४ ॥
मत्स्ययुग्मं च शङ्खं च चक्रं काश्यपनन्दनम् । पद्मासनस्थितं सौम्यं द्वादशाङ्गुलमायतम् ॥ १०५ ॥
तत्तद्रूपानुसारेण विस्तीर्णं पार्श्वयोर्द्वयोः । प्रदीपं चामरं मूर्ध्नि छत्रं च परिकल्पयेत् ॥ १०६ ॥
बिम्बप्रमाणानुगुणं स्नानपीठमुदुम्बरम् । दध्नोक्षपीठं च तथा जलाधि[5]पवनस्य च ॥ १०७ ॥
पीठं बिम्बानुगुण्येन कल्पयेदविचारयन् । ऋत्विजां च तथा पीठमाचार्यस्य च कल्पयेत् ॥ १०८ ॥
पादुके पादसदृशौ यज्ञवृक्षेण कल्पयेत् । उपकुम्भं च कलशं करकं मणिकं तथा ॥ १०९ ॥
दीपस्तम्भान् घृतादीनि स्नानद्रव्याण्यशेषतः । [6]चन्दनानि सुगन्धानि वस्त्राणि विविधानि च ॥ ११० ॥
*समित्पुष्पकुशादीनि धान्यानि विविधानि च । सुवर्णरत्नलोहानि गाः सवत्सा मनोहराः ॥ १११ ॥
संभारानेवमन्याँश्च संभृत्याव्यग्रमानसः । आरभेत यथाशास्त्रं प्रतिष्ठां देशिकोत्तमः ॥ ११२ ॥

**इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे प्रतिष्ठोपकरणं नाम पञ्चविंशोऽध्यायः ॥**

---

1. म. तोरणाः. 2. श्री. वृत्त. 3. श्री. विविधे. 4. श्री. ष्टकं लिखेत्. 5. म, वसनस्य च. श्री. वसनासनम्. 6. श्री. चन्द्रनादीनि च तथा. * एष अर्धश्लोकः म, ग्रन्थे लुप्तः.

# षड्विंशोऽध्यायः ।

## प्रतिष्ठाविधिः

ब्रह्मा—

व्यापिनो देवदेवस्य प्रतिष्ठा कीदृशी मता । भगवन् संशयानस्य मम निश्चयतो वद ॥ १ ॥

श्रीभगवान्—

* सर्वस्य भूतजातस्य हरिरात्मा स्थितोऽपि सन् । मन्त्रवीर्याच्च माहात्म्यात् स्थापकस्य गुरोस्तथा ॥ २ ॥

प्रतिमायां प्रकर्षेण सन्निधत्ते हरिः स्वयम् । कामानशेषांस्तत्रैव हरिमर्थयते जनः ॥ ३ ॥

तेन प्रतिष्ठानामेदं [1]अव्यर्थं वर्तते भुवि । यथा च वह्निर्दहनो न दहन्व्याप्य तिष्ठति ॥ ४ ॥

अरणीमथनाद् भूयो जायमानः प्रदृश्यते । दहनादीनि कर्माणि करोति च यथातथम् ॥ ५ ॥

तथा सर्वगतो विष्णुरदृश्यः प्राकृतैर्जनैः । दृश्यते च प्रतिकृतौ मन्त्रिणो मन्त्रगौरवात् ॥ ६ ॥

तस्मात्सर्वात्मना विष्णुं प्रतिष्ठाप्याभिपूजयेत् । शिल्पिभिर्निर्मिते बिम्बे शास्त्रदृष्टेन वर्त्मना ॥ ७ ॥

कर्मार्चा पीठिकायां च रत्नादि[2]व्यसने कृते । उद्घाटिते च नयने यथार्हं सर्वशान्तिदे ॥ ८ ॥

स्थूलसूक्ष्मेषु चान्येषु प्रतिमाङ्गेषु सर्वतः । सुकृतेषु यथाशास्त्रं कर्मान्ते देशिकोत्तमः ॥ ९ ॥

रथकारेण विदुषा सुनिरूप्य निरूपकः । धनैश्च कर्मानुगुणं स्थपतीन् परितोष्य च ॥ १० ॥

रथकारं च विविधैर्मनःप्रीतिविवर्धनैः । गतेषु शिल्पिषु तथा रथकारे च निर्गते ॥ ११ ॥

अन्तर्बहिश्च सदने शोधिते मार्जनादिना । प्रज्वालितैर्दर्भपुञ्जैः पर्यग्निकरणे कृते ॥ १२ ॥

प्राकारे मण्डपे धाम्नि गोपुरे मार्जनादिना । शुद्धीकृते तथा गव्यैः पञ्चभिः प्रोक्षिते सति ॥ १३ ॥

पुण्याहं वाचयित्वाथ ब्राह्मणैर्मन्त्रवित्तमैः । अब्लिङ्गाभिश्च भूयोपि गर्भगेहं बहिस्तथा ॥ १४ ॥

ऋग्भिः संप्रोक्षयेत्सर्वमाचार्यः [3]सर्वभूसुरः । प्रदीपितैर्गोघृतैश्च प्रदीपैर्बहुभिस्तथा ॥ १५ ॥

सर्वतो दीपिते धाम्नि कालागुरुमुखैस्तथा । गन्धद्रव्यैर्धूपयित्वा सुधाचूर्णैस्तथाक्षतैः ॥ १६ ॥

पुष्पैर्दूर्वाङ्कुरैश्चापि सर्वतो धाम्नि भूषिते । ततोऽपराह्णसमये शान्तिहोमं समाचरेत् ॥ १७ ॥

मानोन्मानप्रमाणादेर्हानिर्वा वृद्धिरेव वा । दुर्विज्ञेयां तदखिलं होमाच्छाम्यति निश्चयम् ॥ १८ ॥

शमीपल्लवसंयुक्तानक्षतान् देशिकः स्वयम् । सप्तव्याहृतिभिश्चैव प्रत्येकं जुहुयाच्छतम् ॥ १९ ॥

चरुं नृसूक्तेन तथा जुहुयात् षोडशाहुतीः । पञ्चोपनिषदा चैव सर्पिषा जुहुयाच्छतम् ॥ २० ॥

---

* आरभेत यथाशास्त्रं प्रतिष्ठां देशिकोत्तम । एष अर्धश्लोकः श्रीग्रन्थे एव अधिकतया दृश्यते.

1. म. अन्वर्थं. 2. म. न्यसने. 3. श्री. सह

प्रतिमासन्निधावेवं हुत्वा पूर्णावसानिकम् । उपतिष्ठेत तदनु मन्त्रेणानेन देशिकः ॥ २१ ॥
नमस्तुभ्यं भगवते जातवेदस्स्वरूपिणे । नारायणाय हव्यस्य कव्यस्य च यथातथम् ॥ २२ ॥
[1]हर्त्रे यष्टव्यदेवानामात्मने परमात्मने । सन्निधत्स्व चिरं देव प्रतिमायां हिताय नः ॥ २३ ॥
विज्ञाप्याधोक्षजं देवमेवं प्राञ्जलिरानतः । सदर्भं नववस्त्रेण प्रतिमां मूलविद्यया ॥ २४ ॥
आच्छादयेदुत्तरीयमपि दध्यात्तथा गुरुः । अर्घ्यं पाद्यं तथाचामं गन्धं [2]धूपं तथैव च ॥ २५ ॥
दीपं सुमनसः सर्वं गायत्र्या विष्णुपूर्वया । दद्याच्छ्रियादिदेवीनामुक्तं सर्वं स्वविद्यया ॥ २६ ॥
ब्रह्मादिपरिवाराणामन्येषां स्वस्वविद्यया । कौतुकं दक्षिणे हस्ते बध्नीयान्मूलविद्यया ॥ २७ ॥
तथैव विद्यया सप्त[3]वारान् [4]कृत्वाऽभिमन्त्रणम् । बध्वा समर्चयेद्देवं पुण्डरीकाक्षविद्यया ॥ २८ ॥
छायाधिवाससिद्ध्यर्थं देवस्य पुरतस्ततः । जलद्रोणीं कटाहं वा स्थापयेल्लोहनिर्मितम् ॥ २९ ॥
मृण्मयं वा यथालाभं भाजनं धान्यसञ्चये । पूरयेद्गन्धतोयेन शुद्धस्फटिकवर्चसा ॥ ३० ॥
जले च निक्षिपेत्कूर्चमष्टाविंशतिदर्भकम् । अर्चयेच्च हरिं कूर्चे भावयेन्मूलविद्यया ॥ ३१ ॥
संहारक्रममाचार्यः स्मृत्वा कूर्चे जले स्वयम् । शाययित्वा प्राक्छिरसं चक्रमुद्रां प्रदर्शयेत् ॥ ३२ ॥
कूर्चं श्रीधरयोर्दर्भैस्त्रिभिः स्याद्रुद्रवेधसोः । पञ्चविंशतिभिः कार्यं द्वाभ्यामन्यामृताशिनाम् ॥ ३३ ॥
रक्षाकुम्भं च तत्रैव यमस्य दिशि कल्पयेत् । संवेष्ट्य नववस्त्राभ्यामेकेन करकं तथा ॥ ३४ ॥
ब्रह्माणं पूजयेत्कुम्भे करके च सुदर्शनम् । परितः कलशानष्टौ निदध्याद्वस्त्रवेष्टितान् ॥ ३५ ॥
सापिधानान् सवस्त्रांश्च [5]सरत्नान् कूर्चसंयुतान् । इन्द्रादिदिक्पतीन् तेषु पूजयेदष्ट चाष्टसु ॥ ३६ ॥
सर्वाङ्गीणेन वस्त्रेण नवेन प्रतिमां तदा । [6]छादयित्वा समन्ताच्च सिद्धार्थान् विकिरेत्क्षितौ ॥ ३७ ॥
रक्षोहणेति मन्त्रेण रक्षां कुर्यात्समन्ततः । आरोपयेदनिर्वाणान् प्रदीपान् बहु[7]वर्चसः ॥ ३८ ॥
प्रवर्तयेत्त्रयी[8]घोषं ब्राह्मणैर्वेदपारगैः । चक्रमन्त्रं च वलजे विन्यस्याभ्यर्चयेद् गुरुः ॥ ३९ ॥
प्रादक्षिण्येन सदनात् निष्क्रमेत्सहमूर्तिपैः । यस्याः प्रतिकृतेः साक्षान्नाधिवासो जले भवेत् ॥ ४० ॥
तस्याश्छायाधिवासोऽयं कथितः कमलासन । दारुलोहशिलामय्याः प्रतिमायाः पृथग्विधाः ॥ ४१ ॥
तासां जलाधिवसनं साक्षादेवं विधीयते । लोहजप्रतिमानां तु पूर्वं वार्यधिवासनात् ॥ ४२ ॥
कृत्वा सरोजसंघातमधिवासं समाचरेत् । वृत्ताकारं शालिभारं निधायोपरि तण्डुलान् ॥ ४३ ॥
तदर्धमुपरिष्टाच्च तण्डुलार्धं तिलान् क्षिपेत् । तिलेषु पद्मविन्यासं कृत्वास्तीर्य कुशान् पुनः ॥ ४४ ॥
प्रागग्रं नूतनपटं तेषामुपरि निक्षिपेत् । सपद्मं केवलं वापि पीठं विन्यस्य तत्र तु ॥ ४५ ॥

1. श्री भोक्त्रे. म. होत्रे. 2. श्री पुष्पं च धूपकम् 3. श्री. वार 4. श्री. सूत्रा.
5. श्री. म. सलोहान् 6. म. साधयित्वा. 7. श्री. वर्चसम्. 8 श्री. घोषैः.

रत्नान्यपि च लोहानि गायत्र्या विष्णुपूर्वया । विन्यस्य जुहुयादग्नौ सर्पिषाष्टोत्तरं शतम् ।। ४६ ।।
नृसूक्तेन चरुं चैव पुण्याहं [1]चैव वाचयेत् । देवमारोपयेत्तस्मिन् पीठे मन्त्रमुदीरयेत् ।। ४७ ।।
सुप्रतिष्ठेति मनसा गुरुर्ध्यायेज्जगद्गुरुम् । [2]प्रतिष्ठितोऽसीति साम पठेच्च तदनन्तरम् ।। ४८ ।।
दृढबन्धं स्थपतिना कारयेत्कमलासन । उद्घाटयेच्च नयने प्रतिमाया यथाविधि ।। ४९ ।।
तोषयेद्रथकारादीन् धनेन महता पुनः । शमीपत्राक्षतैर्होमं कृत्वा[3]भ्यज्य च सर्पिषा ।। ५० ।।
घृतस्नातेति मन्त्रेण चूर्णैश्चोद्धृत्य [4]सर्वतः । प्रक्षाल्य वारिभिश्चोष्णैः कुशैर्नूतनवाससा ।। ५१ ।।
संवेष्टयेत्प्रतिकृतिं यथापूर्वमनुक्रमात् । उपवीतोत्तरीयादि प्रदानानियथापुरम् ।। ५२ ।।
आचम्य च प्रतिसरं बन्धयित्वा च मङ्गलम् । ततो रथादिके याने समारोप्य च मूर्तिपाः ।।५३।।
पठेयुः सामगानज्ञैः सार्धमन्यैश्च भूसुरैः । रथन्तरादिकं श्रेष्ठं पौरुषं सूक्तमुत्तमम् ।। ५४ ।।
नारायणानुवाकं च सूक्तं शाकुनमेव च । आमनेयुः प्रतिदिशं सूक्तं रक्षोघ्नमेव च ।। ५५ ।।
पाण्डरेणातपत्रेण चामरेण सितेन च । चीनांशुकमयैश्छत्रैः ध्वजैर्बर्हमयैस्तथा ।। ५६ ।।
व्यजनैरपि कल्याणैर्ध्वजैर्नानाविधै[5]रपि । तूर्यैर्बहुविधैर्नृत्तैर्गेयैश्चापि समन्ततः ।। ५७ ।।
महता जनसङ्घेन ब्राह्मणानामितस्ततः । नृपोपचारैरपरैरुपचर्य यथाविधि ।। ५८ ।।
प्रतिमां ग्रामधामादिप्रादक्षिण्येन चानयेत् ।

## जलाधिवासविधिः

जलाधिवासदेशान्तमासाद्य शिबिकादिकात् ।। ५९ ।।
अवरोप्य जलाभ्यर्णे प्रपायां सिंहविष्टरे । प्राङ्मुखं समवस्थाप्य यद्वा स्थाप्य उदङ्मुखम् ।। ६० ।।
नदीषु दीर्घिकायां वा तटाके निर्झरेऽपि वा । जलाधिवासनं कुर्यात् प्रसन्ने सलिलेऽपि वा ।।६१।।
अल्पतोये श्मशानान्ते लवणोदकदूषिते । कषाये कटुके चैव तिक्ते फेनैश्च दूषिते ।। ६२ ।।
चैत्यवृक्षसमीपे च नीचैरध्यासिते तथा । ऊषरे शैवलयुते वर्णान्तरयुते तथा ।। ६३ ।।
एवमादिषु दुष्टेषु प्रतिमां नाधिवासयेत । जलमध्ये प्रपां कुर्याद्बहुस्तम्भसमन्विताम् ।। ६४ ।।
चतुर्द्वारसमोपेतां चतुस्तोरणभूषिताम् । वितानध्वजसंयुक्तां दर्भमालापरिष्कृताम् ।। ६५ ।।
मुक्तादामसमायुक्तां स्रग्विणीं दीपदीपिताम् । फलैर्नानाविधैर्युक्तां तत्राधिवसनं चरेत् ।। ६६ ।।
पुण्याहवाचनं पूर्वं पुनर्नद्यादिषु स्थिताः । आपः पुरुषमन्त्रेण संशोष्य गुरुरात्मवान् ।। ६७ ।।
अग्निमन्त्रेण दग्ध्वा च चन्द्रकोटिसमप्रभम् । निवृत्तिमन्त्रं तद् ध्यायेत् तस्माद्ध्यानाद्विनिर्गतैः ।। ६८ ।।

1 श्री वाचयेत्तत. 2. म श्री प्रतिष्ठासीति वै साम. 3 श्री. भ्यर्च्य. 4. श्री. सर्वशः.
5. श्री. स्तथा.

जलैरमृतकल्पैश्च पुनर्नद्यादि पूरयेत् । तस्मिन् जले महापीठं चतुरश्रं समायतम् । ६९ ॥
विन्यस्यास्तरणोपेतं सोपधानं नवं शुभम् । प्रकल्पयेद्योगपीठं तस्योपरि यथाक्रमम् ॥ ७० ॥
गन्धपुष्पादिना पीठमर्चयित्वा समाहितः । द्वारतोरणकुम्भादि यष्टव्यं तदनन्तरम् ॥ ७१ ॥
पठद्भिः शाकुनं सूक्तं ब्राह्मणैः सह मूर्तिपैः । आदाय प्रतिमां पश्चादाचार्यस्तीरदेशतः ॥ ७२ ॥
संहारक्रममाचार्यः स्मृत्वा तोये प्रवेशयेत् । उदङ्मुखं प्राक्छिरसं प्रतिमां शाययेत्ततः ॥ ७३ ॥
वेष्टितां नववस्त्रेण आपादतलमस्तकम् । स्थापितान् पूर्ववत्तीरे कुम्भादीनपि पूजितान् ॥ ७४ ॥
जले निवेशयेत्तद्वत्तीरे तद्वद्यथाक्रमम् । दर्शयेच्चक्रमुद्रां च रक्षामुद्रां च दर्शयेत् ॥ ७५ ॥
तीरे चतुर्विधं वाद्यं वादयेत्सर्वतो[1]दितम् । ऋचो यजूंषि सामानि पुराणानि च भूसुराः ॥ ७६ ॥
आमनेयुरनिर्वाणान् प्रदीपानपि कारयेत् । स्नानपानादिकं सर्वं ततःप्रभृति नाचरेत् ॥ ७७ ॥
एकरात्रं त्रिरात्रं वा जलमध्येऽधिवासयेत् । यामं यामार्धकं वापि जलवासं समाचरेत् ॥ ७८ ॥
गृहार्चास्थापने काले सद्य एव समाचरेत् । जलाधिवसने चैव तथा नयनमोक्षणे ॥ ७९ ॥
शयने वेदिकायां च न कालः कमलासन । प्रदोषेष्वधिवासः स्याच्छयनं च महानिशि ॥ ८० ॥
प्रतिष्ठां च दिवा कुर्यान्मुहूर्ते शास्त्रचोदिते । नद्याद्यभावे बिम्बस्य जलाधिवसनं भवेत् ॥ ८१ ॥
जलद्रोण्यां कटाहे वा समुद्धृत्य महज्जलम् । यथासंभवमन्यस्मिन् मृण्मयादौ विधीयते ॥ ८२ ॥
सद्यो वा तोयवासं स्यात्पुरस्तादधिवासनात् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां क्रियापादे जलाधिवासविधिर्नाम षड्विंशोऽध्यायः ॥

---

## सप्तविंशोऽध्यायः ।

### प्रतिष्ठाविधिशेषः ।

श्रीभगवान्—

प्रतिमामधिवास्यैवमप्सु पूर्वोक्तवर्त्मना । अपरेद्युः प्रभातायां शर्वर्यां मण्डपादिके ॥ १ ॥
शोधिते रथकारेण शोभिते च यथातथम् । तोपिते रथकारे तु मनःप्रह्लादनैर्धनैः ॥ २ ॥
आचार्यो मूर्तिपाश्चैव कृतकृत्या जितेन्द्रियाः । नवाम्बरधराः सर्वे धृतपञ्चाङ्गभूषणाः ॥ ३ ॥
गन्धमाल्यधरा भद्राः सोत्तरीय [2]परिच्छदाः । धृतोर्ध्वपुण्ड्ररचनाः सोष्णीषा मृष्टकुण्डलाः ॥ ४ ॥
आदिष्टा यजमानेन जीवाजीवात्मकैर्धनैः ।

---

1. श्री. दिशम्. 2. म. परिष्कृताः.

—— वास्तुपुरुषनिरूपणम् ——

वास्तुहोमं प्रकुर्वीरन् कर्म दैवं यथा भवेत् ॥ ५ ॥

वास्तुर्नाम चतुर्वक्त्र भार्गवस्वेदसंभवः । [1]अभ्यद्रवत्सुरान् हन्तुमात्मनो बलदर्पितः ॥ ६ ॥

स देवैस्ताडितस्तूर्णमपि तद्भुवि विह्वलः । विस्रस्ताङ्गः स च प्राणान् धारयत्येव वास्तुकः ॥ ७ ॥

अधोमुखं प्राक्छिरसं विन्यसेद्वास्तुपूरुषम् । प्रसार्य पाणिपादौ द्वौ कोणभूमिप्रकल्पितौ ॥ ८ ॥

तमर्चयेत्प्रयत्नेन कर्म दैवं यथा भवेत् । अनर्चिते वास्तुदेवे कृतं कर्मासुरं भवेत् ॥ ९ ॥

मण्डपे दक्षिणे पार्श्वे वास्तुदेवं लिखेद् भुवि । सप्तदर्भयुतं कूर्चं कृत्वा तत्र विनिक्षिपेत् ॥ १० ॥

तत्रार्चयेद्वास्तुनाथं गन्धपुष्पादिभिः क्रमात् । वास्तुदेवस्य शिरसि पूजयेदंशुमालिनम् ॥ ११ ॥

झषध्वजं बाहुमूले कुमारं कूर्परे तथा । हस्ते विनायकं पादयुगले चाश्विदेवते ॥ १२ ॥

मध्ये चन्द्रं तथा पार्ष्ण्योः दुर्गां [2]मातॄश्च कूर्परे । बाहुमूले तथा स्थाणुं हृदये मामवस्थितम् ॥ १३ ॥

ब्राह्मणं नाभिदेशे च दिक्पालान् स्वासु दिक्षु च । क्षेत्रेशमुत्तरे पार्श्वे वास्तु[3]देवस्य पूजयेत् ॥ १४ ॥

पश्चिमे वास्तुनाथस्य देशे च जुहुयाद् गुरुः । पञ्चोपनिषदा सर्पिः सहस्रं शतमेव वा ॥ १५ ॥

शम्यपामार्गखदिरसमिद्भिर्जुहुयात्ततः । मूलमन्त्रेण तन्मन्त्रवर्णसंख्याभिरात्मवान् ॥ १६ ॥

चरुं पुरुषसूक्तेन जुहुयात् षोडशाहुतीः । चरुणा वास्तुदेवानां जुहुयाच्च सकृत् सकृत् ॥ १७ ॥

बलिं च दत्वा देवोभ्यो क्षेत्राधिपतये तथा । कर्मारम्भे प्रतिष्ठायां मण्डपे सदने तथा ॥ १८ ॥

वास्तुयागक्रमः प्रोक्तः सर्वत्र कमलासन । मार्जनं गोमयालेपः प्रोक्षणं मण्डपे भवेत् ॥ १९ ॥

सुधाचूर्णैरक्षतैश्च मण्डयित्वा भुवः स्थलम् । सिद्धार्थान् विकिरेद्दिक्षु अस्त्रमन्त्राभिमन्त्रितान् ॥ २० ॥

—— सान्निध्यानर्हाः जनाः ——

नास्तिकान् भिन्नमर्यादान् देवब्राह्मण[4]निन्दकान् । पापरोगयुतान् मर्त्यान् निन्दितान् पिशुनांस्तथा ॥

पाषण्डिनो हीनवृत्तीन् प्रतिलोमान् समत्सरान् । लुब्धान्मूर्खानविदुषो बहिर्निर्वासयेत्ततः ॥ २२ ॥

स्थूणांश्च मण्डपे तस्मिन् वासोभिर्वेष्टयेन्नवैः । वितानयेच्छुभैर्वस्त्रैः पताकाभिश्च भूषयेत् ॥ २३ ॥

मुक्तादामभिरन्यैश्च फलैः पुष्पैश्च पल्लवैः । परितो दर्भमूलाभिर्मणिकाञ्चनभूषणैः ॥ २४ ॥

शोभयेन्मण्डपं सर्वं यथावित्तानुसारतः । खात्वा द्वितालमवटं तोरणानि चतुर्दिशम् ॥ २५ ॥

स्थापयेद् द्वारदेशेषु [5]पूर्वादिषु यथाक्रमम् । अश्वत्थतोरणं प्राच्यां औदुम्बरमनन्तरम् ॥ २६ ॥

नैयग्रोधं च पाश्चात्यं प्लाक्षं च तदनन्तरम् । नर्तकैर्गायकैश्चैव वैणिकैर्वंशकैस्तथा ॥ २७ ॥

वादित्रकुशलैश्चान्यैः तथा वादविचक्षणैः । शोभितं सर्वतो दिक्षु ब्रह्मघोषैश्च [6]नादितम् ॥ २८ ॥

---

1. म. अभिद्रव. 2. म. मात्रा च. 3. श्री. नाथस्य. 4. श्री. दूषकान्. 5. श्री. धामादिषु
6. श्री. म. वादितम्.

दीपस्तथा पालिकाभिः साङ्कुराभिश्च सर्वतः । चन्दनागरुकर्पूरधूपैः परिमलीकृतम् ॥ २९ ॥
कृत्वैवं मण्डपं सम्यक् अपराह्णे गुरुः स्वयम् । उत्थाप्य बिम्बमुदकात्कुम्भं च कलशानपि ॥ ३० ॥
उद्वास्य देवतास्तस्मात् तद्बिम्बं तीरविष्टरे । प्राङ्मुखं समवस्थाप्य वारिभिः क्षालयेत्तथा ॥ ३१ ॥
लोहजं चेद्विशुध्यर्थं तिन्त्रिणीफलवारिणा । वस्त्राभरणपुष्पाद्यैरलङ्कृत्य मनोहरैः ॥ ३२ ॥
यानमारोप्य तद्बिम्बं यथापूर्वमशेषतः । कृत्वा मङ्गलतूर्यादि गमयेद्यागमण्डपम् ॥ ३३ ॥
मण्डपस्योत्तरे भागे विष्टरे विनिवेशयत् । आचार्यो मूर्तिपैः सार्धं प्रविशेद्धर्ममन्दिरम् ॥ ३४ ॥
बहुबेरविधानं चेद्विधिरेष विधीयते । प्राक् चाधिवासितं कूर्चं [1]बिलात्तस्मात्समुद्धरेत् ॥ ३५ ॥
बिम्बाच्च वस्त्राभरण [2]माल्यान्यपनयेद् गुरुः । नयनोन्मीलनं कृत्वा ध्रुवबेरस्य शास्त्रतः ॥ ३६ ॥
दर्शयेदष्टधान्यानि गाश्च कन्याः सलक्षणाः । उन्मीलनं श्रियादीनामेवं शास्त्रोक्तवर्त्मना ॥ ३७ ॥
कलशैः सप्तदशभिः [2]मृदादिद्रव्यसंयुतैः । छायास्नपनमादर्शे सकूर्चे कल्पयेद् गुरुः ॥ ३८ ॥
पृथक्छ्रियादिदेवीनां स्नपनं नवभिर्घटैः । ब्रह्मेशौ सप्तकलशैः ऋषीणामपि पञ्चभिः ॥ ३९ ॥
त्रिभिश्च देवतानां स्यादेकेन कलशेन वा । नीराजनान्तैर्वस्त्राद्यैरुपचारैः समर्चयेत् ॥ ४० ॥
ध्रुवबेरस्य हृदये तस्य दीपमणिप्रभम् । विन्यस्य मन्त्रमाचार्यो द्वादशाक्षरसंमितम् ॥ ४१ ॥
बिम्बमाच्छादयेद्वस्त्रैः कम्बलैर्वा समन्ततः । एवं कुर्याच्छ्रियादीनां ततो निर्गत्य मन्दिरात् ॥ ४२ ॥
मण्डपस्थां प्रतिकृतिं छादयेत्कम्बलादिभिः । रैमयं राजतं वापि पात्रमाढकपूरितम् ॥ ४३ ॥
धान्यराशौ निधायाग्रे पूरयेत्तद्यथाक्रमम् । मधुना सर्पिषा चैव पूरये[3]च्छादयेत्ततः ॥ ४४ ॥
वाससा परिशुद्धेन पात्रयोश्च तयोः पुनः । अर्चयेद्भास्करं पूर्वे पश्चिमे शशिनं तथा ॥ ४५ ॥
मन्त्रेण मधुवातेति सर्पिराद्यामिमन्त्रयेत् । अष्टाङ्गुला शलाका स्याद्धैमयी चाथ राजती ॥ ४६ ॥
अष्टधान्यानि परितः पात्रेषु विनिवेशयेत् । गाः कन्यकाश्च रुचिराः भूषणैश्चापि भूषिताः ॥ ४७ ॥
आनीय स्थापयेत्पार्श्वे ब्रह्मघोषैश्च घोषयेत् । मध्वक्तमुखया नेत्रं रैमय्या च शलाकया ॥ ४८ ॥
दक्षिणं प्रोल्लिखेद्वामं सर्पिषाक्तशलाकया । राजत्या विलिखेन्नेत्रं तच्चक्षुरिति संपठन् ॥ ४९ ॥
व्यपोह्याच्छादनपटं दर्शयेन्मधुसर्पिषी । अष्टधान्यानि गाश्चैव कन्यकाः पुरतः स्थिताः ॥ ५० ॥
गुरवे गाः प्रयच्छेत गोविन्दः प्रीयतामिति । पात्रयुग्मं शलाके च दद्याद्धान्याष्टकं तथा ॥ ५१ ॥
नेत्रोन्मीलनवेलायां वाद्यघोषेण घोषयेत् । गुरवे दक्षिणां दद्याज्जीवाजीवधनात्मिकाम् ॥ ५२ ॥
कौतुकं बन्धयेद्बिम्बे स्नपनार्थं यथाविधि । मूलमन्त्रेण तद्बिम्बं समुत्थाप्य नयेत्ततः ॥ ५३ ॥

---

1. श्री. म. जला. 2. श्री. म. घृतादि. 3. म. तद्यथाक्रमम्.

ऋत्विग्भिः शाकुनं सूक्तं अधीयानैश्च भूसुरैः । स्नानमण्डपभूभागे तत्रोदुम्बरविष्टरे ॥ ५४ ॥
क्षौमास्तरणसंयुक्ते स्थापयेत्प्रत्यगाननम् । भद्रादिमन्त्रमाचार्यः स्वयमुच्चार्य मन्त्रवित् ॥ ५५ ॥
*विंशत्येकोनमृद्भिस्तु पुण्यक्षेत्रादिजन्मभिः । उदङ्मुखः स्थितो मृद्भिः आलिप्य प्रतिमां ततः ॥५६॥
"मूर्धानं दिव" इत्येतामृचमुच्चारयेच्छुभैः । जलै "रिमं मे वरुण" इत्युच्चार्य समूर्तिपः ॥५७॥
क्षालयेत्कौतुकं सर्वं कलशैः स्नापयेद् गुरुः । देवस्य पुरतः स्थाप्य सूत्रवस्त्रादिवेष्टितान् ॥ ५८ ॥
सकूर्चैः पल्लवैर्युक्तान् कलशान् धान्यराशिषु । पाद्याभिषेचनं कुर्या"दिदं विष्णुरि"तीरयन् ॥५९॥
"आपो [1]हिष्ठे"ति मन्त्रेण तथाऽर्घ्येणाभिषेचनम् । "इमं मे वरुण" इत्येव तथाऽऽचमनवारिणा ॥
"पवित्रं ते"ति मन्त्रेण पञ्चगव्याभिषेचनम् । "घृतस्नाते"ति साम्ना च घृतेनैवाभिषेचयेत् ॥ ६१ ॥
"[2]दधि क्राव्णे"ति मन्त्रेण दधिस्नपनमाचरेत् । पयोव्रतेन साम्ना [3]च पयसा स्नपनं भवेत् ॥ ६२ ॥
"मधुवाते"ति मन्त्रेण मधुना स्नपयेद्गुरुः । 'यज्ञायज्ञे'ति मन्त्रेण कषायाम्भोऽभिषेचनम् ॥६३॥
"मानस्तोके" त्यृचा तोयैरुष्णैश्चैवाभिषेचनम् । "वषट् ते विष्णवे"त्यादिमन्त्रेण मणिवारिणा ॥
"फलिनी"त्यनुवाकेन स्नापयेत्तु फलाम्भसा । "हिरण्यगर्भ"मन्त्रेण स्नापयेल्लोहवारिणा ॥ ६५॥
"शन्नो देवीरि"ति [4]स्नानं मन्त्रितैर्मार्जनाम्बुभिः । "गन्धद्वारे"ति मन्त्रेण गन्धाम्बुकलशेन तु ॥
"त्रातारमि"ति साम्ना च भवेदक्षतवारिणा । यवाम्बुकलशेन स्या "दिदं विष्णुरि"तिऋचा ॥
"नृसूक्तेन" च शुद्धाभिरद्भिरन्तेऽभिषेचयेत् । उपचारैश्च वस्त्रादिप्रदानाद्यैः समर्चयेत् ॥ ६८ ॥
पूर्वे वा दक्षिणे भागे शय्यां वेद्यां प्रकल्पयेत् । प्रोक्षयेद्वेदिकां पूर्वं द्वादशाक्षरविद्यया ॥ ६९ ॥
प्रागग्रानुदगग्रान् वा दर्भान् संस्तीर्य पुष्कलान् । शालीनां [5]पञ्चभाराणि तण्डुलानर्धसंमितान् ॥७०॥
उपरिष्टात् क्षिपेत्तेषां तिलानुपरि निक्षिपेत् । तदर्धान् चतुरश्रान् वा वृत्तान् वा तान्विकीर्य च॥७१॥
चर्म वैयाघ्रमुपरि तिलानामपि निक्षिपेत् । तूलिकां निक्षिपेत्तस्मिन् मृद्वास्तरणभूषिताम् ॥ ७२ ॥
कम्बलानुपरिष्टाच्च क्षौमं तदुपरि क्षिपेत् । चित्राणि वस्त्राणि तथा शुक्लानि च तथोपरि ॥ ७३ ॥
काष्ठजं सुदृढं स्निग्धं चतुर्हस्तसमन्वितम् । चतुष्पादसमायुक्तं चतुरश्रायतं ततः ॥ ७४ ॥
खट्वासंज्ञितपर्यङ्कं तदूर्ध्वे स्थापयेत्ततः । दुकूलं मृदुतल्पं च विन्यसेत्सोपरिच्छदम् ॥ ७५ ॥

---

* पुण्यक्षेत्रे नदीतीरे पर्वते पुलिने ह्रदे । निर्झरे सगमे शोण्ये वेदिकार्वश्योस्तथा ।
शालिक्षेत्रे देवघाते शृगे च वृषहस्तिनो. । वराहकृष्टे वल्मीके कुलीरवसतौ तथा ।
नलिन्या दीर्घिकाया च मृत्स्नामेकोनविंशति । एते पञ्च अर्धश्लोका. श्रीग्रन्थे अधिकतया दृश्यन्ते. 1. श्री. वा इष्टेति. 2. म. दधिक्राविण्णेति. 3. श्री. तु. 4. श्री. मन्त्रेण मार्जनाञ्चाभिषेचयेत्. 5. श्री. नवभाराणा.

उपधानानि चित्राणि शयनाङ्गानि कल्पयेत् । कस्तूरिकादिगन्धैश्च सुगन्धैरधिवासिताम् ॥ ७६ ॥
सुगन्धपुष्पास्तरणां नानालङ्कार[1]शोभिताम् । शय्यां कृत्वैवमेतस्यां देवमानीय शाययेत् ॥ ७७ ॥
सूक्तानि "पौरुषादीनि" प्रशस्तानि यथातथम् । अधीयानैर्विप्रवर्यैः सार्धमन्यैश्च मङ्गलैः ॥ ७८ ॥
तूर्यशब्दैर्यथापूर्वं मूर्तिपाश्च गुरुः स्वयम् । "उत्तिष्ठे"त्यादिमन्त्रेण समुत्थाप्य च कौतुकम् ॥ ७९ ॥
शय्यावेदिभुवं निन्युर्बहिःकुण्डं यथातथम् । प्रादक्षिण्येन शनकैः शय्यायां शाययेद्गुरुः ॥ ८० ॥
[2]"इदं विष्णुरि"ति प्रोच्य "विश्वतश्चक्षु"रित्यपि । प्राक्छिरो दक्षिणावक्त्रं यद्वा स्यान्मन्दिराननम् ॥
शिरो वा दक्षिणाशायामित्थं शयनकल्पनम् । कम्बलेनाऽथवा वस्त्रैः छादयेत्प्रतिमामपि ॥ ८२ ॥
"युवा सुवासा" इत्यादि ब्रुवन् विष्वक्‌ चतुर्मुख । अश्वत्थतोरणं प्राच्यां यजेत तदनन्तरम् ॥८३॥
[3]ऋग्रूपमिन्द्रदैवत्यं सुशोभनसमाह्वयम् । याम्ये त्वौदुम्बरं [4]स्यात्तु याजुषं यमदैवतम् ॥ ८४ ॥
नाम्ना सुभद्रं वारुण्यां न्यग्रोधं सोमवारुणम् । सुबन्धसंज्ञं कौबेर्यां प्लक्षं नाम्ना सुहोत्रकम् ॥ ८५ ॥
सोमदैवत्यमुद्दिष्टं यजेताथर्वणं गुरुः । ध्वजद्वयं द्वारपार्श्वस्थितं रत्नसमाह्वयम् ॥ ८६ ॥
[5]दौवारिकान् महाभागान् यजेत कमलासन । कुमुदः कुमुदाक्षश्च द्वारपालौ पुरः स्मृतौ ॥ ८७ ॥
दक्षिणस्यां ध्वजौ पीतौ पुण्डरीकाक्षवामनौ । द्वाःस्थौ प्रतीच्यां नीलाभौ ध्वजौ दौवारिकौ पुनः ॥८८॥
शङ्कुकर्णः सर्वनेत्रः तथोदक्‌ पाण्डरौ ध्वजौ । सुमुखं सुप्रतिष्ठं च द्वास्थौ ध्यायेद्ध्वजांशुके ॥८९॥
अष्टौ कुम्भांश्च पूर्वादिद्वारेषु विनिवेशयेत् । द्वौ द्वौ [6]सवस्त्रान् साश्वत्थपल्लवान् सपिधानकान् ॥ ९० ॥
धान्यराशिषु मन्त्रेण "इदं विष्णुरि"ति स्वयम् । नामानि तेषां क्रमशः कथ्यन्ते तानि संशृणु ॥९१॥
पूर्णश्च पुष्करश्चैव स्यातामानन्दनन्दनौ । वीरसेनः सुषेणश्च सम्भवः प्रभवस्तथा ॥ ९२ ॥
रत्नान चाष्टौ क्रमशः कुम्भेषु विनिवेशयेत् । पद्मरागं प्रवालं च वज्रं वैडूर्यमेव च ॥ ९३ ॥
पुष्यरागं तथा नीलमणिं मरकतं तथा । मुक्तास्फटिकमुद्दिष्टं [7]सर्वं मन्त्रेण निक्षिपेत् ॥ ९४ ॥
[8]तोरणध्वजकुम्भादीन् पूर्वोक्तान् पृथगर्चयेत् । तोरणानि च वासोभिः नवैराच्छादयेत्पृथक् ॥ ९५ ॥
पूर्वादौ वलजे विप्रान् बह्वृचाध्वर्युसामगान् । अथर्वाङ्गिरसाभिज्ञान् अपरान्वेदपारगान् ॥ ९६ ॥
तत्तद्वेदानधीयानान् [9]तत्तद्दिक्षु निवेशयेत् । आचार्यो हृदये देवमच्युतं सुसमाहितः ॥ ९७ ॥
ध्यायेत्तूर्यादिघोषैश्च परितः परिघोषयेत् । मूर्तिकुम्भांश्च परितः सपिधानान् सवस्त्रकान् ॥ ९८ ॥

---

1. श्री. सयता. 2. श्री. यद्वैष्णवमिति. 3. श्री. ऋग्वेद. 4 श्री. आद्य दैवत यजुरास्थितम्.
5. श्री. दौवारिकात्मना ध्यायन्. 6. म वस्त्रान् च. 7. श्री. तोरणध्वजकुभकान्.
8. श्री. पूर्वोक्तान् पुण्यगन्धाद्यैः पृथगभ्यर्चयेद् गुरुः । एष अर्धश्लोक. तत्स्थाने दृश्यते.
9. श्री. दिशाया विनिवेशयेत्.

अष्टौ प्रागादिकाष्ठासु धान्यराशिषु पूरितान् । अद्भिः शुद्धाभिरश्वत्थ [1]पत्रयुक्तान् सरत्नकान् ।।९९।।
तेषु शङ्खं च चक्रं च गदां पद्मं ध्वजं तथा । श्रीवत्सं गरुडं कूर्मं जाम्बूनदमयं क्षिपेत् ।। १०० ।।
मध्ये मध्ये च कुम्भानां श्रीवत्साद्यष्टमङ्गलम् । पालिकाः साङ्कुरा वेदिं परितः स्थापयेत्ततः ।। १०१ ।।
विष्ण्वादिमूर्तिरष्टौ च कुम्भेष्वावाह्य पूजयेत् । महाकुम्भस्थदेवस्य निक्षिपेत्पश्चिमोत्तरे ।। १०२ ।।
धान्यराशौ सापिधानं द्रोणं गन्धाम्बुपूरितम् । हेमरत्नादिकं युग्मवस्त्रेणाच्छादितं पुनः ।। १०३ ।।
सकूर्चपिप्पलदलां पार्श्वे तस्य गलन्तिकाम् । ससूत्रवस्त्रसंछन्नां कूर्चयुक्तां निवेशयेत् ।। १०४ ।।
सापिधानां शिवाम्भोभिः पूरितां निगमादिना । पायमान्नेन च तथा ब्राह्मणान् भगवन्मयान् ।।१०५।।
भोजयेद् द्वादशमितानधिकान् वा यथावसु । तिलान् वासांसि सूक्ष्माणि सुवर्णं गाश्च दक्षिणाः ।।
तेभ्यो दद्याद्भुक्तवद्भ्यो यजमानः समाहितः । आरभेयुस्ततो होमं ऋत्विजो गुर्वनुज्ञया ।।१०७।।
अश्वत्थाच्च शमीगर्भादरणीमाहरेत्ततः । मथित्वाग्निमुपादाय सूर्यकान्ताश्मनोऽपि वा ।। १०८ ।।
लौकिकं वाग्नि[2]मादाय द्वादशाक्षरविद्यया । प्रोक्ष्य ध्यात्वा च दिव्याग्निं प्रत्यक्कुण्डे समिन्धयेत् ।।
पर्यग्निकरणं कुर्यात्कुण्डानां दर्भमुष्टिभिः । कुण्डेष्वन्येषु दहनं प्रत्यक्कुण्डात्समुद्धरेत् ।। ११० ।।
अग्रे संस्कृत्य दहनमन्यकुण्डे [3]विहाय च । अग्निमध्यस्थपद्मस्थं तं तं देवमनु[4]स्मरेत् ।। १११ ।।
वासुदेवं चतुष्कोणे चापे सङ्कर्षणं तथा । वृत्ते प्रद्युम्ननामानमनिरुद्धं त्रिकोणके ।। ११२ ।।
इतोऽधिकेषु कुण्डेषु कल्पितेषु यथातथम् । युग्मेष्वयुग्मेषु तथा देवताः पूर्वमीरिताः ।। ११३ ।।
प्रागादिषु च कुण्डेषु क्रमेण समिधः स्मृताः । पालाशदूर्वखदिरबिल्वौदुम्बरभूरुहाम् ।। ११४ ।।
आग्नेयादिविदिक्षु स्युः पिप्पलप्लक्षसंभवाः । न्यग्रोधप्रभवाश्चैव काश्मर्यप्रभवास्तथा ।। ११५ ।।
पालाशसमिधोऽन्यत्र भूयसां परिकल्पने । उक्ताभावे तु सर्वत्र पालाशसमिधो मताः ।। ११६ ।।
चतस्रो धेनवः स्थाप्याः दक्षिणद्वार्युदङ्मुखाः । गङ्गा सरस्वती गोदा यमुनारूपधारिणी ।।११७।।
दुग्धैस्तदीयैः श्रपणं चरूणामाहुतीस्तथा । श्रपयेत्पयसा पूर्वं शालितण्डुलमाढकम् ।। ११८ ।।
कृसरैर्दाक्षिणात्याग्नौ पाश्चात्ये गुडमिश्रितम् । उदीच्याग्नौ हरिद्रान्नं दुग्धान्नमितराग्निषु ।। ११९ ।।
समिद्भिराज्यैश्चरुभिर्बीजैर्होमः क्रमात्स्मृतः । प्रत्येकं शतमष्टौ च होमः स्यात्समिदादिभिः ।।१२०।।
तिलशालियवावेणुहोमबीजान्यनुक्रमात् । तिलैरितरकुण्डेषु तैर्वा सर्वत्र पद्मज ।। १२१ ।।
होतारश्च समासीनाः सोत्तरीयाः स्वलंकृताः । प्राङ्मुखा जुहुयुः सर्वे गुर्वादिष्टेन वर्त्मना ।।१२२।।
तेषु जुह्वत्सु ऋत्विक्षु [5]यजेत गुरुरात्मवान् । महाकुम्भे परंज्योति[6]श्चैतन्य घनमक्षरम् ।। १२३ ।।

1. श्री. पर्ण 2. श्री. मानीय. 3 श्री विहार्य 4. श्री स्मरन् 5 श्री कुण्डेषु.
6. श्री. श्चैतन्य.

सर्वांगं मूलमन्त्रेण समावाह्याच्युतं हरिम् । सकलीकृत्य चार्घ्याद्यैरर्चयेन्निगमादिना ॥ १२४ ॥
सुदर्शनं च करके सहस्रादित्यसन्निभम् । सहस्रारं सहस्रेण ज्वालाभिरभिवेष्टितम् ॥ १२५ ॥
आवाह्य स्वेन मन्त्रेण पूजयेत्कमलासन । स्वस्तिकासनमाबध्य शयानां प्रतिमामनु ॥ १२६ ॥
आसीत देशिकः सृष्टिसंहारक्रमवित्तमः । अर्चां च तां भूतमयीं संहारक्रममास्थितः ॥ १२७ ॥
पुनः सृष्टिक्रमेणैव सृजेत्तद्ध्यानमास्थितः । प्राचीनकुण्डे जुहुयात्तत्वानि कपिलाघृतैः ॥ १२८ ॥
प्रत्येकमष्टोत्तरशतं तत्वेष्वाहुतयः स्मृताः । अष्टोत्तरा विंशतिर्वा यद्वाष्टौ शक्त्यपेक्षया ॥ १२९ ॥
जीवादिकस्तत्वहोमः स्वाहान्तैः स्वस्य नामभिः । मकारं स्फटिकाभासं जीवं व्यापकमादितः ॥ १३० ॥
आहुत्यन्ते प्रतिकृतौ विन्यसेत्प्रणवं ततः । जीवोपाधिं भकारं तु सितं न्यस्येद्यथापुरम् ॥ १३१ ॥
बकारं स्फटिकाभासं बुद्धितत्वमनन्तरम् । अहङ्कारं पाटलाभं फकारं हृदि विन्यसेत् ॥ १३२ ॥
मनः सितासितनिभं पकारं हृदये तथा । नकारं शब्दतन्मात्रं श्रोत्रे शुक्लनिभं तथा ॥ १३३ ॥
धकारं लोहितं स्पर्शतन्मात्रं प्रतिमात्वचि ॥ १३४ ॥
* तकारं गन्धतन्मात्रं नासिकायां तथासितम् । णकारं पाटलनिभं श्रोत्रात्मानं च कर्णयोः ॥ १३५ ॥
ढकारं हेमतुल्याभं त्वगात्मानं तथा त्वचि । डकारं नेत्रयोः कृष्णं नेत्रात्मानमनन्तरम् ॥ १३६ ॥
गौरं ठकारं जिह्वाया जिह्वात्मानं चतुर्मुख ॥ १३७ ॥
टकारमसितं घ्राणरूपं घ्राणेन्द्रियं तथा । सितं ञकारं वाग्रूपं वागाधारे निवेशयेत् ॥ १३८ ॥
रक्तं झकारं करयोः [1]कर्मात्मानं निवेशयेत् । रक्तं जकारं पदयोः पदात्मानं निवेशयेत् ॥ १३९ ॥
छकारस्य च रक्तस्य न्यासः पायौ तदात्मनः । चकारं मेहने हेमवर्णं मोहनरूपिणम् ॥ १४० ॥
ङकारं पृथिवीतत्वं पीताभं चतुरश्रकम् । पादे च जानुपर्यन्ते हुत्वान्ते विनिवेशयेत् ॥ १४१ ॥
घकारमर्धशीतांशु [2]तुल्याकारं जलात्मकम् । स्फटिकाभं तदूर्ध्वे तु गुह्यान्ते विनिवेशयेत् ॥ १४२ ॥
गकारं लोहितं कोणैस्त्रिभिर्युक्तमुषर्बुधम् । गुह्यात्प्रभृति नाभ्यन्तं विन्यसेद्देशिकोत्तमः ॥ १४३ ॥
खकारं वेदिकाकारं धूम्राभं श्वसनात्मकम् । नाभेरुपरि घोणान्तं हुत्वान्ते विनिवेशयेत् ॥ १४४ ॥
निराकारं ककारं च नभोञ्जनशिला[3]मयम् । नासिकोपरिमूर्धान्तमाहुत्यन्ते निवेशयेत् ॥ १४५ ॥
तत्वहोमं च तन्न्यासं कृत्वैवं तदनन्तरम् । प्राणादिदशवायूनां न्यसनं स्यादिडादिषु ॥ १४६ ॥

---

* दकार रूपतन्मात्र दृशोर्ज्योतिर्मय तथा । थकार रसतन्मात्रं पाण्डराभ च तालुनि ॥
एतौ द्वौ अर्धश्लोकौ अत्र पठितव्यौ. 1. श्री. करात्मान चतुर्मुख. 2. श्री. साम्याकारं.
3. श्री. निभम्

†ब्रह्मादिपरिवारेषु देवीषु कमलादिषु । तत्त्वन्यासो यथोक्तेन मार्गेण स्याच्चतुर्मुख ॥ १४७ ॥
सुदर्शनाद्यायुधानि वनमालादिकान्यपि । न्यसेद्यथायथं मन्त्रैः प्रतिकार्येषु शार्ङ्गिणः ॥ १४८ ॥
न जङ्गमेषु बिम्बेषु षोडशन्यासमाचरेत् । प्रणवस्य व्याहृतीनामकाराद्यक्षरस्य च ॥ १४९ ॥
ऋक्षाणामपि कालस्य वासराद्ययनस्य च । ब्राह्मणादेश्च वर्णस्य तोयस्य निगमस्य च ॥ १५० ॥
देवतानां विराजश्च ऋतूनां च गुणस्य च । सत्वादेश्चैव मूर्तीनां शक्तीनां षड्गुणस्य च ॥ १५१ ॥
लोकानां न्यसनं कुर्यात् षोडशानामिति क्रमात् । अकाराद्यात्मकं हुत्वा प्रणव तदनन्तरम् ॥ १५२ ॥
अकारं हृदये विष्णोः न्यसेद्भागे तु दक्षिणे । उकारं ब्रह्मणो रूपं वामेऽन्त्यं शङ्करात्मकम् ॥ १५३ ॥
होमेन तर्पयित्वान्ते प्रणवं विनिवेशयेत् । व्याहृतीनां च तिसृणां पादे हृदि शिरस्यपि ॥ १५४ ॥
न्यासं कुर्यादकारादिस्वरान् न्यस्येत्क्रमाद्गुरुः । रसनायां मुखे दृष्टयोः श्रोत्रयोर्नासिकापुटे ॥१५५॥
दन्तपङ्क्तौ तथा चोष्ठद्वये चास्ये ललाटके । तालुन्यथ यकारादेर्न्यासं कुर्यादतन्द्रितः ॥ १५६ ॥
त्वचि दृष्टयोर्नासिकायां दशनाग्रे तथा श्रुतौ । उदरे च तथा कटयां हृदये नाभिमण्डले ॥ १५७ ॥
मेहने तर्पयित्वान्ते होमेन न्यास इष्यते । पञ्चवारान् ककारादीन् अङ्गुलीषु च जङ्घयोः ॥ १५८ ॥
भुजयोर्न्यसनं कुर्यादक्षरन्यास [1]ईदृशः । सुषुम्ना पिङ्गला पूषा हस्तिजिह्वा यशस्विनी ॥ १५९ ॥
अलम्बुसैव गान्धारी काशिनी च कुहूरपि । प्राणापानसमानाश्च व्यानोदानौ च वायवः ॥ १६० ॥
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः । अथवा मातृकान्यासमेवमेव समाचरेत् ॥ १६१ ॥
अकारं तालुनि न्यस्य मुखे चाकारमेव च । इ ई लोचनयोर्न्यस्य उ ऊ श्रवणयोस्तथा ॥ १६२ ॥
ए ऐ दशनपङ्क्तौ च ओ औ ओष्ठगतौ स्मरेत् । अमित्येव ललाटे तु अः कारं रसने तथा ॥१६३॥
यकारं त्वग्गतं न्यस्य रेफं चक्षुषि विन्यसेत् । लकारं नासिकायां तु वकारं दशनाग्रतः ॥१६४॥
श्रोत्रे शकारं विन्यस्य षकारमुदरे तथा । सकारं कटिदेशे तु हकारं हृदये तथा ॥ १६५ ॥
क्षकारं नाभिदेशे तु विन्यसेद्द्विजसत्तमः । पवर्गो बाहुरेकस्तु तवर्गस्तु द्वितीयकः ॥ १६६ ॥
टवर्गश्च चवर्गश्च जङ्घाद्वयमुदाहृतम् । कवर्गोऽङ्गुलयः सर्वा विज्ञातव्या द्विजोत्तम ॥ १६७ ॥

---

† अत्र श्लोकद्वयमधिकं लिखितं कचित्कोशे दृश्यते तद्यथा —

सुषुम्ना पिङ्गला पूषा हस्तिजिह्वा यशस्विनी । आलम्बनेडा गान्धारी कौशिक्यपि कुहूरपि ॥

प्राणोऽपानः समानश्च व्यानोदानधनञ्जयाः । कृकरो देवदत्तोऽथ नागकूर्मौ दशानिलाः ॥

1. म. ईरितम्.

ऋक्षाणि रोहिण्यादीनि न्यसेदेषु यथाक्रमम् । हृदये मूर्ध्नि [1]केशेषु ललाटे वदने तथा ॥ १६८ ॥
नासिकायां च दन्तेषु श्रोत्रे बाह्वोः करद्वये । स्तनयोरुदरे कट्यां मेहने वृषणे तथा ॥ १६९ ॥
पायावूर्वोर्जङ्घयोश्च पादयोरग्रपादयोः । सूर्यादयो ग्रहाश्चान्ये तथा सप्तर्षयो ध्रुवः ॥ १७० ॥
एताश्च व्योमनि यथा तथा देवे निवेशयेत् । त्रुट्यादिकल्पपर्यन्ताः कालभेदाश्चतुर्मुख ॥ १७१ ॥
स्थूलसूक्ष्मा यथायोगं न्यसनीयाः सुमेधसा । मुखबाहूरुपादेषु देवस्य ब्राह्मणादयः ॥ १७२ ॥
न्यसनीयाः सरित्कूपवापीतोयादिनिर्झराः । निवेशनीया देवस्य देहे वेदा ऋगादयः ॥ १७३ ॥
अङ्गानि च तदर्थानि शास्त्राणि विविधानि च । दैवतानि तथान्यानि चतुर्मुख मुखानि च ॥१७४॥
ऋषीनपि तथा मुख्यानन्यच्चापि विभूतिमत् । देवे निवेशयेत्सर्वं त्रैलोक्यं सचराचरम् ॥ १७५ ॥
स्वर्लोकं शिरसि न्यस्येन्नेत्रयोश्चन्द्रभास्करौ । नासिकायां तथा वायुं दिशो बाहुषु हृद्गतान् ॥ १७६ ॥
ऋषींश्च व्योम च वपुष्यन्तरात्मनि देवताः । मेघाश्च केशा विज्ञेयाः नक्षत्राणि च भूषणम् ॥ १७७ ॥
मुखमग्निस्तथा वाणी शुद्धवर्णा सरस्वती । वैराजन्यास इत्येषः कथितः कमलासन ॥ १७८ ॥
अश्वमेधादयः सर्वे क्रतवश्च यथातथम् । सर्वाङ्गेषु विधातव्यास्तस्मिन् क्रतुमयेऽच्युते ॥ १७९ ॥
सत्त्वं रजस्तमश्चेति न्यसनीयं गुणत्रयम् । मत्स्यादिदशमूर्तीनां न्यसनं तदनन्तरम् ॥ १८० ॥
देवीनां च श्रियादीनां न्यासः कार्यो यथाक्रमम् । विज्ञानादिगुणाः षट् च विनिवेश्याः समाधिना ॥
लोकाश्चतुर्दश तथा पादादिषु यथाक्रमम् । मूर्धपर्यन्तमङ्गेषु देवदेहे यथाविधि ॥ १८२ ॥
न्यसनीयाश्चतुर्वक्त्र गुरुणा शास्त्रचक्षुषा । कृत्वैवं षोडशन्यासं शान्तिहोमं समाचरेत् ॥ १८३ ॥
"मधुना भूरिति" प्राच्ये कुण्डे हुत्वा शताहुतीः । संपातेन स्पृशेत्पादौ "देवस्य भुव" इत्यतः ॥
दक्षिणाग्नौ तथा हुत्वा पयसा जठरं स्पृशेत् । दध्ना तु पश्चिमे कुण्डे हुत्वा स्वरिति संस्पृशेत् ॥
वक्त्रं समस्तेनाज्येन हुत्वोदीचीनपावके । शिरः स्पृशेच्च संपातैरङ्गं च सकलं हरेः ॥ १८६ ॥
गुडेनाज्येन मधुना कुण्डे तस्मिन् गुरुः स्वयम् । हुत्वा च विष्णुगायत्र्या संपातेन मुखं स्पृशेत् ॥
पालाशखादिराश्वत्थबिल्वशाखाभिरम्बुभिः । सिञ्चेयुर्मूर्तिपाः सम्यग्वेदीदिक्कलशस्थितैः ॥ १८८ ॥
अब्लिङ्गैः पावनैर्मन्त्रैः वैतस्या शाखया गुरुः । वेदिका कोणकुम्भस्थैः सिञ्चेद् [2]गायत्रिया तथा ॥
लोहजे दारुजे शैले विधिरेषः प्रकीर्तितः । बहुबेरे तु सदने संहारोत्पादनादिकम् ॥ १९० ॥
कुर्यादन्तः प्रविश्यैवं शान्तिहोमावसानिकम् । श्रियादिपरिवारेषु संहारोत्पादनादिकम् ॥ १९१ ॥

1 म. देशेषु. 2. श्री. गायत्रिविद्यया.

एवमेव भवेद्ब्रह्मन् ब्रह्मादिष्वपि तत्तथा । [1]सञ्जीवकरणंचैव क्षेत्रज्ञन्यसनं तथा ॥ १९२ ॥
कृत्वाघ्यार्घ्युपचारेण पूजयेत्पुरुषोत्तमम् । ततश्चतुर्विधानं च प्रणवेन निवेदयेत् ॥ १९३ ॥
ब्रह्मादीनां श्रियादीनां देवीनां चैतदिष्यते । आसीने च शयाने च भोगिभोगपरिष्कृते ॥ १९४ ॥
[2]अनन्तमसितं नागमुक्तेन विधिना गुरुः । कल्पयेत्कौतुकं चापि बध्नीयान्मूलकौतुके ॥ १९५ ॥
कम्बलाद्यैरभिनवैः प्रतिमां छादयेत्ततः । अस्त्रमन्त्रं च विन्यस्य द्वारि तत्र बलिं क्षिपेत् ॥ १९६ ॥
इन्द्रादिपरिवारेषु स्थाप्येष्वात्मीयदिक्षु च । प्रत्यावरणभूभागे स्थाने स्थाने यथाक्रमम् ॥ १९७ ॥
समिद्भिर्जुहुयादग्नौ कुण्डे वा स्थण्डिलेऽपि वा । पलाशखदिराश्वत्थप्लक्षन्यग्रोथबिल्वजाः ॥ १९८ ॥
औदुम्बर्यश्च काश्मर्यः समिधः स्युर्यथाक्रमम् । समिद्भिराज्यैश्चरुभिः अष्टोत्तरशताहुतीः ॥ १९९ ॥
कुर्याद्यथाक्रमं मन्त्रैः ब्राह्मणाः प्रयतव्रताः । त्रातारमित्यथाश्चाग्ने यदुलूक इति क्रमात् ॥ २०० ॥
[3]आसनस्तेति च तथा इमं मेत्यादिवारुणैः । [4]अं नो नियद्भिरिति च मन्त्रेष्वन्ते पयाँसि च ॥
तमीशानमिति तैस्तैर्मन्त्रैरिन्द्रादिदेवताः । जुहुयुः [5]परिवारार्थं ब्राह्मणाँश्चापि तोषयेत् ॥ २०२ ॥
पिण्डिकामधिवास्याथ वेष्टयेन्नववाससा । निक्षिप्य भाजने लोहान् सरत्नान् धातुबीजकान् ॥ २०३ ॥
भाजनं वाससा वेष्ट्य धान्यराशिषु निक्षिपेत् । बिम्बानि गरुडादीनां स्नापयेन्नववाससा ॥ २०४ ॥
आच्छादयेद्धान्यराशौ शाययेच्च यथापुरम् । दिग्देवतानां पीठानि बल्यर्थान्यधिवासयेत् ॥ २०५ ॥
शयानां प्रतिमां वेद्यां उत्थाप्याधिनिकेतनम् । अर्चयेत्पायसाद्यन्नं सन्निवेद्य चतुर्विधम् ॥ २०६ ॥
निवेद्य च महाकुम्भे दिक्षु दद्याद्बलिं ततः । पललं रजनीचूर्णं सलाजं दधि सक्तुकम् ॥ २०७ ॥
बल्यन्नमेतैः संयोज्य बलिगाथा इमाः पठेत् । आद्यश्च कर्मजाश्चैव ये भूताः प्राग्दिशि स्थिताः ॥
प्रसन्नाः परितुष्टास्ते गृह्णन्तु बलिकांक्षिणः । वृक्षेषु पर्वताग्रेषु ये विदिक्षु च संस्थिताः ॥ २०९ ॥
भूमौ व्योम्नि स्थिता ये च बलिं गृह्णन्तु तेऽपि च । वैनायकाः क्षेत्रपालाः ये चान्ये बलिकांक्षिणः ॥
पूषाद्याः पार्षदाश्चैव प्रतिगृह्णन्त्विमं बलिम् । चण्डाद्याः कुमुदाद्याश्च ये भूताः सर्वदिक्स्थिताः ॥ २११ ॥
आगच्छन्तु पदे सर्वे गृह्णन्तु त इमे बलिम् । स्वप्नाधिपतिमन्त्रेण हुत्वा चाष्टोत्तरं शतम् ॥ २१२ ॥
हेमसूत्रं प्रतिसरं प्रतिष्ठाविधिसिद्धये । पुण्याहपूर्वं बध्नीयाद्धस्ते देवस्य दक्षिणे ॥ २१३ ॥
बालबिम्बं तु संपूज्य तच्छक्तिमपि देशिकः । समावाह्य महाकुम्भे धान्यराशिषु निक्षिपेत् ॥ २१४ ॥
पूर्णाहुतिं च जुहुयुः कुण्डे कुण्डे च मूर्तिपाः । पद्मोत्पलवदामोदो धूमो हुतभुजो यदि ॥ २१५ ॥

---

1 म. सजीव 2 म. अनन्तमपि तन्नागं. 3. म. असून पंचेति श्री. असूनवेति. 4. श्री. अनूनवद्भि. 5 श्री. परिवारेषु.

रक्तश्वेतस्तथा पीतो धूमः स्याच्छुभदो भवेत्। ज्वालाश्च दक्षिणावर्ताः शुभं शंसन्ति निश्चितम् ॥ २१६
तूर्यमङ्गलसन्नादैः ब्रह्मघोषैश्च [1] घोषितैः। स्वापयेत्तां निशां सर्वां यजमानो गुरुश्च तौ ॥ २१७॥
स्वप्नार्थं दर्भशय्यायां [2] शयीरन् मूर्तिपाश्च ते।

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मसंहितायां क्रियापादे [3] शयनाधिवासादिविधानादयो नाम सप्तविंशोऽध्यायः ॥

---

# अष्टाविंशोऽध्यायः ॥

## प्रतिष्ठाविधिः

श्रीभगवान्—

ततः प्रभाते विमले दृष्टे च रविमण्डले। पुण्ये मुहूर्ते पुण्यर्क्षे पुण्यवारे तथा [4] तिथौ ॥ १ ॥
कल्याणदर्शने रात्रावारभेताऽविचारयन्। प्रतिष्ठां देवदेवस्य दुःस्वप्ने शान्तिमाचरेत् ॥ २ ॥
एकबेरे वास्तुहोमं कुर्याद् द्वारस्य दक्षिणे। पार्श्वे च स्थण्डिलं कृत्वा प्रविशेद् गर्भमन्दिरम् ॥ ३ ॥
तन्मध्ये चतुरश्रां वा वृत्तां वा तच्छिलां क्षिपेत्। हस्तमात्रायतां शुद्धां तावद्विस्तारसंयुताम् ॥ ४ ॥
चतुरावरणां निम्नां गायत्र्या विष्णुपूर्वया। तयैव वास्तुहोमाग्नौ चरुसर्पिःसमुच्छ्रितैः ॥ ५ ॥
जुहुयाद्रत्नविन्याससिध्यर्थं देशिकोत्तमः। प्रथमावरणे बीजानष्टौ गर्तेषु निक्षिपेत् ॥ ६ ॥
यवाश्च व्रीहयश्चैव निष्पावाश्च प्रियङ्गवः। तिलाश्च माषाश्च तथा नीवाराः शालयस्तथा ॥ ७ ॥
वज्रादीनि च रत्नानि द्वितीयावरणे तथा। वज्रं च मौक्तिकं चैव वैडूर्यं जलजं तथा ॥ ८ ॥
स्फटिकं [5] पुष्यकं चैव चन्द्रकान्तं तथा परम्। इन्द्रनील च पूर्वादिष्वाशासु विनिवेशयेत् ॥ ९ ॥
धातून् तृतीयावरणे तथैव विनिवेशयेत्। मनःशिलां हरीतालमञ्जनं तदनन्तरम् ॥ १० ॥
श्यामं च सीसकं चैव सौराष्ट्रं रोचनं तथा। गैरिकं चाष्टकं लोहान् चतुर्थावरणे पुनः ॥ ११ ॥
[6] गर्तेषु निक्षिपेत्स्वर्णं रूप्यं ताम्रं तथैव च। अयश्च त्रपुकं चैव कूर्मं कनकनिर्मितम् ॥ १२ ॥
शङ्खं चक्रं च सौवर्णं लोहन्यासोऽयमीरितः। शालिबीजं पारदं च ब्रह्मरागं च काञ्चनम् ॥ १३ ॥
मध्ये न्यस्येद्गर्तभागे ततः स्त्रीशिलया दृढम्। श्रीसूक्तेन पिधातव्यं सुधया दार्ढ्यमाचरेत् ॥ १४ ॥

---

1. श्री· मंगलैः. 2 म· शयेयुः· 3. म. शयनाधिवासादयो. 4. म. विधौ. 5 श्री· पुष्परागं च.
6 श्री· निम्नेषु.

पुण्याहं वाचयेत्पश्चात् वैष्णवैर्मन्त्रवित्तमैः । स्त्रीशिलापद्ममध्ये तु प्रणवन्यसनं भवेत् ॥ १५ ॥
कर्णिकायां स्वरन्यासं व्यञ्जनन्यसनं [1]दले । दलेषु शक्तयश्चाष्टौ नवमी कर्णिका [2]भुवि ॥ १६ ॥

—विमलादिशक्तयः—

विमलोत्कर्षिणी ज्ञाना क्रिया योगेति शक्तयः । प्रह्वी सत्या तथेशानाऽनुग्रहा नवमी स्मृता । १७॥

—पिण्डिकापूजनम् ॥—

पिण्डकां पूजयेत्पश्चाद् गन्धपुष्पादिभिः क्रमात् । अहतैश्चैव वासोभिर्लक्ष्मीरूपां च पिण्डिकाम् । १८
प्रच्छाद्य द्वारि चास्त्रस्य न्यासं कृत्वा बहिर्गुरुः । निर्गत्य शय्यावेद्यर्थं पूजयेद्रत्नवारिणा ॥ १९ ॥
ध्वजतोरणकुम्भस्था देवता विसृजेत्ततः । आरोप्य चाग्निं हृदये महाकुम्भं समुद्धरेत् ॥ २० ॥
मूर्तिकुम्भाँस्तथा चाष्टौ मङ्गलान्यस्त्र कर्करीम् । गृहीत्वा मूर्तिपाः सर्वे गच्छेयुर्मन्दिरं प्रति ॥ २१ ॥
गलन्तीनिर्गलद्वारि धारया सन्ततोत्थया । अग्रतः सेचयेन्मार्गं ब्राह्मणानामनुज्ञया ॥ २२ ॥
देवमुत्थाप्य हस्त्यादौ प्रादक्षिण्येन मन्दिरम् । आचार्यप्रमुखाः सर्वे विशेयुर्मूर्तिपास्तथा ॥ २३ ॥
छत्रध्वजपताकाद्यैर्मङ्गलैरखिलैः सह । तूर्यवादित्रनिर्घोषैर्ब्रह्मघोषैश्च घोषितैः ॥ २४ ॥
ब्राह्मणैश्चाप्यनूचानैरधीयानैश्च मूर्तिपैः । सार्धं गुरुः स्पृशन्न्यासं प्रविशेन्मूलमन्दिरम् ॥ २५ ॥
अर्घ्यपाद्यादिभिर्देवमर्चयेद् द्वारि देशिक । अन्त प्रवेशयेद्देवं [3]पीठिकां च प्रदक्षिणम् ॥ २६ ॥
गत्वा मुहूर्ते संप्राप्ते स्थापये[4]द्विष्णुमव्ययम् । "प्रतिष्ठासीति" वै साम्ना देशिको ब्राह्मणैः सह ॥
[5]"आत्वाहार्षमि"त्येतत्सूक्तं च सह मूर्तिपाः । "ध्रुवा द्यौरि"ति मन्त्रेण पठेयुर्गुर्वनुज्ञया ॥ २८ ॥
आचार्यः पुरतः स्थित्वा सर्वेण स्थापयेद् हरिम् । पीठमध्यगते गर्ते बिम्बशङ्कुं निवेशयेत् ॥२९॥
ऊर्ध्वलम्बितसूत्रेण पश्येच्च समतां स्थितेः । पीठिकानालरन्ध्रं च अष्टबन्धेन पूरयेत् ॥ ३० ॥

—अष्टबन्धनद्रव्याणि—

लाक्षा सर्जरसं चैव गुग्गुलं च गुलं तथा । सर्वेषामर्धतस्तैलं पाचयेन्मृदुवह्निना ॥ ३१ ॥
घनचूर्णं मधूच्छिष्टं कुरुविन्दं च गैरिकम् । एकैकं च समांशेन ग्राह्यं सर्जरसं तथा ॥ ३२ ॥

---

1, म. भवेत्. 2, म. मपि, 3. श्री. पिण्डिकां. 4. श्री. देव. 5, म. अहृत्वा,

तैलेन पाचितं सार्धमष्टबन्धनमिष्यते । स्थापयित्वा दृढं तेन पुण्याहमपि वाचयेत् ॥ ३३ ॥

—आवाहनम्—

आवाहयेत्ततो देवं तमसः परमव्ययम् । आनन्दं सर्वगं नित्यं व्योमातीतं परात्परम् ॥ ३४ ॥
मरीचिचक्रमध्यस्थं वासुदेवमजं विभुम् । मूलमन्त्रेण विश्वेशमावाह्य गुरुरात्मवान् ॥ ३५ ॥
ब्रह्मरन्ध्रेण बिम्बान्तः प्रविष्टं परिचिन्तयेत् । कुम्भस्थं परमात्मानं प्रतिमायां निवेशयेत् ॥ ३६ ॥
मन्त्रन्यासं ततः कुर्यान्मूलमन्त्रेण देशिकः । याचेत देवं सान्निध्यं परिवारान् प्रकल्पयेत् ॥ ३७ ॥
समाराध्य ततो देवं पायसान्नं निवेदयेत् ।

—त्र्यहं कवाटबन्धनकारणम्—

प्रच्छाद्य नूतनैर्वस्त्रैः प्रतिमां कम्बलेन वा ॥ ३८ ॥
त्रियहं बन्धयेद् द्वारं कवाटेन सुसंस्कृतम् । देवर्षिपितरः सिद्धाः तथान्ये देवयोनयः ॥ ३९ ॥
अर्चन्ति देवं त्रियहं त्रिरात्रान्ते तु मानवाः । ब्राह्मणांस्तोषयेद्वित्तैः भोजनैश्च गवादिभिः ॥ ४० ॥
चतुर्थेऽहनि संप्राप्ते स्नपनं प्रातरिष्यते । तद्दिने ध्वजमुत्थाप्य प्रारभेत महोत्सवम् ॥ ४१ ॥
एकबेरे विधिरयं कथितः कमलासन ।

—बहुबेरविधिः—

बहुबेरविधानं चेत् कर्मार्घ्यर्चां समुद्धरेत् ॥ ४२ ॥
महाकुम्भं च तत्काले मङ्गलान्यष्ट देशिकः । ऋत्विग्भिः सह विद्वद्भिर्भक्तैर्भागवतैरपि ॥ ४३ ॥
उद्धृत्य चास्त्रकरकमग्रे गच्छेद् गुरुः स्वयम् । अनुधारापथेनैव देवागारं प्रवेशयेत् ॥ ४४ ॥
प्रतिमाचार्ययोः कश्चिन्न गच्छेदन्तरा पथि । द्वारदेशे तु संप्राप्ते दद्यात्पाद्यं च कौतुके ॥ ४५ ॥

—कर्मार्चादीनां स्थाननिर्देशः—

कर्मार्चामर्चनापीठे नृसूक्तेन निवेशयेत् । उत्सवाद्यर्थबिम्बानि पार्श्वयोर्विनिवेशयेत् ॥ ४६ ॥
कर्मार्चां स्थापयेद्ब्राह्मे वामे तु मुखकौतुकम् । तीर्थं स्नपनबिम्बं वा उत्तरे स्थापयेद्गुरुः ॥ ४७ ॥
शयनोत्थानबिम्बं च बलिबिम्बं च दक्षिणे । लौहिकीं लोहजं बिम्बं स्थापये[1]दिष्टभूमिषु ॥ ४८ ॥
धारावशिष्टं यत्तोयं तच्छरावे विनिक्षिपेत् । शलकामात्रया चैव धारयाऽच्छिद्रया पुनः ॥ ४९ ॥

1. म. विष्णु.

परितः परिषेकं च विदध्यान्मूलविद्यया । धान्यराशिषु कुम्भाँश्च विन्यस्यावाहयेद्धरिम् ॥ ५० ॥
आवाहनं मूलबेरात्कर्माद्यर्चासु कल्पयेत् । मुहूर्ते शोभने प्राप्ते देशिकः कमलासन ॥ ५१ ॥
पुरतो मूलबेरस्य बद्धपद्मासनस्थितः । प्राणानायम्य शुद्धात्मा ध्यायेद्ब्रह्म सनातनम् ॥ ५२ ॥

—ध्यानप्रकारः—

वासुदेवमजं शान्तमुज्वलं सन्ततोदितम् । अनादिमध्यनिधनमेकं [1]चाप्यचलं [2]स्थिरम् ॥ ५३ ॥
चिद्घनं परमानन्दं तमसः परमव्ययम् । ज्ञानशक्तिबलैश्वर्यवीर्यतेजःसमन्वितम् ॥ ५४ ॥
आपादपाणिमस्पृश्यमचक्षुःश्रवणादिकम् । सर्वत्र करवाक्पादं सर्वतोऽक्षिशिरोमुखम् ॥ ५५ ॥
गतागतविनिर्मुक्तं रविकोटिसमप्रभम् । चैतन्यं सर्वगं नित्यं व्योमातीतं तदद्भुतम् ॥ ५६ ॥
चित्सामान्यं जगत्यस्मिन्मूल[3]मन्त्रात्मकं परम् । एवंविधं सदा विष्णुमाह्लादं प्रणवात्मकम् ॥ ५७ ॥
तंनियुज्य महाविष्णुं मतं विष्णौ [4]निवेशयेत् । विष्णुं च हृदये पद्मे समावाह्यार्चयेत्क्रमात् ॥ ५८ ॥
समावाह्य श्रिया पश्चान्मंत्रेण पुरुषात्मना । अञ्जलिस्थे ततः पीठे ध्यायेद्विश्वात्मना गुरुः ॥ ५९ ॥
तेजोनिदानमध्येयं नारायणमजं विभुम् । निवृत्तिमन्त्रमुच्चार्य प्रतिमायां निवेशयेत् ॥ ६० ॥
ब्रह्मरन्ध्रेण मार्गेण प्रविष्टं प्रतिमाकृतौ । व्याप्य स्थितं स्मरेत्सर्वं मन्त्रेण कमलासन ॥ ६१ ॥

—कुम्भगतशक्तीना देवे योजनम्—

महाकुम्भगतां शक्तिं देवेन सह योजयेत् । मूर्तिकुम्भगताँश्चापि तथा बाले च कौतुके ॥ ६२ ॥
या शक्तिस्तां च देवेन योजयेत्प्रतिमात्मना । ब्रह्मरन्ध्रं च तारेण पिदध्या[5]त्प्रतिमात्मनः ॥ ६३ ॥
आत्मनोऽभिमुखं कुर्यात्पुण्डरीकाक्षविद्यया । प्रणम्य किञ्चिदुत्थाय दर्शयेत्स्वागतं गुरुः ॥ ६४ ॥

—न्यासविभेदः—

मन्त्रन्यासं ततः कुर्यान्मूलमन्त्रेण देशिकः । स्थितिन्यासः स्थितौ कार्यः सृष्टिन्यासस्तथासने ॥ ६५ ॥
शय्यायां संहृतिन्यासः संहारशयनं यदि । सृष्टिन्यासो भवेत्सृष्टिशयने कमलासन ॥ ६६ ॥
भोगे योगे च शयने स्थितिन्यासः प्रशस्यते । विश्वरूपे स्थितिन्यासः यानारूढे लयं भवेत् ॥ ६७ ॥
स्थितिन्यासोऽथवा कार्यः सर्वत्रैवासनादिषु । श्रियादीनां च देवीनां ब्रह्मादीनां तथैव च ॥ ६८ ॥

---

1. म. चाप्य. 2. म. स्थितम्. 3. श्री. मष्टाक्षरं. 4. श्री. विनियोजयेत्. 5. श्री. त्परमात्मनः.

महाकुम्भजलेनैव प्रोक्षयेत्[1]स्वप्नविद्यया । सृष्टिश्च सर्गन्यसनं न्यासो रुद्रस्य संहृतिः ॥ ६९ ॥
श्रियादीनां तथान्येषां षडङ्गन्यासमाचरेत् । महाकुम्भं समुद्धृत्य देशिको मूर्तिपैः सह ॥ ७० ॥
प्रोक्षणं तज्जलैः कुर्याच्चण्डादेरपि तत्क्षणे । बलिपीठे क्षिपेत्तोयं अवशिष्टं गुरुः स्वयम् ॥ ७१ ॥
महानसाग्निकुण्डे च तथाधिश्रवणेषु च । तथा च गार्हपत्याग्निं स्थापयेच्छास्त्रवर्त्मना ॥ ७२ ॥

—सान्निध्यप्रार्थना—

देवपार्श्वं समासाद्य दण्डवत्प्रणमेत् क्षितौ । गाथामुदीरयेदेनां रचिताञ्जलिसंपुटः ॥ ७३ ॥
यजमानेन सहितः प्रह्वस्तिष्ठन् गुरुः स्वयम् । भक्तवत्सल भक्तानामभिप्रेतार्थसाधक ॥ ७४ ॥
प्रार्थये त्वामहं देव मदनुग्रहकाम्यया । सन्निधत्स्व चिरं स्थाने कल्पिते श्रद्धया मया ॥ ७५ ॥
प्रसीद देव देवेश पूजामपि गृहाण मे । ग्रामस्य राज्ञो राष्ट्रस्य प्रजाना[2]मिन्दिरावर ॥ ७६ ॥
देहि पुष्टिं च तुष्टिं च गतिं च परमां तथा । इति विज्ञाप्य देवाय [3]देशिकस्तन्त्रपारगः ॥ ७७ ॥

—यजमानेन भगवते सर्वस्वसमर्पणम्—

मधुपर्कोपचारान्ते गुर्वनुज्ञापुरःसरम् । दद्याद्गोभूसुवर्णादि यथा वित्तानुसारतः ॥ ७८ ॥
देवस्य दक्षिणे हस्ते तोयपूर्वं यथाविधि । भक्तिनम्रेण शिरसा पूजोपकरणानि च ॥ ७९ ॥
आत्मानं पुत्रपौत्रादि दारान् हस्त्यादि वाहनम् । दासीदासं च सर्वस्वं दद्याद्देवस्य पादयोः ॥ ८० ॥
जीवाजीवधनैर्देवो दत्तैराराध्यते यथा । यजमानेन सर्वस्वैः भगवान् पुरुषोत्तमः ॥ ८१ ॥
तथा भागवतं सर्वैर्धनैराराधयेत्सदा । स्थापको देवदेवस्य यः पूर्वो देशिकोत्तम· ॥ ८२ ॥
तेनैवाराधनं कार्यं तद्वंश्यैरपि निर्गुणैः । पूजा [4]प्रीतिकरी सैव देवस्य कमलासन ॥ ८३ ॥
वित्तानुसारतो विद्वान् कल्पयेद्ग्रामसंपदम् । अथवा विभवेनैव यजमानः प्रकल्पयेत् । ८४ ॥
आदौ विभूतिविस्तारो यादृशः परिकल्पितः । सङ्कोचमन्तरेणैव कुर्यात्तादृशसंपदम् ॥ ८५ ॥
देवभृत्यनुसारेण रक्षेद्देवोपजीविनः । न क्लेशयेद्भागवतान् तथैव परिचारकान् ॥ ८६ ॥
प्रतिष्ठान्ते च देवस्य तूर्यैर्नानाविधैरपि । घोषयेत्सर्वतो दिक्षु ब्रह्मघोषैश्च घोषयेत् ॥ ८७ ॥
नृत्तैर्गेयैश्च विविधैः स्तोत्रैर्नानाविधैरपि । तोषयेद्देवदेवेशमुपचारैः पृथग्विधैः ॥ ८८ ॥
चतुर्विधं तथा चान्नं निवेद्य विधिपूर्वकम् । नित्याग्निं च प्रतिष्ठाप्य कुण्डे च [5]चतुरश्रके ॥ ८९ ॥
हुत्वाग्नौ समिदाज्यान्नैः मूलेन प्रणवादिना । पूर्णाहुतिं ततो[6]हुत्वा तत्तदावरणेषु च ॥ ९० ॥

---

1. म. सर्व 2. म. मन्दिरापर. 3. श्री. वासुदेवाय देशिकः. 4. म. प्रीतिकरा सैव. 5. म. चतुरश्रये. 6. म. कृत्वा.

बलिपीठानि संस्कृत्य प्रतिष्ठाप्य यथाक्रमम् । तेषु नित्यं बलिं दद्याद्भूतानां च यथाक्रमम् ॥ ९१ ॥

—बहुबेरविधाने कवाटबन्धननिषेधः—

बहुबेरविधाने तु कवाटं न च बन्धयेत् । *देवर्षिपितरः सिद्धास्स्तुवाना देवयोनयः ॥ ९२ ॥
अर्चन्ति देवं त्र्यहं त्रिरात्रान्ते तु मानवाः । ब्राह्मणांस्तोषयेद्वित्तैः भोजनैश्च गवादिभिः ॥
चतुर्थे दिवसे प्राप्ते स्नपनं परिकल्पयेत् । उत्तमत्रितये [1]वापि मध्यमत्रितयेन वा ॥ ९४ ॥
कलशैः स्नापयेद्देवं चतुः[2]स्थानार्चनं भवेत् । उत्सवं कारयेदन्ते ध्वजारोहणपूर्वकम् ॥ ९५ ॥
आचार्यं पूजयेत्तस्मिन् प्रतिष्ठादिवसे प्रभुः । सुवर्णकुसुमैर्वस्त्रैर्नूतनैरङ्गुलीयकैः ॥ ९६ ॥
केयूरहारवलयैः उपवीतोत्तरीयकैः । क्षेत्रारामगृहैर्वित्तैः जीवाजीवधनैस्तथा ॥ ९७ ॥
दासीदासेन च तथा हस्त्यश्वशिबिकादिभिः । एवं प्रकारैरन्यैश्च तोषयेद् गुरुमात्मवान् ॥ ९८ ॥
आत्मानं पुत्रपौत्रांश्च देवे तद्वन्निवेदयेत् । मातृत्वेन पितृत्वेन बन्धुत्वेन गुरूत्तमम् ॥ ९९ ॥
सखात्मत्वेन संभाव्य प्रणम्य च पुनः पुनः । सहस्रं धेनवो देयाः दक्षिणा गुरवे तदा ॥ १०० ॥
सहस्रनिष्कमथवा दक्षिणा चोत्तमोत्तमा । तदर्धा मध्यमा ज्ञेया तदर्धा चाधमा मता ॥ १०१ ॥
अथवा दक्षिणा देया शतं हेम्नामनुत्तमम् । [3]दशनिष्कमशक्तस्तु तदर्धं पादमेव वा ॥ १०२ ॥
यथावित्तानुसारेण दक्षिणा परिकीर्तिता । कर्मणां कर्षणादीनामङ्गत्वेन यदाहृतम् ॥ १०३ ॥
तदिष्टशिष्टं सकलं गुरोरेव धनं भवेत् । ऋत्विजामपि सर्वेषां तथाम्नायेष्वधीतिनाम् ॥ १०४ ॥
ब्राह्मणानां च विदुषां भक्तानां पुरुषोत्तमे । तथैकायननिष्ठानां द्विषट्क नियतात्मनाम् ॥ १०५ ॥
वासुदेवैकनिष्ठानां निषन्मार्ग[4]विदामपि । यतीनां ब्रह्मचारीणां वनस्थाश्रमवासिनाम् ॥ १०६ ॥
अन्येषां विष्णुभक्तानां अस्मिन्नर्थेऽनुयायिनाम् । [5]विष्णवर्थेनियतानां च सदस्यानां च दक्षिणा ॥
देया गोभू[6]हिरण्यादिरूपा वित्तानुसारतः । कालज्ञानां तथा नृत्तगीतवाद्यादि कुर्वताम् ॥ १०८ ॥
यथार्हं वित्तवासोभिः कुर्यात् तृप्तिं यथेप्सिताम् । गुरुः पात्रं समानीय हेमादिद्रव्यनिर्मितम् ॥ १०९ ॥
प्रक्षाल्य विष्णुगायत्र्या धान्यराशौ स्वमन्त्रतः । देवस्य पुरतः स्थाप्य पूरयेद्गन्धवारिणा ॥ ११० ॥
अष्टाक्षरेणाभिमन्त्र्य षडर्णेन द्विरष्टकम् । पञ्चोपनिषदैर्मन्त्रैरावाह्यात्मगतं विभुम् ॥ १११ ॥
प्रणवेन समभ्यर्च्य गन्धपुष्पाक्षतादिभिः । ततः कर्तारमाहूय विशुद्धं देवसन्निधौ ॥ ११२ ॥

*एते त्रयः अर्धश्लोकाः (92, $92\frac{1}{2}$, 93). श्री. ग्रन्थे न दृश्यन्ते.

1. म. नापि. 2. म. स्थानगत. 3. म. शत. 4. म. निधामपि. 5. श्री. म. विष्णुकर्मरतानां. 6. श्री. सुवर्णा.

तं देवाभिमुखं स्थाप्य प्रणतं विनयान्वितम् । साधितार्घ्यजलात्तस्मात्सार्घ्यतोयं प्रसूनकम् ॥ ११३ ॥

तस्य हस्ते प्रपूर्याथ इमां गाथामुदीरयेत् । त्वया विना न मे किञ्चिन्मां विना तव कस्तथा ॥ ११४ ॥

तस्मान्मामात्मसात्कर्तुं प्रसीद परमेश्वर । भूमौ स्खलितपादानां भूमिरेवाऽवलम्बनम् ॥ ११५ ॥

त्वय्येव प्रतिपन्नानां त्वमेव शरणं विभो । इति विज्ञाप्य देवेशमाचार्यः स्वस्थमानसम् ॥ ११६ ॥

द्वादशाक्षरमुच्चार्य भगवत्पादपङ्कजे । निवेद्य कर्तुरात्मानं सार्घ्यपुष्पपुरःसरम् ॥ ११७ ॥

त्रिकृत्वः प्रणमेद्देवं निवेद्यात्मानमव्यये । स तेनाऽनुगृहीतः सन् संयायाद् गुरुणा बहिः ॥ ११८ ॥

—गुरुपूजा—

नमस्कृत्वा गुरुं देवं कृतकृत्येन चेतसा । [1]तं गुरुं यानमारोप्य तूर्यघोषपुरःसरम् ॥ ११९ ॥

नीत्वा प्रदक्षिणं ग्रामं स्वगृहे सन्निवेशयेत् ।

—देवप्रतिष्ठायाः फलम्—

य इत्थं स्थापनं कुर्याद्देवदेवस्य शार्ङ्गिणः ॥ १२० ॥

स याति [2]परमं स्थानमक्षयं कमलासन । पुनाति वंशजांश्चैव पुरुषानेकविंशतिम् ॥ १२१ ॥

निष्कामा ये तु मदने पुरुषाः पुरुषोत्तमम् । स्थापयन्ति फलं तेषामपुनर्भवलक्षणम् ॥ १२२ ॥

सकामानां तु मर्त्यानां [3]पुनरावृत्तिलक्षणम् । स्वर्गादि तत्तद्प्रोक्तव्यमारम्भे [4]तत्तदिष्यते ॥ १२३ ॥

ब्रह्महत्यादिपापाना[5]मन्येषां निष्कृतिर्मता । उपकुर्वन्ति ये मर्त्याः वाङ्मनःकायकर्मभिः ॥ १२४ ॥

आवृत्तिलक्षणं तेषां फलं स्वर्गादिरिष्यते । श्रियादीनां च देवीनां देवेन सह कल्पने ॥ १२५ ॥

नोद्वाहकर्म कर्तव्यं पृथक् चेत्स्थापनं [6]तयोः । उद्वाहकर्म शास्त्रोक्तं कुर्यादङ्कुरपूर्वकम् ॥

भक्तिशक्तिवशाद्देवं यथावित्तानुसारतः । यथा च स्थापना भक्तैः सा स्मृता[7]ऽनुग्रहा इति ॥ १२७ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मसंहितायां क्रियापादे प्रतिष्ठाविधिर्नाम

अष्टाविंशोऽध्यायः ।

—:※:—

1. श्री. देशिकं. 2. श्री. ब्रह्मणः. 3. श्री. फलमावृत्ति. 4. श्री. यद्यदिष्यते. 5. श्री. मन्येषा.
6. श्री. तथा. 7. म. नुग्रहा.

# एकोनत्रिंशोऽध्यायः ॥

—<s>मीनादि दशमूर्तिप्रतिष्ठाविधिः</s>—

श्रीभगवान्—

मीनादि दशमूर्तीनां अधुना स्थापनं प्रति । विशेषः कथ्यते ब्रह्मन् उपस्थानादिलक्षणः ॥ १ ॥

—मीनमूर्तिः—

साम्ना च वारुणेनैव सूक्तेन पुरुषात्मना । स्थापयेन्मीनवपुषं वासुदेवमनामयम् ॥ २ ॥

आवाह्य तस्मिन् देवेशं उपतिष्ठेत मन्त्रवित् । मीनात्मने नमस्तुभ्यं वेदरक्षाविधायिने ॥ ३ ॥

प्रलयार्णवदुर्वारवारिपूरविहारिणे । वारुणेनैव सूक्तेन तथाष्टाक्षरविद्यया ॥ ४ ॥

स्थापयित्वा महाकुम्भं तस्मिन्नावाहयेद्धरिम् । उपतिष्ठेत कर्मान्ते गाथया वक्ष्यमाणया ॥ ५ ॥

तुभ्यं नमस्क्रियां कुर्मः कूर्मरूपाय वेधसे । धारिणे मन्दरस्याद्रेः विबुधानन्ददायिने ॥ ६ ॥

—वराहमूर्तिः—

स्थापयित्वा च वाराहीं मूर्तिमावाहयेद्धरिम् । क्रोडात्मने नमस्तुभ्यं यज्ञ[1]रूपाय वेधसे ॥ ७ ॥

दंष्ट्राग्रविधृताशेषधारिणे धरणीधर ।

—नृसिंहः—

नृसिंहरूपिणं देवं स्थापयेद्देशिकोत्तमः ॥ ८ ॥

[2]युञ्जीतेत्यनुवाकेन समावाह्य जनार्दनम् । गाथामुदीरयेदेनां कर्मान्ते देशिकोत्तमः ॥ ९ ॥

निशातनखदम्भोलिदलितासुरवक्षसे । दर्शिताश्रितवात्सल्यनृसिंहवपुषे नमः ॥ १० ॥

—वामनः—

[3]युञ्जन्तीत्यनुवाकेन स्थापयित्वा च वामनम् । तस्मिन्नावाह्य देवेशमुपतिष्ठेत देशिकः ॥ ११ ॥

बलिद्विषे नमस्तुभ्यं [4]यज्ञरूपाय वेधसे । वामनाय महामायावञ्चिताशेषमानव ॥ १२ ॥

—जामदग्न्यः—

जामदग्न्यं नृसूक्तेन स्थापयित्वा जनार्दनम् । गाथया चोपतिष्ठेत प्राञ्जलिः प्रणतः स्थितः ॥ १३ ॥

---

1. श्री. म. देहाय. 2. श्री. युञ्जते. 3. श्री. युञ्जते. 4. श्री. परित्रातबलद्विषे.

त्रिःसप्तकृत्वः क्षत्राणां निहन्त्रे तिग्मतेजसे। नमस्तुभ्यं भगवते परश्वथविधारिणे ॥ १४॥

—श्रीरामः—

रामं च सह वैदेह्या सहितं लक्ष्मणादिभिः। स्थापयेत्कालभेदेन यद्वा स्थापनमाचरेत् ॥ १५ ॥

रामं पुरुषसूक्तेन स्थापयित्वा यथाविधि। गाथया चोपतिष्ठेत रामं रघुकुलोद्भवम् ॥ १६ ॥

नमस्तुभ्यं भगवते राघवाय महात्मने। रावणादिजगद्वैरिनिबर्हणमहौजसे ॥ १७॥

राममूर्तिं प्रतिष्ठाप्य परिवारात्मना ततः। वाय्वादिदेवतनयान् हनूमत्प्रमुखान् पुनः। १८॥

तत्तद्देवाः [1]समभ्यर्च्य स्थापयेत्तद्वदेव तान्। विभीषणं गुहं चैव [2]पृथगेव हि देवताः १९॥

स्थापये [3]द्विश्वमन्त्रेण रामप्रीतिकरावुभौ। भरतं कल्पयेत्प्राच्यां दक्षिणे जानकीं पुनः ॥ २० ॥

प्रतीच्यां जाम्बवन्तं च उत्तरे लक्ष्मणं तथा। सुग्रीवं चाग्निकोणे तु नैर्ऋत्यां तु विभीषणम् ॥ २१ ॥

वायव्ये तु नलं न्यस्येत् ऐशान्ये शत्रुमर्दनम्। [4]वसिष्ठाद्यृषिमुख्यानां द्वितीयावरणे[5]स्थितिः ॥ २२ ॥

तृतीयावरणे पश्चाल्लोकपालान् प्रकल्पयेत्। विष्वक्सेनपदे नीलं गुहं वा तत्र कल्पयेत् ॥ २३ ॥

*स्थाने खगाधिराजस्य हनूमन्तं प्रकल्पयेत्। राघवस्यार्चनायां तु विशेषोऽयं प्रकीर्तितः ॥ २४॥

खगेशं मारुतिं वापि लिखित्वा ध्वजमुद्धरेत्। उत्सवे तु [6]विशेषोऽयमीरितः कमलासन ॥ २५ ॥

—बलरामः—

रामस्य रौहिणेयस्य प्रतिष्ठा च यथापुरम्। उपस्थाने विशेषोऽस्ति श्रूयतां स च कथ्यते ॥ २६ ॥

बलिने बलभद्राय [7]हलस्फुरितबाहवे। तुभ्यं मूलेव महती [8]भूमिर्येन शिरोद्धृता ॥ २७ ॥

—श्रीकृष्णः—

वसुदेवसुतस्यापि स्थापनं वासुदेववत्। वृष्णिवर्याय कृष्णाय नमस्तुभ्यं मधुद्विषे ॥ २८ ॥

भूभारभूतकंसादिमहासुरनिघातिने। सत्यभामादिदेवीनां स्थापनोद्वहनादिकम् ॥ २९ ॥

श्रीभूम्योरिव कर्तव्यं विशेषोऽस्ति न कश्चन।

—कल्किः—

कल्किविष्णुप्रतिष्ठापि यथापुरमुदीरिता ॥ ३० ॥

1. श्री. समावाह्य. 2 श्री. पृथक् युगपदेव वा. 3. श्री. स्वस्त्र. 4. म. वसिष्ठप्रमुखास्सर्वे. 5. म. स्थिताः. *[एष अर्धश्लोकः. म. ग्रन्थे न विद्यते.] 6 म. विशेषोऽयं कथितः. 7. म. नमश्शेषं महाभये. 8. म. धरा.

उपतिष्ठेत कर्मान्ते गाथया स्तुतिरूपया ।
म्लेच्छाना[1]मपि संहर्त्रे साधूनां स्थितिहेतवे । नमस्तुभ्यं भगवते भूसुरान्वयजन्मने ॥ ३१ ॥

—मीनादिमूर्तीना षोडशन्यासनिषेधः—

नेष्यते षोडशन्यासो मीनादिदशमूर्तिषु ॥ ३२ ॥
शिलामयादिमूर्तीनां वर्णैश्चित्रविधिर्यदि । जलाधिवासमनाद्युक्तं कृत्वा सर्वमशेषतः ॥ ३३ ॥
निर्मिते चित्रकरणे कुर्यादावाहनादिकम् । ध्रुवबिम्बस्थितेः पश्चात्कर्माद्यर्चास्थितिर्यदि ॥ ३४ ॥
सिद्धान्तभेदबिम्बानां पृथक्छयनमिष्यते । अभेदे वेदिका शय्या सहैव स्याच्चतुर्मुख ॥ ३५ ॥
नेष्यते षोडशन्यासो लोहजे जङ्गमे पुनः । आवाहनं मूलबेरात्कर्माद्यर्चासु कल्पयेत् ॥ ३६ ॥
कर्मार्चां स्थापयेद्ब्रह्मन् याम्ये तु [2]मम कौतुकम् । [3]तीर्थस्नानादिबिम्बं वा उत्तरे स्थापयेद् गुरुः ॥
शयनोत्थानबिम्बं च बलिबिम्बं च दक्षिणे । लौकिकं लोहजं बिम्बं स्थापयेदिष्टभूमिषु ॥ ३८ ॥
[4]यद्वोद्वहनबिम्बानि स्थापयेद् द्वारपार्श्वयोः । मण्डपे वाऽभिषेकार्थे दक्षिणाभिमुखानि च ॥ ३९ ॥
जलाधिवासने साक्षाद्योग्यानां चतुर्मुख । चित्राभासार्धचित्रादिप्रतिमानां यथायथम् ॥ ४० ॥
छायाधिवासनं कुर्यात्स्नानं चादर्शमण्डले । वेद्यां शयनमन्येषां कूर्चद्वारेण कल्पयेत् ॥ ४१ ॥
अवशिष्टं यथापूर्वं सकलं परिकल्पयेत् । नेष्यते षोडशन्यासश्चतुर्थस्नपनं तथा ॥ ४२ ॥

—वटपत्रशायी—

मायामयमहावृक्षन्यग्रोधदलशायिनः । देवस्य स्थापनविधौ विशेषः कथ्यतेऽधुना ॥ ४३ ॥
[5]गर्भोदवसितद्वारि लिखित्वोपरि वारिधिम् । तत्र न्यग्रोधवृक्षस्य दले कोमलरूपिणम् ॥ ४४ ॥
शयानं बालवपुषं श्यामल [6]कमलेक्षणम् । मार्कण्डेयं महीं देवीं कारयेत्पादपार्श्वयोः ॥ ४५ ॥
एवं विलिखिते बाले बालपर्यङ्कशायिनि । चित्राभासोक्तविधिना स्थापयेद्गुरुरात्मवान् ॥ ४६ ॥
देवेन देव्यौ युगपत्प्रतिष्ठायां यथापुरम् । सहैव शयनं वेद्यां कालभेदे तु तत्पृथक् ॥ ४७ ॥

—कुण्डभेदाः—

कुण्डं सरसिजाकारं प्राच्यां चापं तु दक्षिणे । वृत्तं तु पश्चिमे भागे योन्याकारमुदक्तथा ॥ ४८ ॥

---

1. म. मुपसंहर्त्रे. 2. म. मुख. 3 श्री, म. तीर्थस्नपनबिंबं च. 4. श्री. म. यद्वोत्सवार्थ.
5. म. गर्भोदरस्थितद्वारि. 6. म. कोमलेक्षणम्.

कुण्डे विशेषः कथितः स्नपनं च तयोः पुनः ।

—श्रियादयः—

श्रीसूक्तेन श्रियं देवीं भूसूक्तेन भुवं तथा ॥ ४९ ॥

स्नापयेदर्चनं चापि तयोस्ताभ्यां च शाययेत् । प्रागादितोरणे पूज्या बलाकिन्यधिदेवता ॥ ५० ॥

[1]वनमालिन्यथो तत्र समाराध्य विभीषिकाम् । शाङ्करी देवता पश्चात् द्वारकुम्भेष्वनुक्रमात् ॥

देवताद्वन्द्वयजनं [2]प्रतिष्ठादीन् समर्चयेत् । प्रथमं तदनु श्रद्धां कान्तिं च तदनन्तरम् ॥ ५२ ॥

क्रियां सृष्टिं च पश्चात्तु क्षमां वृद्धिं च देवताम् । प्राच्यादिषु पताकासु देवताद्वन्द्वमर्चयेत् ॥ ५३ ॥

धृतिं च लज्जां च पुरो जया [3]मायाद्वयं ततः । सावित्रीं च क्षमां च द्वे [4]शुद्धां श्रद्धामनन्तरम् ॥

लक्ष्मीः सरस्वती चैव [5]पुष्टिस्तुष्टिश्च शक्तयः । प्रागादिहोमकुण्डेषु होतव्याः प्रोक्तवर्त्मना ॥ ५५ ॥

वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च । प्रह्वी सत्या तथा ब्राह्मी यष्टव्याः कलशेष्विमाः ॥

महाकुम्भे श्रिय देवीं यजेत कमलासन । षोडशन्यासरहितं शेषं प्राग्वत्समाचरेत् ॥ ५७ ॥

अस्वातन्त्र्ये विधिर्ह्येष स्वातन्त्र्ये त्वभिधीयते । ग्रामे वा नगरे वापि [6]पट्टणे वालयेऽपि वा ॥ ५८ ॥

श्रियः स्थानं विधातव्यं ग्रामाद्यभिमुखं यथा । तुष्टिं पुष्टिं च सावित्रीं वाग्देवीं च चतुर्मुख ॥ ५९ ॥

विमानस्य चतुर्दिक्षु दिङ्मूर्तीः परिकल्पयेत् । कोणेषु वैनतेयं वा सिंहं वापि यथारुचि ॥ ६० ॥

दिव्ये भागेऽथवा ब्राह्मे [7]प्रतिच्छायां शिलादिभिः । स्थापयेत्परिवारांश्च द्वारपार्श्वे यथाक्रमम् ॥ ६१ ॥

चण्डीं चैव प्रचण्डीं च प्रथमद्वारपार्श्वयोः । ततोऽर्धमण्डपद्वारे दक्षिणे च बलाकिनीम् ॥ ६२ ॥

वनमालामुदीचीने गोपुरे प्रथमे पुनः । विभीषिकां शाङ्करीं च दक्षिणोत्तरपार्श्वयोः ॥ ६३ ॥

द्वितीयगोपुरद्वारे शङ्खपद्मनिधी उभे । तृतीये गोपुरद्वारे नलकूबरजृम्भलौ ॥ ६४ ॥

चतुर्थे गोपुरद्वारे दक्षिणे शिबिकुण्डलौ । उत्तरे माणिभद्रं च कल्पयेत्कमलासन ॥ ६५ ॥

जया च विजया चैव पश्चिमद्वारपालिके । सुमुखीं स्थापयेद्विष्वक्सेनस्थाने चतुर्भुजाम् ॥ ६६ ॥

वेत्रहस्तां दक्षिणेन तर्जनीं चापि कुर्वतीम् । अपराभ्यां धारयन्तीं पद्मं पीतनिभं तथा ॥ ६७ ॥

स्थापयेद्वैनतेयं च प्रासादमुखमण्डपे । आदिमूर्तेरिव भवेत् परिवारप्रकल्पनम् ॥ ६८ ॥

अन्यासामपि देवीनां स्वातन्त्र्ये विधिरीदृशः । चतुर्थस्नपनं कुर्यादुत्सवं चापि देववत् ॥ ६९ ॥

---

1. म. वनमालिन्यथस्तत्र. 2 म. ज्येष्ठा विन्यासमर्चयेत्. 3 म. मायां तथैव च. 4 म. श्रद्धा शुद्धा. 5 म. तुष्टिः पुष्टिश्च. 6. म. पत्तने. 7. श्री. प्रतिष्ठाया.

देवीनां च श्रियादीनां इत्थं यः स्थापको नरः। सर्वान् कामानवाप्नोति परत्रेह च मोदते ॥ ७० ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मसंहितायां क्रियापादे मीनादिप्रतिष्ठाविधिर्नाम
एकोनत्रिंशोऽध्यायः ॥

——:o:——

# त्रिंशोऽध्यायः ॥

—श्रियादीनां पाणिग्रहणविधिः ॥—

श्रीभगवान्—

अथ श्रियादिदेवीनां पाणिग्रहणमुच्यते। सर्वकल्याणजननं सर्वदुःख [1]विनाशनम् ॥ १ ॥
आयुर्वृद्धिकरं नृणां अभिप्रेतार्थ [2]साधकम्। यथोक्तदिवसे कुर्यादङ्कुराणां समर्पणम् ॥ २ ॥
उद्वाहदिवसे प्राप्ते मुहूर्ते देशिकोत्तमः। पृथक् देवस्य देव्याश्च बध्नीयात्कर्मकौतुकम् ॥ ३ ॥
[3]आच्छाद्यानाहतक्षौमं सोत्तरीयं प्रसाधितम्। आरोप्य शिबिकां ग्रामं प्रादक्षिण्येन तां नयेत् ॥ ४ ॥
वैवाहिकं च सदनमालयं वा प्रवेशयेत्। आराध्य देवमर्घ्याद्यैरानीय स्थण्डिलेऽनलम् ॥ ५ ॥
प्रवेश्यान्तर्गृहे देवमासने विनिवेशयेत्। अभ्यर्च्य च हरिं तत्र देवीं नूतनवाससा ॥ ६ ॥
[4]"युवा सु" इति मन्त्रेण परिधाय प्रदक्षिणम्। [5]भूषयेच्च श्रियं देवीं पुष्पैराभरणैस्तथा ॥ ७ ॥
देवीं देवेन युञ्जीत प्रणवेन गुरुः स्वयम्। दद्याच्च देवीं देवाय वारिपूर्वं यथाविधि ॥ ८ ॥
यजमानः सुवर्णोर्वी गवादिसहितां तथा। स्वगोत्रनाम्ना कथितां इमां श्रियमनुत्तमाम् ॥ ९ ॥
ततः पाणिगृहीतां तां देवीं देवं च मन्दिरात्। नीत्वा वैवाहिकं स्थानमुत्तराशामुखो गुरुः ॥ १० ॥
क्रमेणाधारहोमादीन् कुर्याद्विध्युक्तवर्त्मना। समिधं च नृसूक्तेन जुहुयात् षोडशाहुतीः ॥ ११ ॥
चरुणा विष्णुगायत्र्या चतुर्विंशाहुतिर्भवेत्। श्रीसूक्तेन घृतं हुत्वा भूम्याश्च युगपद्यदि ॥ १२ ॥
*उभयोश्च विधातव्यं पृथगेवाङ्कुरादिकम्। उभयोरेककर्तृत्वे प्राप्ते पङ्कजसंभव ॥ १३ ॥
तत्रापि पृथगेवाभ्यां वैवाहिकमथाचरेत्। एककाले क्रियां तिष्ठेत्पर्यायाद्भिन्नमाचरेत् ॥ १४ ॥
आनुपूर्व्यवशेनैव विभक्तं स्याद्यथा तथा। यद्वा मुहूर्तभिन्ने तु भिन्नं वैवाहिकं भवेत् ॥ १५ ॥

---

1. श्री. विमोचनम्. 2. म. साधनम्. 3. अच्छादिता. 4. युवा सुवासा. 5. भूषणैश्च.

*[एष अर्धश्लोकः म. ग्रन्थे न दृष्टः.]

मुहूर्ते यौगपद्ये चेदानुपूर्व्यात्क्रियां नयेत्। श्रीभूम्योर्भिन्नकर्तृत्वे यौगपद्योद्वहो यदि ॥ १६ ॥
तत्रापि विधिरेवं स्यादुभाभ्यां विधिरेव हि। यौगपद्योद्वहे देवे सकृत्प्रतिसरं भवेत् ॥ १७ ॥
एकाग्नौ वा प्रकर्तव्यं भिन्नाग्नौ वा यथारुचि। उल्लेखनादि प्राक्तन्त्रं प्राक्वलस[1]मकृतं न च ॥ १८॥
प्रतिव्यक्ति क्रियां सर्वां पृथगेव समाचरेत्। पूर्वं श्रियै ततो भूम्यै पर्यायेण क्रियां नयेत् ॥ १९ ॥
समिधो मूलमन्त्रेण जुहुयात् षोडशाहुतीः। चरुणा विष्णुगायत्र्या चतुर्विंशाहुतिर्भवेत् ॥ २० ॥
घृत पुरुषसूक्तेन भूमिसूक्तेन वा पुनः। लाजहोमं तथा वह्नेः प्रदक्षिणमनुक्रमात् ॥ २१ ॥
कृत्वा सर्वमशेषेण लाजशेषं गुरुः स्वयम्। प्रणवेन सकृद्दुत्वा पञ्चवारुणिकैस्ततः ॥ २२ ॥
पञ्चोपनिषदैर्मन्त्रैर्द्वादशाक्षरविद्यया। पूर्णाहुत्यन्तमखिलं कृत्वा विप्रांश्च तोषयेत् ॥ २३ ॥
अर्घ्याद्यैरर्चयेद्देवं घृतारोपणमाचरेत्। घृतं दूर्वाङ्कुरं पात्रे चन्दनं शालितण्डुलम् ॥ २४ ॥
कराभ्यां सर्वमादाय सर्वे चैव समासदः। देवस्य देव्याश्चाङ्गेषु क्षिपेयुरिति मङ्गलम् ॥ २५ ॥
घृतं सुशोभनमिति सिञ्चेयुः पादयोस्ततः। कट्यां सुभद्रमित्युक्त्वा मूर्ध्नि चैव सुमङ्गलम् ॥ २६ ॥
एवं दूर्वादिसकलं क्षिपेयुरनुपूर्वशः। मधुपर्कं प्रदद्याच्च रसेनास्मीति चोच्चरेत् ॥ २७ ॥
लक्ष्मीपतिं च हाराद्यैरलङ्कारैः प्रसाधयेत्। माल्यानुलेपनैश्चापि यथार्हैरपि पूजयेत् ॥ २८ ॥
धेनुं च दद्याद्धरये यजमानः प्रणामवान्। आचार्याय यथावित्तं प्रदद्यादात्मनः प्रियम् ॥ २९ ॥
नीराजनविधावन्ते निक्षिपेद्दिक्षु पिण्डिकाः। अन्यच्च मङ्गलं सर्वं कुर्याल्लौकिकवर्त्मना ॥ ३० ॥
श्रीभूमिसहितं देवं कुर्याद् ग्रामप्रदक्षिणम्। आरोप्य मण्डपे देव्यौ देवं राजवदाचरेत् ॥ ३१ ॥
महाहविर्निवेद्यान्ते ब्राह्मणानपि भोजयेत्। दिवसे दिवसे कुर्यात्स्नानपूर्वकमुत्सवम् ॥ ३२ ॥
चतुर्थ्यापररात्रे तु शेषहोमं समाचरेत्। समिदाज्यचरुप्रायैरष्टोत्तरशताहुतीः ॥ ३३ ॥
जुहुयान्मूलमन्त्राभ्यां पञ्चोपनिषदैरपि। दिने तु पञ्चमे देवं तैलेनाभ्यञ्जयेद्धरिम् ॥ ३४ ॥
श्रीभूमिसहितं देवं स्नापयेद्विधिपूर्वकम्। महाहविर्निवेद्यान्ते ग्रामे कुर्यान्महोत्सवम् ॥ ३५ ॥
तत्र श्रीभूमिसहितं प्रत्यहं मन्दिरेऽर्चयेत्। देवीनामितरासां च विवाहविधिरीदृशः ॥ ३६ ॥
जामदग्न्यादिदेवीनां विवाहः स्मार्तवर्त्मना।

—मण्डपादिप्रतिष्ठाविधिः—

विवाहमण्डपादीनां प्रतिष्ठाविधिरुच्यते ॥ ३७ ॥
प्रासादस्याग्रतः पृष्ठे पार्श्वयोर्वा यथारुचि। वेदिं कुर्याच्चतुर्हस्तां हस्तोच्छ्रायां मनोहराम् ॥ ३८ ॥

1. म. मसकृन्निव.

कुण्डानि परितो वेद्या अष्टौ चत्वारि वा पुनः। तोरणद्वारकलशध्वजादीनि यथापुरम्॥ ३९॥
कृत्वा दिङ्मूर्तिनयनान्युन्मील्य च यथाविधि। आशामूर्ति विमानं च दर्पणे स्नापयेद्गुरु.॥४०॥
राजा चेद्यजमानः स्यात्पात्राणि कलशानि च। हैमराजतताम्राणि यद्वा कार्याणि नान्यथा॥४१॥
ब्राह्मणादिषु वर्णेषु यजमानेषु पद्मज। मृण्मयान्यपि पात्राणि यथाविभवविस्तरम्॥ ४२॥
वासोभिः शोभनैर्धामच्छादयेदहतैस्ततः। वेदिमध्ये विनिक्षिप्य शालिभारान् यथोदितान्॥ ४३॥
तण्डुलाँश्च तिलान् सर्वान् पूर्वोक्तपरिमाणकान्। उपरिष्टाच्च विन्यस्य महाकुम्भं हिरण्मयम्॥ ४४॥
मूर्तिकुम्भाँश्च परितस्तन्मयानष्ट निक्षिपेत्। हेमनिष्कप्रमाणं च प्रतिकुम्भं विनिक्षिपेत्॥ ४५॥
नवरत्नं च सूत्रादिवेष्टितेषु यथायथम्। अर्चयित्वा च तानष्टमङ्गलानि विनिक्षिपेत्॥ ४६॥
मूर्तिहोमं च जुहुयान्महाकुम्भे निवेदनम्। चतुर्विधस्य हविषः तथान्यदपि पूर्ववत्॥ ४७॥

—मन्दिराङ्गाना ध्यानप्रकारः—

शोधिते सदने तस्मिन् शोषणालेपनादिभिः। ध्यायेद्रत्नस्थलं धाम तप्तहेमविनिर्मितम्॥ ४८॥
तत्र जीवमपि ध्यायेद्व्यापकं तदुपाधिकम्। बुद्धिं च पिण्डिकां पादान् अहङ्कारं तथैव च॥ ४९॥
पादौ पादशिलाजङ्घे गर्भगेहं तथोदरम्। स्तम्भान् बाहून् कटिंचापि तथैव कटिमेखलाम्॥ ५०॥
जिह्वा कर्णं तथा नेत्र प्रतीपद्याश्च मेहनम्। अपानं जलनिर्याणं नासिका नासिका [1]मता॥ ५१॥
गवाक्षमक्षि ग्रीवा च ग्रीवान् स्कन्धान् कपोलकौ। शिरश्च कलशं मांसं प्रलेप स्पर्शनं सुधाम्॥
अस्थीनि च शिलान्तस्थाः स्नायुर्दारुशिखाध्वजान्। केशरोमाणि कूर्चं च ध्यायेद्धाम पुमाकृतिम्॥
हुत्वा हुत्वा च शक्तीनां न्यसनं सदने हरेः। पूर्णशक्तिं प्रकृत्याख्यामुपाने हि विनिक्षिपेत्॥५४॥
शान्तिं जगत्यां कुमुदे पृथिवीं तदनन्तरम्। वागीश्वरीं गले चैव पट्टिकायां [2]मतिं तथा॥ ५५॥
पञ्चाङ्गकल्पने शक्तिन्यसनं समुदाहृतम्। द्वादशाङ्गे तु सदने शक्तिं कीर्त्यभिसंज्ञिताम्॥ ५६॥
महत्यां पट्टिकायां च गले पुष्टिमनन्तरम्। महीं च वाजने वेद्यां तुष्टिं सृष्टिं तथाऽङ्घ्रिषु॥५७॥
मायात्मिकां कपोतेषु भूतमालासु मोहिनीम्। द्वादशाङ्गे विमाने तु शक्तिन्यास उदाहृतः॥ ५८॥
अष्टादशाङ्गसदने हरेः संप्रति कथ्यते। कूटे न्यसेन्महालक्ष्मीमपरे वसुधां तथा॥ ५९॥
[3]शिलायां च महीशक्तिं प्रस्तरे चातिमोहिनीम्। स्वाहां वेद्यां श्रियं धाम्नि शक्तिन्यासेऽयमीरितः॥
शान्तिहोमादिमकलं कर्म कार्यं यथापुरम्। दिङ्मूर्तीनां च सर्वासां तत्तन्न्यासादि पूर्ववत्॥ ६१॥
ब्राह्मणानां सहस्राणि शतं वाऽपि यथा बलम्। भोजयेद्भुक्तवद्भ्योऽपि तेभ्यो दद्याद्धनादिकम्॥

1. म. तथा. 2 म. रतिं 3. म. शालाया.

विमानपट्टिकायां तु पञ्चविंशतितन्तुभिः । बध्नीयात्कौतुकं दिक्षु धाम्नः चतसृषु क्षिपेत् ॥ ६३ ॥

—महाकुम्भप्रोक्षणम्—

बलिं यथापुरं ब्रह्मघोषैर्दिक्षु च घोषयेत् । ततः प्रभातसमये मुहूर्ते शोभने गुरुः ॥ ६४ ॥
महाकुम्भं समुद्धृत्य प्रादक्षिण्येन मन्दिरम् । नीत्वा दक्षिणतः कुम्भं स्थापयित्वा समाहितः ॥ ६५ ॥
उदङ्मुखो गुरुर्भूत्वा शक्तिं कुम्भजले स्थिताम् । विमाने मूलमन्त्रेण विनिवेश्य चतुर्मुख ॥ ६६ ॥
दिङ्मूर्तीः स्वस्वमन्त्रैश्च प्रोक्षयेत्कुम्भवारिभिः । अन्येषामपि देवानां धाम स्थानं यथाविधि ॥ ६७ ॥
प्रोक्षयेत्कुम्भतोयैश्च विद्यया च स्वया स्वया । प्रासादं पूजयेत्पूर्वं दिङ्मूर्तीश्च यथातथम् ॥ ६८ ॥
निष्ठितायां प्रतिष्ठायां प्रासादस्य यथाविधि । आचार्याय शतं निष्कं तदर्धं पादमेव वा ॥ ६९ ॥
दद्याच्च दक्षिणामन्ते यथावित्तानुसारतः । यजमानो महीं पश्चात्सहस्रं स्वर्णदक्षिणाम् ॥ ७० ॥
उत्तमां गुरवे दद्यान्मध्यमां तु तदर्धकाम् । अधमां पादमात्रं तु मूर्तिपानपि तोषयेत् ॥ ७१ ॥
धनैर्वस्त्रादिभिश्चैव मनः प्रह्लादकारणैः । भूसुरानितरांश्चापि तोषयेद्भोजनादिभिः ॥ ७२ ॥
एवं यः स्थापयेद्विष्णोः विमानं फलनिःस्पृहः । तस्य मुक्तिः करतले स्थिता नैवात्र संशयः ॥
फलकामनया यस्तु स्थापयेद्धाम वैष्णवम् । तस्य संपत्तिरतुला मनोरथपथातिगा ॥ ७४ ॥
मण्डपस्थापनायां तु वेदिनिर्माणपूर्वकम् । क्रियाविशोधनाद्यन्तं कृत्वा निरवशेषतः ॥ ७५ ॥
प्रासादस्थापनोक्तेन वर्त्मना देशिकोत्तमः । मण्डपं विश्वकर्मीयं सर्वरत्नपरिष्कृतम् ॥ ७६ ॥
सौवर्णैर्बहुभिः स्तम्भैः [1]नानारत्नपरिष्कृतैः । [2]उत्तम्भितं गुरुर्ध्यात्वा शक्तिन्यसनमाचरेत् ॥ ७७ ॥
उपानं प्रकृतिः शक्तिः जगती च वसुन्धरा । वप्रा चैव क्रिया शक्तिः ग्रीवा वागीश्वरी मता ॥७८॥
प्रीतिः कम्पं तथा तुष्टिः कुमुदं पट्टिका क्षमा । स्तम्भपादशिला ब्राह्मी शक्तिः स्तम्भाश्च वैष्णवी ॥
पोतिका कमला शक्तिः उत्तरा शान्तिरिष्यते । रतिश्च वाजनं माया मदीया कमलासन ॥ ८० ॥
कीर्तिर्मता वर्णपट्टिः तथा कम्पश्च मोहिनी । तुला पद्मा तथा शान्तिः शक्तिः सोपानपङ्क्तयः ॥
चतुर्षु मण्डप[3]द्वार्षु तोरणानि समर्चयेत् । शान्तिहोमादिकं सर्वं कथितं कमलासन ॥ ८२ ॥
ततः प्रभाते कुम्भस्थाः शक्तीस्तन्मण्डपे गुरुः । न्यस्य व्यापकरूपेण मण्डपं चिन्तयेत्ततः ॥ ७३ ॥
चित्राणि चित्राभासानि तत्स्थानि घटवारिणा । प्रोक्षयेत्स्वेन मन्त्रेण सर्वन्यस्य यथापुरम् ॥ ८४ ॥
गुरवे दक्षिणां दद्याद्यजमानो यथापुरम् । मण्डपस्थापनं यस्तु करोति मधुविद्विषः ॥ ८५ ॥

---

1. श्री. नवरत्नविराजितम् । 2. श्री. उत्तमं तं. 3. म. द्वारि.

स भुक्त्वा विपुलान् भोगान् इह लोके परत्र च । मोदते देवदेवस्य प्रासादमणिमण्डपे ॥ ८६ ॥

—आस्थानमण्डपादिप्रतिष्ठाविधिः—

आस्थानमण्डपादीनां प्रतिष्ठाविधिरुच्यते । वास्तुयागो बलिश्चैव गव्यैः पञ्चभिरुक्षणम् ॥ ८७ ॥
पर्यग्निकरणं चैव तथा पुण्याहवाचनम् । स्थापनं चैव कुम्भस्य [1]अग्नौ चैकत्र चाहुतिः ॥ ८८ ॥
मुहूर्ते प्रोक्षयेत्पश्चात्सद्यो वा सकलं चरेत् । शतनिष्कं तदर्धं वा दक्षिणा परिकीर्तिता ॥ ८९ ॥
फलं च पूर्ववत्कर्तुः किञ्चिन्न्यूनं चतुर्मुख । प्रतिष्ठा गोपुरस्यापि मन्दिरस्येव नाऽन्यथा ॥ ९० ॥
प्राकारस्य प्रतिष्ठायां कृत्वा सर्वं यथापुरम् । [2]धर्ममन्त्रेण कुम्भस्थवारिणा प्रोक्षयेद् गुरुः ॥ ९१ ॥
शतं तदर्धं पादं वा स्वर्णनिष्काणि दक्षिणा । बलिपीठस्य निर्माणं स्थापनं चाधुनोच्यते ॥ ९२ ॥
गर्भगेहसमायामविस्तारा बलिपीठिका । तदर्धा तत्तुरीया वा पञ्चसंख्यांशकाऽपि वा ॥ ९३ ॥
यद्वा नवस्यैकभागा यद्वा हस्तवशाद्भवेत् । एकहस्ता वरा पञ्च परमा वा यथाबलम् ॥ ९४ ॥
विस्तारद्विगुणोत्सेधा त्रिगुणाऽर्धाधिकाऽपि वा । विस्तारतुल्योच्छ्राया वा पञ्चाङ्गपरिकल्पना ॥
कपोतभूतहंसादिमालिकाभिरलङ्कृता । त्रिधा कृत्वाग्रविस्तारं भागाभ्यां पङ्कजं भवेत् ॥ ९६ ॥
पीठकोणेषु गरुडान् सिंहान् वा परिकल्पयेत् । विघ्नराट् तस्य जनकः पक्षिराट् कन्यकाऽपि च ॥
यथाक्रमेण भागादिदिक्षु तन्मूर्तयः स्मृताः । सोपानपङ्क्तयः पार्श्वे कल्पनीया यथोन्नतिः ॥ ९८ ॥
गोपुरद्वारविस्तारस्त्रिगुणा वा चतुर्गुणा । बहिः पुरस्ताद् द्वारस्य बलिपीठस्य कल्पनम् ॥ ९९ ॥
वास्तुहोमादिकं सर्वं शान्तिहोमावसानिकम् । क्रियाकलापमाचार्यः कुर्यान्मन्दिरवत्क्रमात् ॥ १०० ॥
प्रभातसमये प्राप्ते मुहूर्ते शोभने गुरुः । कुम्भस्थवारिभिः पीठ प्रोक्षयेन्मूलविद्यया ॥ १०१ ॥
*देवताश्चैव तत्रस्थाः प्रोक्षयेदात्मविद्यया । प्रोक्षयेत्कर्णिकां चापि समस्तेत्यादिविद्यया ॥ १०२ ॥
अष्टानां कुमुदादीनां स्वैःस्वैरनुचरैः सह । प्रार्थयेत सदा तत्र सन्निधिं मन्त्रपूर्वकम् ॥ १०३ ॥
पीठमेवं प्रतिष्ठाप्य कुर्यान्नित्योत्सवं पुनः । गुरवे दक्षिणा देया शतनिष्कावरात्मिका ॥ १०४ ॥
एवं यः स्थापयेत्पीठं विष्णुभूतालयं परम् । सर्वदुःखविनिर्मुक्तः प्राप्नोति परमं पदम् ॥ १०५ ॥

—बलिपीठप्रतिष्ठा—

बलिपीठप्रतिष्ठां च वक्ष्यामि कमलासन । तस्योत्सेधं समुद्दिष्ट गर्भागारं समन्ततः ॥ १०६ ॥
आयतं विस्तृतं वापि गर्भागारस्य मध्यमे । उत्सेधे दशभागे तु सप्तांशं समुदाहृतम् ॥ १०७ ॥

1. म. चाग्नावेकत्र चाहुतीः । 2. श्री. बल.

*अयं श्लोको श्री ग्रन्थे दृश्यते.

सप्तविंशतिभागे तु विभक्ते तु समुच्छ्रये । द्व्यंशं पादुकं ज्ञेय जगती चतुरंशिका ॥ १०८ ॥
त्र्यंशं कुमुदं ज्ञेयं एकांश पट्टिका भवेत् । षड्भागं कर्णमित्युक्तं द्व्यंशकं गलकम्पयोः ॥ १०९ ॥
चतुरंशैर्विभागश्च वंशैश्चैवात्र वर्तिका । द्व्यंशार्धं पद्मपुष्पन्तु एकार्धं पद्मकर्णिका ॥ ११० ॥
एवं सम्यग्विदित्वा तु भागे भागे विनिर्दिशेत् । त्र्यंशहस्तप्रमाणेन त्रिहस्ता चाधिकापि वा ॥
पञ्चहस्ताधिकं वापि गोपुरात्प्राग्विधीयते । मध्ये भूतं च कर्तव्यं चतुस्तालप्रमाणतः ॥ ११२ ॥
सुखासीनमिदं श्रेष्ठं परावृत्तं च कारयेत् । अनिरुद्धाय वृषदे वत्सरायेति हूयताम् ॥ ११३ ॥
[1]तथावक्त्रसहस्ताय चामुण्डाय तथैव च । न न्यायेति वरायेति चोदराय ततः परम् ॥ ११४ ॥
तथैवोदरबन्धाय नाडिभ्यामिति वै पुनः । [2]वसुश्चैव च वास्तुभ्यो वास्तुमुष्काय वै पुनः ॥ ११५ ॥
प्रजनाय जरित्रिभ्यः श्रोणीभ्यामिति वै पुनः । तटाकाय च वंशाय वंशधारिभ्य एव च ॥ ११६ ॥
प्रजापतय इत्युक्त्वा धृष्णवेति च भूतयः । शुकाय शुकवासिभ्यः ऊरुभ्यामिति चोच्चरन् ॥ ११७ ॥
सिराभ्यश्चास्थिबन्धेभ्यो मुखेभ्यश्चेति हूयताम् । साक्षिभ्यो जानुमूलेभ्य जानुमूलेभ्य इत्यपि । ११८ ॥
गुल्फेभ्यश्चैव पार्ष्णिभ्यः [3]वरणेभ्यस्तलेऽपि वा । पादाङ्गुलिभ्यः पादेभ्यः चरणाग्रतलाय च ॥
तलायोर्ध्वतलायेति त्वग्भ्यः स्वाहेति हूयताम् । त्वगासिभ्यश्च हुत्वा तु जुहुयाच्च ततः परम् ॥
रोमकूपेभ्य इत्युक्त्वा प्रसेभ्यो रसदाय च । रक्ताय रक्तवासिभ्यो मेदसे च तथा पुनः ॥ १२१ ॥
जीवाय वास्तुने चैव अस्थिमज्ञाय वै पुनः । जुहुयान्मत्तवासिभ्यो उत्तमाङ्गाय वै पुनः ॥ १२२ ॥
धाता वै चैव धातुभ्यो धातुरूपेभ्य इत्यपि । जुहुयादुपधातुभ्यः पश्चात्वच इति ब्रुवन् । १२३ ॥
सर्वरूपाय ग्रीवाय धनदाय तथाऽऽत्मने । सर्वेश्वराय यज्ञाय पुरुषाय च हूयताम् ॥ १२४ ॥
उपपीठं विना पीठं कर्तव्यं द्विजसत्तम । आमोदं प्राक्पृथग्यष्ट्वा तद्भूतं भुवनात्मकम् ॥ १२५ ॥
प्रमोदं याम्यदिक्पद्मे तद्भूतमनलात्मके । प्रमुखं पश्चिमे पद्मे तद्भूतं स्य ज्जलात्मके ॥ १२६ ॥
उन्मुखं सोमदिग्भागे वायुभूतं तदेव हि । अविघ्नं [4]करणोर्ध्वं तु व्योमात्मकमुदाहृतम् ॥ १२७ ॥
भूम्यन्तरिक्षस्वर्गं च सर्वभूतगुणात्मकम् ॥

## महापीठः

तत्समात्मकमित्युक्तं महापीठं द्विजोत्तम । प्रासादस्य तु विस्तारं यस्तु दण्डमिवोच्यते ॥ १२८ ॥
मूलहर्म्यं समारभ्य षष्ठदण्डसमानतः । दश द्वादशदण्डैर्वा मनुदण्डावसानकम् ॥ १२९ ॥
षोडशैर्द्वादशैर्वापि महापीठं प्रकल्पयेत् । अथवान्यप्रकारेण पीठस्थानं विधीयते ॥ १३० ॥

1. श्री. तथायक्त्रसिहस्ताभ्याः 2. श्री. वसुम्यैश्चैव. 3 म. वरणे. 4. श्री. कर्णिकोर्ध्वं.

त्रितिसाले चतुःसाले पञ्चसालेऽथमध्यमे । महापीठ प्रकर्तव्यं तस्य लक्षणमुच्यते ॥ १३१ ॥
अथवा व्योमहस्तं तु अधमं पीठविस्तृतम् । द्विहस्तं मध्यमं प्रोक्तं त्रिहस्तं श्रेष्ठमुच्यते ॥ १३२ ॥
तद्विस्तर[1] समं तुङ्गं तुङ्ग सप्ताष्टविंशतिः । उपानोच्चं द्विभाग स्याद्षडंशं जगती भवेत् ॥ १३३ ॥
कुमुदोच्चं तु भूतांशं कम्पमेकांशमुच्यते । वेदांशं कण्ठमानं तु ऊर्ध्वकम्पं शिवांशकम् । १३४ ॥
महापट्टी गुणांशं तु द्विभागं वा विशेषतः । वेदांशं पद्मभागं तु द्विभागं कर्णिकोदयम् ॥ १३५ ॥
अथवा कर्णिकोत्सेधं गुणांशं द्विजसत्तम । पद्मोच्चं पद्मभागं तु महापट्टी द्विभागिका ॥ १३६ ॥
उपानोच्चं शिवांशेन शेषं पूर्ववदेव हि । यद्वा पीठोदयं विप्र धरातालं यथा कुरु ॥ १३७ ॥
तदूर्ध्वोपरिमानं तु पीठोच्चान्यंशमुच्यते । अधिष्ठानोक्तमार्गेण वेशनिष्क्रान्तमाचरेत् ॥ १३८ ॥
पद्मतारे युगांशं वा भूतांशं कर्णिकायतम् । पीठाकारं युगाश्रं वा कर्तव्यं मङ्गलाम्बुजम् ॥ १३९ ॥
लोहजं शैलजं वापि इष्टिकामयमेव वा । *अशस्योपरि पीठोच्चमुपपीठोपानत्कुरु ॥ १४० ॥
तदूर्ध्वे तु महापीठं उक्तव्यं सोदयान्वितम् । उपपीठे विनापीठं कर्तव्य स्याद् द्विजोत्तम ॥ १४१ ॥
नेत्रं रसं च भूतं च एकं वेदं च भागिकम् । गुणं वेदं च नेत्र च उपानादिप्रमाणवत् ॥ १४२ ॥
एकवेदगुणं चैव कर्णं चैकं च नेत्रवत् । एकं गुणगणं चैव बलिपीठप्रमाणतः ॥ १४३ ॥
प्रभवस्याग्रतः कुर्यात् प्रासादात्मप्रमाणवत् । द्वारस्थानं तदग्रे तु तन्निपातशिवालयम् ॥ १४४ ॥
एते वृषाचलं सर्वं शान्तं वामे तु गोपुरात् ।

## —बलिपीठम्—

अथ वक्ष्ये विशेषेण बलिपीठस्य लक्षणम् ॥ १४५ ॥
लिङ्गोदयसमं श्रेष्ठ तदर्धं कन्यसं भवेत् । तयोर्मध्येऽष्टधा कृत्वा नवमानं प्रकीर्तितम् ॥ १४६ ॥
अथवा पिण्डिकोत्सेधं कन्यसं पीठविस्तृतम् । तत्तारमध्यमं ज्ञेयं तन्नाळं चोत्तमं स्मृतम् ॥ १४७ ॥
*तदर्धमधमं ज्ञेयं तयोर्मध्येऽष्टभाजिते । नवधा पीठविस्तारः उत्सेधस्ततसमो भवेत् ॥ १४८ ॥
अथवा द्वारविस्तारमधमं पीठविस्तृतम् । द्विगुण मध्यमं प्रोक्तं त्रिगुणं चोत्तमं भवेत् ॥

---

सुधया चेष्टकाभिर्वा नानाचित्रैर्विचित्रिम् । भूतेभ मकरैर्व्यालैः वृषभैश्चपि भूषिताम् ॥
नानावर्णैर्वैचित्रैर्वा भूषयेत् हेमराजतैः । पीठव्यासेतु षटसप्तवसुनन्दाशकेपि वा ॥
* [ एतौ द्वौश्लोकौ श्री ग्रन्थे एव दृश्येते ]

1. म. समुत्तुंगं.

* [ अथवा गर्भगेहार्धं उत्तम पीठविस्मृतः । एष अर्धश्लोकः श्री. ग्रन्थे दृश्यते ]

अथवा द्वारतुङ्गार्धं कन्यसं पीठविस्तृतम्। त्रिपादं मध्यमं प्रोक्तं तत्समं चोत्तमं भवेत् ॥ १५० ॥
अधमोत्तमयोर्मध्ये नवमानं प्रकीर्तितम्। धरातलसमोत्सेधमधमं पीठविस्तृतम् ॥ १५१ ॥
त्रिगुणं मध्यमं प्रोक्तं तयोर्मध्येऽष्टभाजिते। नवधा पीठतुङ्गं तु विस्तारं तत्समं भवेत् ॥ १५२ ॥
त्रिहस्तमुत्तमव्यासमेकहस्तं तु कन्यसम्। द्विकरं मध्यमं ज्ञेयं पीठव्यासं प्रकीर्तितम् ॥ १५३ ॥
पञ्चविंशाङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात्। एकाशीत्यङ्गुलान्तं यत् पीठव्यासः प्रकीर्तितः ॥
उपान बाह्ये विस्तार उत्तमः संप्रकीर्तितः। जगतीबाह्यविस्तारः मध्यमः संप्रकीर्तितः ॥ १५५ ॥
कुमुदान्ते प्रकर्तव्यं विस्तारमधमं स्मृतम्। प्रासादोक्तक्रमेणैव महापीठोदयं तु वा ॥ १५६ ॥
महापीठोदयं सप्तचत्वारिंशद्विभाजिते। पर्वतांशं जगत्युच्चं सप्तांशं कुमुदोच्चयम् ॥ १५७ ॥
शिवांशं कम्पमानं स्यात् इन्द्रभागं गलोदयम्। कम्पतुङ्गं शिवांशं तत्समं त्वम्बुजोदयम् ॥ १५८ ॥
कपोतोच्च तु वेदांशं द्विभाग प्रस्तरोदयम्[1]। सार्धाङ्गं कम्पतुङ्गं स्यात्सार्धषट्कमलोदयम् ॥ १५९ ॥
वेदांश कर्णिकोत्सेध द्विगुणं तस्य विस्तरम्। अथवा पीठतुङ्गं तु पञ्चभागविभाजिते ॥ १६० ॥
एकांशं वेदिकोत्सेधं एकांशं कुमुदोदयम्। शिवांशं कर्णतुङ्गः स्यादर्धांशं पट्टिकोदयम् ॥ १६१ ॥
एकांशं कमलोत्सेधमर्धांशं कर्णिकोदयम्। द्विगुणं तस्य विस्तारं सपादाधिकमेव वा ॥ १६२ ॥
महासनप्रतिष्ठायां वास्तुहोमादिके कृते। कुम्भमेकं प्रतिष्ठाप्य धान्यराशिषु पूर्ववत् ॥ १६३ ॥
समिदाज्यचरुं [2]प्राग्वज्जुहुयान्मूलविद्यया। तत्रस्थदेवतानां तु तत्वन्यासं समाचरेत् ॥ १६४ ॥
ब्राह्मणान् भोजयेच्छक्त्या दद्याच्चैव तु दक्षिणाम्। वेषणाद्यङ्गजातानि क्षालयित्वाऽधिवासयेत् ॥
ततः प्रभातसमये मुहूर्ते शोभने गुरुः। अग्निमीडेति मन्त्रेण चुल्लीष्वग्निं निधापयेत् ॥ १६६ ॥
पचेयुः [3]पाचनादीनि हवींषि परिचारकाः। कुण्डे च नित्यहोमार्थं स्थापयेदग्निमग्निमान् ॥ १६७ ॥
प्रागुक्तेनैव मन्त्रेण पुरस्तान्मन्त्रपूर्वकम्। न्यसेत्कुम्भजलेनैव [4]क्रमाच्चण्डादिदेवताः ॥ १६८ ॥
द्वारे चण्डं प्रचण्डं च क्षेत्रपालं खगेश्वरम्। द्वारस्य दक्षिणे पार्श्वे गणानामपि नायकम् ॥ १६९ ॥
जृम्भलं मणिभद्रं च शिबिं कुण्डलमेव च। द्वारस्य चोत्तरे पार्श्वे पार्श्वेष्वन्येषु च क्रमात् ॥ १७० ॥
प्रासाद द्वारवद्द्वारे लक्ष्म्यादिपरिकल्पनम्। चुल्याश्च वामेतरयोर्धर्माधर्मौ च पृष्ठतः ॥ १७१ ॥
विधातारं तथा दीर्घचुल्यासूभयपार्श्वयोः। धर्माधर्मद्वयं न्यस्येत्पात्राणि सकलान्यपि ॥ १७२ ॥
श्रीसूक्तेनाम्भसा प्रोक्ष्य मङ्गलान्यपि कारयेत्। गुरवे दक्षिणां दद्याद्यजमानो यथाबलम् ॥ १७३ ॥

---

1. म. दरम्। 2. श्री. हुत्वा पायसैर्मूल. 3. श्री. म. पायसादीनि. 4. म. तत्र.

—पाकशालादिकल्पने फलम्—

यः कल्पयेद्रसवतीं भक्तिमान् विष्णुमन्दिरे । स भुक्त्वा विपुलान् भोगान् प्रेत्य स्वर्गमवाप्नुयात् ॥
धान्यागारं धनागारं सारस्वतगृहं तथा । तथा मज्जनशाला च पुष्पपानीयमन्दिरम् ॥ १७५ ॥
ताम्बूलकल्पनगृहं वाद्यस्थानं चतुर्मुख । स्थानं च यच्च धामाङ्गं कल्पितं शिल्पवित्तमैः ॥ १७६ ॥
आचार्यो वास्तुहोमादि शास्त्रोक्तविधिपूर्वकम् । क्रियाकलापमखिलं कुर्यात्पूर्वोक्तया दिशा ॥ १७७ ॥
आचार्यदक्षिणा चैव देया वित्तानुसारतः । वापीकूपतटाकानां प्रतिष्ठाने चिकीर्षिते ॥ १७८ ॥
तेषां पश्चिमदिग्भागे वेदिं कुर्याच्च पूर्ववत् । जलाधिदैवतं हृद्यमल्पकायविनिर्मितम् ॥ १७९ ॥
लोहजैः कलशैस्तत्र स्नापयेद्देशिकोत्तमः । मन्त्रैर्वरुणदैवत्यैः शयने शाययेत्ततः ॥ १८० ॥
तमर्चयेन्महाकुम्भे चतुर्ष्वेकत्र वा पुनः । कुण्डेषु जुहुयान्मन्त्रैस्तद्देवत्यै[1]र्घृतादिभिः ॥ १८१ ॥
वारुणानि च सूक्तानि दिक्षु पाठ्यानि भूसुरैः । प्रभाते शोभने लग्ने शोभिते पूर्ववज्जलैः ॥ १८२ ॥
पुण्याहं वाचयित्वाऽन्ते ध्यायेदमृतवारिभिः । पूरितं तत्तटाकादीन् गुरुरेकाग्रमानसः ॥ १८३ ॥
महाकुम्भजलं तत्र वारुणं च विनिक्षिपेत् । मीनादिजलयोनींश्च लोहजं तत्र निक्षिपेत् ॥ १८४ ॥
गङ्गादिसरितस्तत्र मन्त्रैरावाहयेज्जले । भुक्तेषु ब्राह्मणेष्वर्घैस्तर्पितेषु यथावसु ॥ १८५ ॥
दक्षिणा गुरवे देया दशनिष्कावरा ततः । करोति यस्तटाकादि [2]प्रतिष्ठानं जलाशये ॥ १८६ ॥
स नित्यतृप्तः सुचिरं लोके वसति वारुणे ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मसंहितायां क्रियापादे [3]लक्ष्म्यादिपाणिग्रहण-
विमानादिप्रतिष्ठाविधिर्नाम त्रिंशोऽध्यायः ।

—:o:—

# एकत्रिंशोऽध्यायः ॥

—प्रभादीनां प्रतिष्ठाविधिः—

श्रीभगवान्—

कालान्तरे प्रभादीनां प्रतिष्ठाविधिरुच्यते । जलाधिवासाद्यखिलं कर्म कृत्वा यथापुरम् ॥ १ ॥
ध्यानकाले तु संप्राप्ते ध्यायेद्देवं गुरुः स्वयम् । ज्वालामालासहस्राढ्यां विद्युत्सङ्घातसन्निभाम् ॥ २ ॥
प्रभां ध्यात्वा स्पृशेत्शान्तिहोमान्ते होमसर्पिषा । प्रभाते मूलमन्त्रेण प्रोक्षयेत्कुम्भवारिणा ॥ ३ ॥

1. म. र्यथाविधि. 2. श्री. प्रतिष्ठान्तं. 3. म. लक्ष्म्यादिपाणिग्रहणविधिर्नाम.

मुहूर्ते योजयेच्चापि कारयेच्च महोत्सवम् । दक्षिणा गुरवे देया यथाविभवमानतः ॥ ४ ॥
प्रभायां देवदेव्यादीन् योजयेदुक्तवर्त्मना । स तु सायुज्यमाप्नोति कामानपि यथेप्सितान् ॥ ५ ॥
पीठं संस्थाप्य तत्रैव न्यसेद्योगासनं गुरुः । हुत्वा मन्त्रैः क्रमात्पद्मस्थापने विधिरीदृशः ॥ ६ ॥
योजयेच्चापि पीठादीन् तत्रस्थान् समये गुरुः । एवं पीठादिदेवार्थं यः कल्पयति मानवः ॥ ७ ॥
स प्रतिष्ठामवाप्नोति परत्रेह च शाश्वतीम् ॥

—घण्टाप्रतिष्ठादि—

घण्टां च पञ्चगव्येन स्नापयित्वा यथोदितैः । ८ ॥
पञ्चवारुणिकैर्मन्त्रैर्नववस्त्रेण वेष्टयेत् । स्थण्डिले शालिभारं च निक्षिप्य तिलतण्डुलान् ॥ ९ ॥
तदूर्ध्वे नववस्त्रं च सदर्भं न्यस्य तत्र वै । शाययित्वा च तां घण्टां छादयेन्नववाससा ॥ १० ॥
कुम्भमेकं समभ्यर्च्य कुम्भे वा स्थण्डिलेऽपि वा । घण्टामन्त्रेण जुहुयादाचार्यः समिदादिभिः ॥
शोषणादीनि कार्याणि तान्यथोक्तं विचिन्तयेत् । शान्तिहोमावसाने च स्पृशेत्तां होमर्पिषा ॥१२॥
प्रभाते [1]मन्त्रतोयेन तामुक्षेन्मन्त्रपूर्वकम् । एवं सुसंस्कृतां घण्टां चालयेत्सर्वकर्मसु ॥ १३ ॥
उद्घाटने कवाटस्य प्रस्तुते पूजने तथा । आवाहनेऽर्घ्ये स्नपने पुष्पे धूपेच दीपके ॥ १४ ॥
नीराजने यवनिकासमुद्धारे निवेदने । होमभूतबलौ कर्मण्युद्वाहे चलनं मणेः ॥ १५ ॥
उत्सादनं पिशाचादेः प्रीणनं च हरेः परम् । सन्निधानममर्त्यानां घण्टायाश्चलनाद्भवेत् ॥ १६ ॥
असंस्कृतायाश्चलने ग्रामादेश्चलनं भवेत् । निष्फला चापि पूजा स्यात्परस्य परमात्मनः ॥ १७ ॥
घण्टां प्रयच्छेद्वरये जायते कीर्तिमान्नर । घण्टासंस्कारवद् धूपदीपपात्रस्य संस्कृतिः ॥ १८ ॥
भेर्यादीनां च संशुद्धिः पञ्चगव्यैः प्रशस्यते । रथादियानजातस्य संशुद्धिरियमिष्यते ॥ १९ ॥
मन्त्रेण प्रोक्षणाच्छुद्धिश्चित्रादीनामपीष्यते । सर्वत्र भोजयेद्विप्रान् पुण्याहं चापि कारयेत् ॥ २० ॥
दक्षिणा चापि गुरवे देया वित्तानुसारतः ॥

—अक्षमालाप्रतिष्ठा—

अक्षमालाप्रतिष्ठां च तद्भेदाँश्च [2]यथातथम् ॥ २१ ॥
जपे फलं च सकलमधुना कथ्यतेऽब्जज । सर्वरत्नैश्च लोहैश्च स्फटिकैस्त्रिविधैरपि ॥ २२ ॥
जलजैः स्थलजैर्वापि कारयेदक्षमालिकाः । अक्षास्थिमात्रा मणयः श्रेष्ठाः स्युर्जपकर्मणि ॥ २३ ॥
धात्रीफलास्थिमात्रास्तु मध्यमा कमलासन । बदरास्थिप्रमाणास्तु कनिष्ठा मणयः स्मृताः २४ ॥

1. श्री. म. कुम्भ. 2. यथा तथा.

अष्टोत्तरशतं संख्या मणीनां श्रेयसी भवेत् । तदर्धसंख्या कथिता मध्यमा चरमा पुनः ॥ २५ ॥
सप्तविंशतिसंख्या च तैर्भवेदक्षमालिका । स्वर्गापवर्गदं रत्नं सौवर्णं विभवप्रदम् ॥ २६ ॥
राजतं कीर्तिधनदं ताम्रं शान्तिकरं भवेत् । [1]त्रापुषैर्मणिभिर्जप्यं यक्षांश्चापि वशं नयेत् ॥ २७ ॥
सीसाक्षमालया रक्षो वशेकुर्याच्चतुर्मुख । पीडयेच्च तथा शत्रून् कांस्यैः सर्वान् वशं नयेत् ॥ २८ ॥
आयसैश्चापि भूतानि [2]जापकः स्ववशं नयेत् । स्फटिकं मोक्षदं जप्तुः सर्वदो द्युमणेर्मणिः ॥ २९ ॥
इन्दोर्मणिस्तथैव स्यादक्षाः स्युर्जलजाः पुनः । पुत्रदः पुत्रदीपः स्यात् इन्द्राक्षः सर्वकामदः ॥ ३० ॥
विभीतकाक्ष[3]रुद्राक्षनिम्बाक्षाश्चाभिचारकाः । ब्रह्मवर्चसकामस्य कुशग्रन्थिः प्रशस्यते ॥ ३१ ॥
राज्यकामस्य पद्माक्षैः जप्तुः सिध्यति तद्ध्रुवम् । सिताम्भोजाक्षमाला तु जप्तुर्निःश्रेयसप्रदा ॥
भुक्तिमुक्तिप्रदा शङ्खा मुक्ता भुक्तिफलप्रदा । जलजैर्मणिभिर्माला जप्तुरित्थं फलप्रदा ॥ ३३ ॥
अक्षान्यथोक्तान् संगृह्य वृत्तान् दोषविवर्जितान् । प्रक्षाल्य पञ्चभिर्गन्धैः पञ्चवेदान्तविद्यया ॥ ३४ ॥
आरोपयेद्धेमसूत्रे त्रिगुणेत्रिगुणीकृते । सूत्रे वा राजते क्षौमे शणकेशादिवर्जिते ॥ ३५ ॥
कार्पासे वा यथा लाभं क्षालिते परिशोधिते । पृष्ठेन पृष्ठभागे च मुखभागे मुखेन च ॥ ३६ ॥
परस्परेण संबद्धा मणयः सदृशाः शुभाः । सूत्रेण वा सुवर्णेन मध्ये बन्धे तथान्तरम् ॥ ३७ ॥
प्रोतसूत्रेषु तैः कल्प्या मालिका कटकाकृतिः । मणिमन्यं तु बध्नीयान्मालाग्रन्थौ महत्तरम् ॥ ३८ ॥
मेरुसंज्ञा मणेस्तस्य भवेद्दक्षिणतो गतिः । पुण्याहं वाचयित्वान्ते मालां स्थाप्याम्बुजोदरे ॥ ३९ ॥
विलिप्य कुङ्कुमाद्यैस्तामक्षमालां चतुर्मुख । शालिभारं च निक्षिप्य तिलतण्डुलसंयुतम् ॥ ४० ॥
लिखित्वा तत्र चक्राब्जमास्तीर्य कुशवस्त्रकम् । तत्राक्षमालां विन्यस्य छादयेन्नववाससा ॥ ४१ ॥
यजेत कुम्भे तन्मन्त्रं हेमवस्त्रादिसंयुते । होममेकत्र कुर्वीत कुण्डे वा स्थण्डिलेऽपि वा ॥ ४२ ॥
समिच्चरुघृतैरष्टौ शतं च स्वस्य विद्यया । ध्यानेन शोषणादीनि कृत्वाऽन्यच्च यथापुरम् ॥ ४३ ॥
तन्मध्ये पुरुषं ध्यायेद्बद्धाञ्जलिमवस्थितम् । चतुर्भुजं वलक्षाभं वरदाभयहस्तकम् ॥ ४४ ॥
अक्षमालां च बिभ्राणं शिखाग्रे कटकाकृतिम् । शान्तिहोमावसाने च संस्पृशेदक्षमालिकाम् ॥ ४५ ॥
प्राप्ते मुहूर्ते तत्त्वानि न्यस्येत्सृष्टिक्रमाद्गुरुः । या परा वैष्णवी शक्तिः अभिन्ना परमात्मनः ॥ ४६ ॥
तेजसाऽऽदित्यसङ्काशां प्राग्वत् स्मृत्वा हृदम्बुजे । ध्यायेत्ततो ब्रह्मरन्ध्रादुद्गच्छन्तीं शनैः शनैः ॥
आवाह्य चाक्षमालाया मन्त्रेण स्वेन मन्त्रवित् । मूलमन्त्रेण कुम्भस्थवारिणा प्रोक्षयेद् गुरुः ॥ ४८ ॥
सन्निधिं चाक्षमालायां याचेत परमात्मनः । सन्निधत्तां भवानस्मिन् भक्तानुग्रहकाम्यया ॥ ४९ ॥

1. श्री. त्रापुकै. 2. म. जापकस्य 3. म. निंबाक्षरुद्राक्ष.

जपाक्षमालावलये गाथामेनां समुच्चरन् । तत्राक्षमालां बिभ्राणं ध्यात्वा देवं जनार्दनम् ॥ ५० ॥
शिष्यस्य यजमानस्य हस्ते दद्याद् गुरुः स्वयम् । प्रणम्य प्रतिगृह्णीयात् शिरसा तां समाहितः ॥ ५१ ॥
विद्यामिव यथावित्तं दद्याच्च गुरुदक्षिणाम् । तस्मिन् मुहूर्ते तां विद्यां संजपेदक्षमालया ॥ ५२ ॥
आदौ यमक्षमालायां मन्त्रं स्थापितवान् गुरुः । तमेव मन्त्रं गणयेन्न कथञ्चन मालया ॥ ५३ ॥
अप्रतिष्ठापिता या च [1]तयान्ते वाक्षमालया । जपं कुर्वन्नरो मोहात्कुर्वन्नैवाश्नुते फलम् ॥ ५४ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मसंहितायां क्रियापादे [2]प्रभाघण्टाक्षमाला-
प्रतिष्ठाविधिर्नाम एकत्रिंशोऽध्यायः ।

—·✻·—

## द्वात्रिंशोऽध्यायः ॥

### —गृहार्चाविधिः—

#### —तत्र लोहदार्वादिभेदेन फलम्—

श्रीभगवान्—

गृहार्चास्थापनं वक्ष्ये यथावत्कमलासन । सौवर्णी राजती वापि प्रतिमा स्याद्द्विजन्मनाम् ॥ १ ॥
आरकूटमयी यद्वा यद्वा ताम्रमयी भवेत् । लोहजाः प्रतिमाः सर्वाः सर्वकामफलप्रदाः ॥ २ ॥
*शिलाबिम्बं दारुबिम्बं स्वगृहे नार्चयेद् बुधः । पिशाचादिवशीकारे प्रतिमा चायसी मता ॥ ३ ॥
उच्चाटनकरी कांस्या प्रतिमा कमलासन । त्रिलोहजा शत्रुजयी सीसकोत्थाऽऽमयप्रदा ॥ ४ ॥
रत्नजप्रतिमाः सर्वाः सर्वकामफलप्रदाः । चन्द्रकान्तस्फटिकजा सौम्या प्रतिकृतिर्मता ॥ ५ ॥
आग्नेयी मित्रमणिजा [3]अन्या स्फटिकजा द्विधा । सालग्रामशिला [4]श्वेता सौम्या सौम्यफलप्रदा ॥
श्रीकरी पीतवर्णा च रक्ता कामप्रदा मता । कृष्णा पुष्टिप्रदा नित्यं पिङ्गला रोगदा सदा ॥ ७ ॥
शिलाश्चक्रपरिज्ञाताः सर्वा मोक्षफलप्रदाः । मूर्तिभिर्गर्भिताः सर्वाः शिलाश्चक्रसरिद्भवाः ॥ ८ ॥
प्रादुर्भावैश्च मीनाद्यैस्तथा दिव्यायुधैरपि । लाञ्छिताः कौस्तुभाद्यैश्च भूषणैः कमलासन ॥ ९ ॥
अङ्किताः पूजनीयाश्च भुक्तिमुक्तिफलार्थिभिः । सर्वाः स्वायंभुवा ज्ञेयाः शिलाश्चक्रसरिद्भवाः ॥ १० ॥
नित्यं सन्निधिरेतासु परस्य परमात्मनः । न प्रतिष्ठा विधातव्या न चैवावाहनादिकम् ॥ ११ ॥

1. म. नैवाक्षमालया. 2. म. अक्षमालाप्रतिष्ठाविधिः. 3. म. अन्यापि स्फटिका. 4. म. श्वेतासौ सर्व.

*[म. ग्रन्थे एषः अर्धश्लोकः नास्ति]

सालग्रामशिला यत्र पूज्यते भगवन्मयैः । तद्देशे योजनादर्वाङ् मृतो निर्वाणमश्नुते ॥ १२ ॥
द्वारवत्याः शिलाश्चापि सालग्रामशिलासमाः । द्रुमजातिप्रतिकृतिः सभाज्या कामनावशात् ॥ १३ ॥
प्रतिमा चन्दनमयी पूजिता श्रियमावहेत् । प्रतिमा चागरुमयी भुक्तिमुक्तिफलप्रदा ॥ १४ ॥
देवदारुमयं बिम्बं सर्वदं भवनेऽर्चितम् । बिल्वजा प्रतिमा लक्ष्मीमतुलामावहेत्सदा ॥ १५ ॥
ब्रह्मवर्चसकामेन ब्रह्मवृक्षसमुद्भवा । शमीप्रतिकृतिः स्वर्ग्या नमेरुः सुखदा भवेत् ॥ १६ ॥
अन्नादिकामैः प्रतिमा पूज्योदुम्बरदारुजा । अश्वत्थनिर्मिता पूज्या राज्यकामेन धामनि ॥ १७ ॥
न्यग्रोधनिर्मितं बिम्बं सर्वत्र भवनेऽर्चितम् । प्लक्षजं जीवधनदं सर्वोपकरणावहम् ॥ १८ ॥
प्रियङ्गुनिर्मितं बिम्बं श्रीवश्यं भवनेऽर्चितम् । पुत्रदीपमयं पुत्रकारकं मुक्तिदं तथा ॥ १९ ॥
मन्त्रादिसाधने युक्तां सरलार्चां समर्चयेत् । तमालजातिप्रतिमा सर्वलोकसुखावहा ॥ २० ॥
चूतजाऽऽरोग्यदा पुत्रवित्तदा बदरीकृता । पनस[1]प्रतिमा ब्रह्मन् बहुपुत्रा समर्चिता ॥ २१ ॥
क्षीरिणी धनदा ज्ञेया सफला दुःखनाशिनी । धनदं जातिजं बिम्बं स्पन्दजं सुखकारणम् ॥ २२ ॥
तिमिजं धनदं ब्रह्मन् कदम्बं ज्ञानकारणम् । कुरवः पुष्टिफलदः तिलकः सर्वकामदः ॥ २३ ॥
मधूकः सिद्धिदश्चाहुरसनः श्रीकरः सदा । पुष्टिदो जम्बुवृक्षस्तु पुन्नागः पुष्टिवर्धनः ॥ २४ ॥
रोगदो राजवृक्षश्च खादिरश्चाक्षिनाशनः । निम्बवृक्षप्रतिकृतिः विद्वेषणकरी मता ॥ २५ ॥
विभीतका शाल्मली च कल्प्यते कमलासन । गजोत्पाटितगौरार्कमूलकल्पितकौतुकम् ॥ २६ ॥
वैनायक [2]मभिप्रेतसकलार्थ [3]प्रसाधकम् । मात्राङ्गुलिवशेनैव गृहार्चामानकल्पनम् ॥ २७ ॥
नाधिकं हस्तमानाच्च न न्यूनं द्वादशाङ्गुलात् । कौतुकं भवनेऽभ्यर्च्यं शिलादार्वादिजं ध्रुवम् ॥ २८ ॥
अङ्गुलैः प्रतिमामानं वर्णानामुच्यते क्रमात् । हस्तमानमिताऽर्चा स्याद्भवने पूर्वजन्मनः ॥ २९ ॥
अङ्गुलैरेकविंशत्या प्रतिमा वसुधापतेः । विशामेकोनविंशत्या द्वाभ्यां शूद्रस्य हीनया ॥ ३० ॥
अर्धचित्रं तथाभासं भवने भुक्तिवर्धनम् । द्वादशाङ्गुलमानाऽर्चा लोहजा पूर्वजन्मनः ॥ ३१ ॥
नवाङ्गुला क्षत्रियस्य विशः सप्ताङ्गुला भवेत् । पञ्चाङ्गुला चतुर्थस्य प्रतिमा भवने भवेत् ॥
प्रतिमा यन्मयी क्लृप्ता प्रभापीठादि तन्मयम् । यद्वा सौवर्णबिम्बस्य राजतं ताम्रमेव वा ॥ ३३ ॥
लोहेन चेदुत्तमेन प्रतिमा निर्मिता भवेत् । तदनन्तरलोहेन प्रभापीठादि कल्पयेत् ॥ ३४ ॥
त्रिलोहजायामर्चायां सुवर्णं वा प्रभादिकम् । रत्नस्फटिकजानां तु प्रतिमानां प्रभादिकम् ॥ ३५ ॥
गृहे संहारशयनमर्चयेन्न कदाचन । भगवन्मूर्तयस्त्वन्याः सर्वाः पूज्या यथातथम् ॥ ३६ ॥

---

1. श्री. प्रतिबिम्बं च. 2. म. मभिप्रेत्य. 3. म. प्रसाधनम्.

श्रीभूमीसहितं देवं श्रिया केवलयाऽपि वा । सहितं पूजयेन्नित्यं भक्त्या पद्मनिकेतन ॥ ३७ ॥

—गृहे पूजास्थाननिर्देशः—

पूजास्थानं गृहस्योक्तं [1]मारुत्यां दिशि नान्यथा । अर्चयेद्भवनेष्वर्चां यजमानो यथोदिताम् ॥ ३८ ॥
तत्प्रतिष्ठार्थमाचार्यमभ्यर्च्यागमयेद् गृहम् । अङ्कणे वा नदीतीरे क्षेत्रे यद्वा सुपूजिते ॥ ३९ ॥
वेदिकां परितः क्लृप्ते होमकुण्डचतुष्टये । एकस्मिन् वा गुरुः कुर्यात्प्रतिष्ठाकर्म पूर्ववत् ॥ ४० ॥
अङ्कुरानर्पयित्वाऽग्रे जले चैवाधिवासनम् । नयनोन्मीलनं चापि [2]कुर्यात्पूर्वोक्तवर्त्मना ॥ ४१ ॥
पाद्यमर्घ्यं तथाचामं पञ्चगव्यं तथा दधि । पयो मधु कषायं च उष्णाम्भः फलवारि च ॥ ४२ ॥
मार्जनाम्भोक्षताम्भश्च रत्नाम्भो लोहवारि च । गन्धाम्भश्च यवाम्भश्च क्रमेणाऽनेन पद्मज । ४३ ॥
स्नापयेच्च नृसूक्तेन तथेदं विष्णुरित्यृचा । स्नपनं कारयेद्विद्वान् मन्त्रैः प्रागुक्तवर्त्मना ॥ ४४ ॥
शयनादिकमन्यच्च क्रियाजातं यथापुरम् । महाप्रतिष्ठाविधिवत् कर्म कुर्याद् गुरुः स्वयम् ॥ ४५ ॥
प्रतिमास्थापनस्थाने रत्नन्यासादिपूर्वकम् । प्राप्ते मुहूर्ते प्रतिमां स्थावरां चेदभीप्सिताम् ॥ ४६ ॥
स्थाने तां स्थापयित्वैवं कुर्यादावाहनादिकम् । *जङ्गमा चेदभिमता वेद्यामावाहनादिकम् ॥ ४७ ॥
कुर्यात्तदनु तां स्थाने स्थापयेद्विधिपूर्वकम् । चण्डप्रचण्डौ वलजे क्षेत्रपालं खगेश्वरम् ॥ ४८ ॥
विघ्नेशं वास्तुनाथं च दुर्गां वा तत्र कल्पयेत् । गुहं च विष्वक्सेनं च शङ्खपद्मनिधी तथा ॥ ४९ ॥
आचार्यचोदितो भूमौ पतित्वा दण्डवत् स्वयम् । यजमानः प्रार्थयेत्तमभीप्सितमशेषतः ॥ ५० ॥
दासोऽस्मि तव देवेश सपुत्रगणबान्धवः । सन्निधत्स्व गृहे यावदन्ववायो ममाच्युत ॥ ५१ ॥
पूजां मया यथाशक्ति विहितां विकलामपि । [3]गृहाण भगवन् भक्तजनानुग्रहकाम्यया ॥ ५२ ॥
याचित्वा देवदेवेशमित्थमाचार्यसन्निधौ । गुरवे दक्षिणां दद्याद्यथाविभवविस्तरम् ॥ ५३ ॥
यथा च तृप्तिरस्य स्यात् ऋत्विजामपि पूर्ववत् । ब्राह्मणान् भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ।
स्थापयित्वाऽर्चयेद्देवं भक्तिमान् भक्तवत्सलम् । भुक्त्वा भोगान् सुविस्तीर्णान् प्रेत्य नेहाभिजायते ॥
भवने स्थापितो विष्णुः पुष्णाति कुलमात्मनः । मन्दिरे तु जगत्सर्वं पुष्णाति स्थापितो हरिः ॥ ५६ ॥
श्रीवत्सकौस्तुभोष्णीषवनमालाचतुष्टयम् । प्रधानभूषणं विष्णोः प्रतिष्ठाप्य यथाविधि ॥ ५७ ॥
श्रीवत्सं स्थापयित्वाग्रे [4]शालिभारे सशाटके । निवेश्य प्रलयं सर्गं महाकुम्भं यजेद् गुरुः ॥ ५८ ॥
कुण्डे श्रीवत्समन्त्रेण नलिनाकारकल्पिते । जुहुयात्समिदाधारचरुभिः शतमष्ट च ॥ ५९ ॥

1. श्री. निर्ऋत्यां. 2. म. कृत्वा. 3. म.भगवन् गृहाण भगवन् मदनुग्रहकाम्यया. 4. श्री. शाली तण्डुल.

[1]वागन् न्यसेच्च तत्वानि शान्ति हुत्वा स्पृशेच्चतम् । संप्रोक्ष्य कुम्भतोयेन मुहूर्ते हरिवक्षसि ॥ ६०॥
निवेशयेद्दक्षिणा च देया निष्कत्रयाऽवरा । गुरवे यजमानेन मनःप्रीतिविवर्धिनी ॥ ६१ ॥

—भगवतः अलङ्कारकल्पने फलम्—

यो भूषयति देवेशं श्रीवत्सप्रतिकर्मणा । स लक्ष्मीं लभते नित्यामुत्तमां नाऽत्र संशयः ॥ ६२ ॥
कौस्तुभं स्वेन मन्त्रेण स्थापयित्वा यथापुरम् । हरिमाकल्पयेत्तेन मुहूर्ते देशिकोत्तमः ॥ ६३ ॥
यजमानश्च गुरवे प्रयच्छेद्दक्षिणां शुभाम् । यः कौस्तुभेन देवेशं मण्डयेदश्नुते श्रियम् ॥ ६४ ॥
वनमालां च सौवर्णीं नानारत्नपरिष्कृताम् । स्थापयित्वोक्तमार्गेण मुहूर्ते शोभने गुरुः ॥ ६५ ॥
कण्ठे प्रलम्बयेद्विष्णो सर्वसंपत्करीं नृणाम् । दक्षिणां गुरवे दद्याद्यजमानोऽपि पुष्कलाम् ॥ ६६ ॥
यश्च भूषयति श्रीशं मनुजो वनमालया । सोऽश्नुते दुर्लभान् कामान् सर्वानेव न संशयः ॥ ६७ ॥
प्रेत्य लोकान् सुविपुलान् स्वर्गादीन् सोऽश्नुतेऽक्षयान् । शुद्धजाम्बूनदमयं किरीटं मणि[2]भिश्चितम् ॥
चेतसा भक्तियुक्तेन यथार्हं मधुविद्विषः । कलशैः सप्तदशभिः स्थापयित्वा स्वविद्यया ॥ ६९ ॥
शालिभारेषु विन्यस्य वेष्टयित्वा च वाससा । अहतेन पुनः कुम्भे यजेदावाह्य विद्यया ॥ ७० ॥
जुहुयाच्च चतुर्दिक्षु विद्यया च स्वया गुरुः । स्पृष्ट्वा च शान्तिहोमान्ते प्रभाते कुम्भवारिणा ॥
संप्रोक्ष्य स्वेन मन्त्रेण दत्वा च गुरुदक्षिणाम् । प्राप्ते मुहूर्ते देवेशमासीनं [3]भू०विष्टरे ॥ ७२ ॥
स्नापयेद्राजवद्देवमाराध्य कल्पभूषणैः । ब्राह्मणेषु चतुर्वेदानधीयानेषु [4]सर्वतः ॥ ७३ ॥
नानाविधेषु वाद्येषु चतुर्दिक्षु नदत्सु च । वन्दारुषु च देवेशं स्तोत्रैरुच्चावचैर्भृशम् ॥ ७४ ॥
स्तुवत्सु भक्ति[5]नम्रेषु श्रीभूमिसहितं हरि[6]म् । प्रस्तूयमानेष्वन्येषु मङ्गलेषु [7]समन्ततः ॥ ७५ ॥
* [8]कुण्डेषु पुरतो हुत्वा पूर्ववत्समिदादिभिः । चतुर्दिक्षु चतुर्द्वारि एकाग्रैः कोणतः स्थिते ॥ ७६ ॥
पञ्चोपनिषदैर्मन्त्रैः किरीटं देवमूर्धनि । आरोपयेयुराचार्याः मूर्तिपाश्च विचक्षणाः ॥ ७७ ॥
मुञ्चेयुः पुष्पवृष्टिं च तूर्यघोषपुरःसरम् । महद्भिरुपचारैश्च गुरुणाऽभ्यर्चितं हरिम् ॥ ७८ ॥
ब्राह्मणेभ्यो धनं दत्वा सुखासीनं महासने । यानमारोप्य हस्त्यादि श्वेतच्छत्रविराजितम् ॥ ७९ ॥
वीज्यमानं च गौरेण चामरेण समन्ततः । ग्रामं प्रदक्षिणं नीत्वा मन्दिरे विनिवेशयेत् ॥ ८० ॥

---

1. श्री. क्रमा. 2. श्री. निर्मितम्. 3. श्री. भद्र. 4. म. सर्वगः. 5 म. नम्रेण. 6. श्री. विभुम्. 7. म. नदत्सु च. 8. म. कुण्डे च परतो.

*[वरदारुषु च देवेश स्तोत्रैरुच्चावचैर्भृशम् । इति अर्धश्लोकः म. ग्रन्थे अधिकतया अस्ति 75, 76 श्लोकयोरन्तरे.]

यः किरीटेन देवेशमाकल्पेन प्रसाधयेत् । त्रयाणामपि लोकानामाधिपत्यं स विन्दति । ८१ ॥
[1]हारादिभिर्नूपुरान्तैः भूषणैस्तपनीयजैः । क्षालितैर्गन्धतोयेन द्वादशाक्षरविद्यया ॥ ८२ ॥
धान्यराशिषु संस्थाप्य होमं च समिदादिभिः । स्पृष्ट्वाकल्पं जपेन्मन्त्रं देशिको द्वादशाक्षरम् ॥
मुहूर्ते भूषयेत्तेन देवेशं विद्यया तया । यो भूषयति देवेशं सोऽपि कामान् समश्नुते ॥ ८४ ॥

—पञ्चायुधमानप्रतिष्ठादि—

पञ्चायुधानां दिव्यानां प्रतिष्ठा वक्ष्यतेऽधुना । चक्रस्य तावत्सर्वेषु मुख्यस्य कमलासन ॥ ८५ ॥
वक्ष्यते स्थापनं तस्य मानं रूपं च यादृशम् । विस्तृतं हस्तमानेन यद्वा सप्तदशाङ्गुलम् ॥ ८६ ॥
*अष्टादशाङ्गुलं यद्वा विंशत्यङ्गुलमेव वा । चतुर्दशाङ्गुलं यद्वा षोडशद्वादशाङ्गुलम् ॥ ८७॥
मूलबिम्बाननसमं सहस्रारं समुज्वलम् । यद्वा शतारमथवा चतुर्विंशत्यरान्वितम् ॥ ८८ ॥
द्वादशारमथाष्टारं अथवा षडरं परम् । सहस्रज्वालमथवा षड्ज्वालं नाभिमण्डितम् ॥ ८९ ॥
त्रिलोहनिर्मितं चक्रं नालपीठसमन्वितम् । कृत्वा करण्डमकुटं बिभ्राणं वा सुदर्शनम् ॥ ९० ॥
चतुर्भुजधरं क्रुद्धं भ्रुकुटीकुटिलाननम् । पुरुषं द्विभुजं यद्वा दक्षिणेनापि [2]तर्जनम् ॥ ९१ ॥
स्पृशन्तं कटिमन्येन इतराभ्यां कृताञ्जलिम् । मुख्याभ्यां तु कराभ्यां वै सुस्थितं पद्मविष्टरे ॥ ९२॥
अधिवास्य जले पूर्वं स्थापयित्वा च मण्डपे । शाययित्वा च शयने इष्ट्वा कुम्भे स्वविद्यया ॥ ९३॥
ध्यायन् पुरुषमत्युग्रं द्विभुज रक्तवाससम् । रक्त[3]दंष्ट्रासनं नाभौ संस्थितं गुरुरीदृशम् ॥ ९४ ॥
चतुर्दिक्षु च कुण्डेषु चक्रमन्त्रेण मूर्तिपाः । जुहुयुः समिदाधारं चरुभिः कमलासन ॥ ९५ ॥
कुण्डेष्वेकत्र पुरतः तोरणादीनि पूर्ववत् । अर्चयित्वा ततश्चक्रं शोषयेच्छोषणादिभिः ॥ ९६ ॥
स्पृष्ट्वा तु शान्तिहोमान्ते नाभ्याद्यवयवान् क्रमात् । मुहूर्ते कुम्भतोयेन सिञ्चेदात्मीयविद्यया ॥
चतुर्णामितरेषां च शङ्खादीनां यथापुरम् । प्रतिष्ठापनमाचार्यः स्वैर्मन्त्रैरनुपूर्वशः ॥ ९८ ॥
गुरवे दक्षिणा देया दशनिष्कावरा ततः । पञ्चायुधानि निर्माय यः स्थापयति मानवः ॥ ९९ ॥
स विष्टपत्रये धीमान् न बिभेति कुतश्चन । भुङ्क्ते च भोगान् विस्तीर्णान् मोदते च त्रिविष्टपे ॥
चण्डादिद्वारपालानां प्रतिष्ठाविधिरुच्यते । जलाधिवासनं पूर्वं मण्डपे स्नपनं तथा ॥ १०१ ॥
शय्यायां चापि शयनं कुम्भे चैकत्र पूजनम् । होमश्चतुर्षु कुण्डेषु कुण्डे वैकत्र पद्मज ॥ १०२ ॥

1. म. हारादिनूपुरान्तैश्च. 2. श्री. तर्जयन्. 3. म. दंष्ट्राननं.

*[एष अर्धश्लोकः म. ग्रन्थे लुप्तः.]

[1]तत्त्वन्यासं तथा शान्तिहोमाङ्गस्पर्शनं तथा। प्रोक्षणं कुम्भतोयेन विद्यया च स्वबीजया। १०३ ॥
गुरवे दक्षिणा चापि देया वित्तानुसारतः। चण्डादीन् स्थापयेन्मर्त्यश्चैतत्सारूप्यमश्नुते ॥ १०४ ॥

—वैनतेयादिप्रतिष्ठा—

वैनतेयप्रतिष्ठायां विशेषो वक्ष्यतेऽधुना। प्राच्यां जुह्वन् बृहत्साम्ना [2]सत्यं ध्यायेद् गुरुस्ततः ॥
दक्षिणस्यां सुपर्णं तु सौपर्ण्या विद्यया [3]हुवेत्। प्रतीच्यां गरुडं कुण्डे ध्यायेद्धोमो रथन्तरैः ॥ १०६॥
तार्क्ष्यध्यानमुदीचीने गायत्र्या च स्वयाऽऽहुतिः। पुरस्तादुपरिष्टाच्च [4]शुभं कर्म यथापुरम् ॥ १०७ ॥
स्थापको वैनतेयस्य लभते तत्समीपताम्। आदित्यस्य प्रतिष्ठा च विधातव्या यथापुरम् ॥ १०८ ॥
विशेषस्तूच्यते कश्चिद्यथावदवधारय। आवाहनं स्वगायत्र्या तथा कुण्डेषु चाहुतिः ॥ १०९ ॥
विभ्राडित्यनुवाकेन सावित्र्या स्थापनं तथा। सूर्यस्य मूलमन्त्रेण कुम्भतोयेन [5]सेचनम् ॥ ११० ॥
स्थापकस्तस्य तल्लोके राजते मुक्तकिल्बिषैः। ब्रह्मादीनां च सर्वासां देवतानां यथापुरम् ॥ १११ ॥
स्वातन्त्र्ये पारतन्त्र्ये च स्वैर्मन्त्रैः स्थापनं भवेत्। दुर्गा च मातरः सप्त याः काश्चिद्देवतास्त्रियः ॥
प्रतिष्ठा तासु लक्ष्मीवन्मन्त्रैः स्वैः स्वै [6]र्विशिष्यते।

—विष्वक्सेनोत्पत्तिस्थापनादि—

ब्रह्मा—

विष्वक्सेनस्य भगवन् उत्पत्तिः कारणात्कुतः। स्थापनं च कथं तस्य कथ्यतां यद्यनुग्रहः ॥ ११३ ॥

श्रीभगवान्—

दौवारिकेषु सर्वेषु यश्चण्डः प्रथमो भवेत्। स देवासुरयोर्युद्धे बली दण्डधरः स्वयम् ॥ ११४ ॥
जघान दैत्यान् देवार्थमात्मनाऽभिप्रचोदितः। तस्य तुष्टोऽहमददां मत्स्वरूपसरूपताम् ॥ ११५ ॥
ऐश्वर्यं कुमुदादीनां बलं चाऽप्रतिवारितम्। विष्वक्सेनसमाख्यां च सर्वसेनाधिपोचिताम् ॥ ११६ ॥
नैवेद्यस्य चतुर्थांशं सर्वस्योपहृतस्य मे। चण्डस्य च पदेऽत्युग्रमन्यं स्थापितवानहम् ॥ ११७ ॥
इत्थं ब्रह्मन् तदुत्पत्तिः स्थापनश्च मम सन्निधौ। स्थापनं च स्वमन्त्रेण तस्येष्टं यद्वदात्मनः ॥११८॥
दक्षिणा गुरवे देया स्थापकस्य फलं तथा। प्रतिकायं च भक्तानां कृत्वा स्थापनमाचरेत् ॥११९॥
स्वतन्त्रं वाऽस्वतन्त्रं वा यथालाभं शिलादिभिः। कृताञ्जलिपुटं सौम्यं स्थितमासीनमेव वा ॥१२०॥

---

1 म. तत्त्वन्यासस्त यागादि. 2. म. स्थित्या. 3 म, श्री. हुनेत्। 4. म. शिष्टं.
5. श्री. सेचयेत्। 6. म. र्विधीयते.

यथावर्णं यथारूपं यथाचाश्रमधर्मिणाम् । यथावयोरूपधरं पद्मपीठे प्रतिष्ठितम् ॥ १२१ ॥
कृतलक्षणसंपन्नं शिल्पिभिः सुपरीक्षितम् । यद्वा कर्मानुरूपेण प्रतिकायं प्रकल्पयेत् ॥ १२२ ॥
स्थापयेदङ्कुरानादौ अर्पयित्वा शुभे दिने । अयुग्माः पालिकाः कार्याः शरावघटवर्जिताः ॥१२३॥
अधिवासनमारभ्य पूर्ववत्कर्मपद्धतिः । उपचारस्तथा होमः कुम्भयागश्च सेचनम् ॥ १२४ ॥
परेण ब्रह्मणा कार्यं मन्त्रैश्चान्यैः सुपूजितैः । तोरणादीन् यजेत्पूर्वं न वेदिकलशानपि ॥ १२५ ॥
मुहूर्ते प्रोक्षयेत्कुम्भवारिणा देशिकोत्तमः । स्वातन्त्र्ये मन्दिरं कल्प्यं सिंहदिङ्मूर्तिवर्जितम् ॥
दीक्षागुरोश्च प्रतिमां स्थापयेन्मन्त्रसिद्धये । दक्षिणा गुरवे देया तर्पणीयाश्च भूसुराः ॥ १२७ ॥
अवर्जनीयं सर्वत्र धनैर्ब्राह्मणतोषणम् । पुण्याहवाचनं विप्रैः स्वाध्यायाध्ययनं तथा ॥ १२८ ॥
दक्षिणा च गुरोर्गुर्वी यजमानधनोचिता । एतैर्यथोदितैर्युक्तं हीनमन्येन दुष्यति ॥ १२९ ॥
स्थापनं प्रतिकायानां ब्रह्मन्नैवात्र संशयः । प्रत्यहं चार्चनं तेषां उपचारैः पृथग्विधैः ॥ १३० ॥
कर्तव्यमुत्सवं चापि ध्वजारोहणवर्जितम् । न होमो न बलिस्तीर्थं स्वातन्त्र्ये विधिरीदृशः ॥१३१॥
पारतन्त्र्ये तु भक्तानामुत्सवः कमलासन । देवस्योत्सवमध्ये च प्रक्रान्ते वाथ निर्मिते ॥ १३२ ॥
तस्मिन् कार्ये कृते तस्मिन् प्रीयते हि जनार्दनः । राज्ञो राष्ट्रस्य [1]सर्वस्य ब्राह्मणानां गवामपि ॥
जायते भूयसी संपदुत्सवे विहिते [2]सति । इति ब्रह्मन् क्रियाः सर्वाः कथिताः पृच्छतस्तव ॥
दयया परया भूयः किमन्यच्छ्रोतुमिच्छसि ।

—शास्त्रोपसंहारः—

संवर्तः—

महोपनिषदं शास्त्रं चतुर्वेदसमन्वितम् । संक्षिप्य च [3]शताध्यायापञ्चेन कपिलाच्छ्रुतम् ॥ १३५ ॥
तदेव कण्वः संक्षिप्य श्रद्दधानस्य ते मया । द्वात्रिंशदध्याययुतं शुभं वै सारवत्तरम् ॥ १३६ ॥
*"पञ्चाच्छ्रुतमिदं शास्त्रं तथा पञ्चाह्वयं मतम्" । इदं च देयं परमं रहस्यमनसूयवे ॥ १३७ ॥
श्रद्दधानाय भक्ताय शुचये दीक्षिताय च । ब्राह्मणाय प्रपन्नाय श्रोत्रियाय च धीमते ॥ १३८ ॥
यद्वा ज्येष्ठाय पुत्राय न विद्यामरये वदेत् ॥
नमो ब्रह्मण्यदेवाय श्रीधरायाऽव्ययात्मने । ऋग्यजुः सामरूपाय शतरूपाय विष्णवे ॥ १३९ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाञ्चसंहितायां क्रियापादे संवर्तप्रोक्तायां संहितायां गृहार्चास्थापनविधिर्नाम द्वात्रिंशोऽध्यायः ॥

**क्रियापादः समाप्तः**

---

*[पञ्चादितया शास्त्रं इदं पाञ्चं उदाहृतं तदर्धश्लोकस्थाने एष अर्धश्लोकः श्री. ग्रन्थे दृश्यते.]

1. म. च तथा. 2. श्री. सदा. 3. श्री. शताध्यायं.

